| विषयः | पुटसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|
| निम्बपञ्चाङ्गादिरसायनम् | ३३१ | १२८-१३६ |
| पञ्चाङ्गरसायनम् | ३३५ | १३७-१३८ |
| भल्लातकस्वरस ,, | ,, | १३९-१४० |
| आमलकभल्लातक ,, | ३३८ | १४१-१४३ |
| बेल्लादि ,, | ,, | १४४-१४५ |
| बेल्लादिरसायनान्तरम् | ,, | १४६-१५० |
| विळङ्गादिरसायनम् | ३३[illegible] | राधम् |
| शतावरीसर्पिः (अश्विभ्यां विहितं) | ३३[illegible] | १५१-१६९ |
| भृङ्गराजपल्लवरसायनम् | ,, | १७० |
| समूलभृङ्ग ,, | ,, | १७१ |
| वज्रवल्ली ,, | ,, | १७२-१७३ |
| टङ्कणादि ,, अयस्कान्तम्) | ३३[illegible] | १७४-१७८ |
| व्याधिशमनार्थं देवतापूजनम् | ,, | १७९ |
| पुनर्नवारसायनम् | ,, | १८० |
| चक्रवल्ली ,, | ,, | १८१ |
| ओषधीनां विशेषाः | ,, | १८२ |
| तस्योदाहरणम् | ,, | १८३ |
| रसायनप्रयोगक्रमः | ३४[illegible] | १८४ |
| रसायनविधिभ्रंशजानां रोगाणां प्रतीकारः | ,, | १८५ |
| अग्निबलमवेक्ष्यैव रसायनं प्रयोक्तव्यम् | ,, | १८६ |
| वाजीकरणनिरूपणम् | ,, | १८७-१८८ |
| शुक्रक्षये कारणम् | ,, | १८९-१९३ |
| वाजीकरणप्रयोगे फलम् | ३४१ | १९४ |
| मधुकचूर्णयोगः | ,, | १९५ |
| कुळीरशृङ्गीयोगः | ,, | १९६ |
| स्वयङ्गुप्तागोक्षुरचूर्णयोगः | ,, | १९७ |
| पयस्याकल्कयोगः | ,, | १९८ |
| शतावरीघृतम् | ,, | १९९ |
| शतावरीघृतान्तरम् | ,, | २००-२०२ |
| बस्ताण्डसिद्धयोगः | ,, | २०३ |
| पथ्यद्रव्याणि | ,, | २०४-२०५ |

| विषयः | पृष्ठसङ्ख्या | श्लोकसङ्ख्या |
|---|---|---|
| शष्कुलीप्रयोगः | ३४२ | २०६ |
| विदार्यादिघृतम् | ,, | २०७-२०८ |
| शतावरीघृतम् | ,, | २०९ |
| पुनर्नवादियोगः | ,, | २१०-२११ |
| कामवर्धनी शष्कुलीप्रयोगः | ,, | २१२ |
| बृंहणी गुलिका | ,, | २१३ |
| शतावरीरसायनगुलिका | ३४३ | २१४-२२१ |
| लिङ्गवर्धनयोगाः | ,, | २२२-२२८ |
| वैद्यप्रशंसा | ३४४ | २२९-२४१ |
| कुवैद्यनिन्दा | ३४५ | २४२-२४६ |
| वैद्यपूजनक्रमः | ,, | २४७-२४८ |
| अश्विनोर्महिमानुवर्णनम् | ,, | २४९-२५५ |
| ग्रन्थसमाप्तिः | ३४६ | |

॥ श्रीः ॥

# योगरत्नसमुच्चयः ।

## तृतीयो भागः ।

---

### अथ वन्ध्यादिरोगचिकित्साधिकार एकविंशः

रजोयोनिगतैर्दोषैः पाप्मभिः कर्मभिस्तथा ।
वन्ध्या भवेद्धूर्त्तदुष्टपुरुषश्शुक्रगैर्मलैः ॥ १ ॥

तिलक्षीरिणिकामूलं पिबेदुष्णेन वारिणा ।
अनार्तवा तु या नारी सार्तवा भवति ध्रुवम् ॥ २ ॥

अम्लिकामूलमाहृत्य पिष्ट्वा क्षीरेण पाययेत् ।
नारीणां नष्टपुष्पाणां सद्यो रक्तं प्रवर्तते ॥ ३ ॥

(तन्त्रान्तरे)

वटश्रृङ्गवरीतुरङ्गगन्धाघननादैः सपयः प्रसिद्धमम्भः ।
सुतयत्यचिरेण पीयमानं गुरुणा पङ्क्तिरथाय दत्तमेतत् ॥ ४ ॥

(सारावल्या )

वराश्वगन्धायष्टीनां कषायं हिमसंज्ञितम् ।
ऋतुकाले पिबेन्नारी सा सुतं जनयेद् द्रुतम् ॥ ५ ॥

निम्बकाष्ठस्य धूपेन धूपयित्वा भगं तथा ।
मैथुनं या निषेवेत सा प्रसूयेत मानुषी ॥ ६ ॥

(तन्त्रा-)

पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ।
नासयास्येन वा पीतं वटश्रृङ्गाष्टकं तथा ॥ ७ ॥

(बाहटे)

बीजपूरकबीजानि चूर्णं वा नागकेसरात् ।
पीत्वाज्येनाप्नुयाद्गर्भमृतौ योषिन्नराश्रयात् ॥ ८ ॥

(सिद्धसा-)

---

१. 'चूर्णानि' इति पा-

G. P. T. 2358. 500. 12-1-1118.

अश्वगन्धाकषायं तु मृद्वग्निपरिसाधितम् ।
ऋतुकाले पिबेद्वन्ध्या गर्भसन्धानकृत्परम् ॥ ९ ॥

(चन्द्र०)

छागक्षीरं पिबेन्नारी षण्डकीमूलकल्कितम्[1] ।
ऋतुस्नाताथवा क्षीरे कार्कोटं कन्दमेव वा ॥ १० ॥

उत्पलस्य च कन्दानि बहुमूलास्तथैव च ।
फलानि पुत्रजीवस्य[2] जालानि तु तथैव च ॥ ११ ॥

मधूकस्य च पुष्पाणि सरसीरुहकेसरम् ।
कशेरुकस्य कन्दानि किंशुकस्य फलानि च ॥ १२ ॥

एतानि समभागानि चूर्णयित्वा भिषग्वरः ।
मधुशर्करया युक्तं तच्चूर्णं गुळिकीकृतम् ॥ १३ ॥

त्रीण्येतान्यक्षमात्राणि प्रातःकाले त्र्यहं ततः ।
ऋतुकाले दिने देयं पुत्र्यं परमदुर्लभम् ॥ १४ ॥

आहारं पयसा युक्तं ततो भर्त्तारमाविशेत् ।
तेन पुत्रं प्रसूयेत वन्ध्यायां दृष्टमौषधम् ॥ १५ ॥

(श्लोकालङ्कारे)

मञ्जिष्ठार्त्तिसितावरी द्विरजनी यष्टिः पयस्या वचा
श्रेष्ठादीप्यतुरङ्गगन्धकटुकावीराद्विमेदाबला ।
लोध्रं सोत्पलपत्रजीवककशेर्वम्भोदजीवर्षभं
सञ्चूर्ण्याज्ययुतं लिहेत्सुतकरं शुक्रार्तवार्तिं जयेत् ॥ १६ ॥

(आगस्त्यात्)

मञ्जिष्ठा मधुकोत्पलद्विबृहतीकौन्त्यश्वगन्धा सिता
तिक्तोग्राहिमहिङ्गुदीप्यतरुरुग्यष्टीनिशापद्मकैः ।
सिद्धं भास्करयक्षलोचनवृषाळर्कामृतासातला
शार्ङ्गाष्ठास्वरसेषु गर्भजननं वन्ध्यास्ववन्ध्यं घृतम् ॥ १७ ॥

(तन्त्रान्तरादादाय श्लोकीकृतम्)

---

१. मण्डकीमूलमिति. २. पुत्रजीवो वृक्षविशेषः । गर्भकरः, कुमारजीवः, गर्भद इत्यादयः अस्य पर्यायाः.

शार्ङ्गेष्ठार्काळर्कब्रह्म्यमृतायक्षुद्रग्वृषस्वरसे ।
सिद्धं तुरीयंलवणं साज्यमूतौ गर्भदं स्त्रीणाम् ॥ १८ ॥

(काश्चि-)

मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्करावचाः ।
द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ॥ १९ ॥

पयस्या हिङ्गुकाकोळी वाजिगन्धा शतावरी ।
पिष्ट्वाक्षांशैर्घृतप्रस्थं पचेत् क्षीरचतुर्गुणम् ॥ २० ॥

योनिशुक्रप्रदोषेषु तत्सर्वेषु प्रशस्यते ।
आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम् ॥ २१ ॥

फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत् ।
म्रियमाणप्रजानाञ्च गर्भिणीनाञ्च पूजितम् ॥ २२ ॥

एतत्परञ्च बालानां ग्रहघ्नं देहवर्धनम् ।

(बाह-)

मञ्जिष्ठामधुकं कुष्ठं त्रिफला शर्करा वचा ।
अजमोजो हरिद्रे द्वे हिङ्गुतिक्तकरोहिणी ॥ २३ ॥

काकोळी क्षीरकाकोळी मूलञ्चैवाश्वगन्धजम् ।
जीवकर्षभकौ मेदा रेणुका बृहतीद्वयम् ॥ २४ ॥

उत्पलं चन्दनं द्राक्षा पद्मकं देवदारु च ।
एभिरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ २५ ॥

चतुर्गुणेन पयसा यथावन्मृदुनाग्निना ।
एतत्सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते ॥ २६ ॥

पुत्रान् जनयते वीरान् मेधाविप्रियदर्शनात् ।
वन्ध्या च लभते गर्भं या च कन्यां प्रसूयते ।
या चैवास्थिरगर्भा सा मृतापत्यां च या भवेत् ॥ २७ ॥

एतदेव कुमाराणां सर्वाङ्गग्रहमोक्षणम् ।
धन्यं यशस्यमायुष्यं कान्तिलावण्यपुष्टिदम् ॥ २८ ॥

---

१. बाहटोक्तं सैन्धवाद्यन्तर्गतं सामुद्रं लवणम् ।

ये च कल्याणके प्रोक्तास्ते चापीह गुणा स्मृताः ।
एतत्फलघृतं नाम अश्विभ्यां परिकीर्तितम् ॥ २९ ॥

(कुमारसंहितायाम् )

एतैरेव वरीकाथे सक्षीरं साधयेद् घृतम् ।
पूर्वस्मादधिकं विद्यादेतत्पुंसवनं परम् ॥ ३० ॥

(सारावल्यां)

माञ्जिष्ठाद्यनन्तरमेवमतिदेशः ।

सर्पदष्टा तु या स्वप्ने सा पुत्रं लभते परम् ।
वृषं हस्तिरथं नृत्तं कुङ्कुमागरुचन्दनम् ॥ ३१ ॥

कन्दुकं दर्पणं वीणां मुद्रिकां कण्ठभूषणम् ।
या स्वप्ने लभते सा च सत्पुत्रं समवाप्स्यति ॥ ३२ ॥

(कात्यायनीयात्)

यो भक्षयेद्दण्डबालान् (?) वृथैवापहसेत्परान् ।
स वन्ध्यो मृतपुत्रो वा स्यादित्याह महेश्वरः ॥ ३३ ॥

कृच्छ्रचान्द्रायणे स्यातामत्र साक्षात्प्रतिक्रिया ।
कर्तव्यं पञ्चमीश्राद्धं विष्णुधर्मादिचोदितम् ॥ ३४ ॥

सेवेत सेतुबन्धादितीर्थान्यायतनानि च ।
श्वेतारण्यादिकान्येवमिहामुत्र च मोदते ॥ ३५ ॥

(तन्त्रान्तरे)

शुद्धे शुक्रार्त्तवे सत्वः स्वकर्मक्लेशचोदितः ।
गर्भस्सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ ३६ ॥

मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ३७ ॥

क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥ ३८ ॥

मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ।
ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखान्नुदेत् ॥ ३९ ॥

ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ।
मृजालङ्काररहिता दर्भसंस्तरशायिनी ॥ ४० ॥

---

१. कुङ्कुमं हरिचन्दनम् इति पा०

क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्शनम्।
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥ ४१ ॥
चतुर्थेऽह्नि ततः स्नाता शुक्लमाल्याम्बरा शुचिः।
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत् पुरः पतिम् ॥ ४२ ॥
ऋतुस्तु द्वादशनिशाः पूर्वास्तिस्रोऽत्र निन्दिताः।
एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ॥ ४३ ॥
उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम्।
कर्मान्ते च पुमान् सर्पिःक्षीरशाल्योदनाशितः ॥ ४४ ॥
प्राग्दक्षिणेन पादेन शय्यां मौहूर्त्तिकाज्ञया।
आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ॥ ४५ ॥
सान्त्वयित्वा ततोऽन्योन्यं संवसेतां मुदान्वितौ।
उत्ताना तन्मना योषित्तिष्ठेदङ्गैः सुसंयतैः ॥ ४६ ॥
तथाहि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः।
लिङ्गन्तु सद्योगर्भाया योन्यां बीजस्य सङ्ग्रहः ॥ ४७ ॥
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुबन्धनम्।
हृदयस्पन्दनं तन्द्रा तृट्ग्लानिर्लोमहर्षणम् ॥ ४८ ॥
अव्यक्तः प्रथमे मासि सप्ताहात् कललं भवेत्।
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ४९ ॥
उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक्।
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥ ५० ॥
अतिव्यवायमायासं भारं प्रावरणं गुरु।
अकालजागरस्वप्नकठिनोत्कुटिकासनम् ॥ ५१ ॥
शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम्।
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भि भोजनम् ॥ ५२ ॥
रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम्।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ॥ ५३ ॥
तथा रक्तस्रुतिं शुद्धिं वस्तिमा मासतोऽष्टमात्।

एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ५४ ॥
(वाहटे)

अभ्यङ्गशुद्धयसृक्स्रावबस्तिव्यायामलङ्घनम् ।
वर्जयेद् भूमिशय्याञ्च गर्भिण्यामासतोऽष्टमात् ॥ ५५ ॥
(काश्यपी-)

शिरोविरेचनं नस्यं धूमपानञ्च वर्जयेत् ।
तैलाभ्यङ्गं तथा नस्यं जलूकापातनं त्यजेत् ।
आलेपनमथो वापि षण्मासादूर्ध्वमाचरेत् ॥ ५६ ॥

वातरोगिणीमेरण्डतैलक्षीराभ्यां विरेचयेत् । पञ्चमे मासि षष्ठे मासि पिटकाग्रन्थिविद्रधिशोफरोहिणीहिक्काकासस‌द्यःक्षताहिदष्टेषु भैषिज्यानि कारयेत् । सप्तमे मासि क्षाराग्निनस्तः कर्मभिरुपक्रमेत् ॥

अभ्यङ्गं तरुणे गर्भे मतिमान्न प्रयोजयेत् ।
तैलवीर्याभिभूतो हि गर्भस्थानगतोऽनिलः ॥ ५७ ॥
च्यावयेच्छोषयेच्चापि गर्भमित्येष निश्चयः ।
तस्मादभ्यङ्गमस्यास्तु षण्मासादूर्ध्वमाचरेत् ॥ ५८ ॥
(काश्यपी)

सर्वथा गर्भिणीनामाषष्ठान्मासात्तीक्ष्णौषधपानं प्रतिषिद्धम् । रसेन वा क्षीरेण वावचारयेदातृतीयात् । केवलौषधपानं न विद्यते गर्भे तरुणे नार्याः । गर्भिणी तीक्ष्णौषधव्यवायव्यायामान् वर्जयेत् ॥
(सङ्ग्रहे)

व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ॥ ५९ ॥
(वाहटे)

अथ वमनसाध्ये व्याधावात्ययिके गर्भिण्या वमनद्रव्यचूर्णानुविद्धं शीतमुदकं दद्यात् । विरेचनसाध्येऽन्नपानयुक्तो विरेचनद्रव्यचूर्णो देयः । आस्थापनसाध्ये मधुरवातहरद्रव्ययुक्तो वा बस्तिः । शोणितावसेकसाध्ये शोणितावसेचनं जलूकादिभिः प्रविरळपदमनवगाढं प्रच्छाद्य वा ॥
(कृष्णात्रेयः)

वातलैश्च भवेद् गर्भः कुब्जान्धजलवामनः ।
पित्तलैः खलतिः पिङ्गः श्वित्री पाण्डुः कफात्मभिः ॥ ६० ॥

द्वितीये मासि कललाद् घनः पेश्यथवार्बुदम् ।
पुंस्त्रीक्लीबाः क्रमात्तेभ्यस्तत्र व्यक्तस्य लक्षणम् ॥ ६१ ॥

क्षामता गरिमा कुक्षेर्मूर्च्छाछर्दिररोचकः ।
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥ ६२ ॥

अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ।
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः ॥ ६३ ॥

मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ।
सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम् ॥ ६४ ॥

देयमप्यहितं तस्यै हितोपहितमल्पकम् ।
श्रद्धाविघातात् गर्भस्य विकृतिश्च्युतिरेव वा ॥ ६५ ॥

व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ।
मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ॥ ६६ ॥

सममेव तु मूर्धाद्यैः ज्ञानञ्च सुखदुःखयोः ।
गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ॥ ६७ ॥

यया स पुष्टिमाप्नोति केदार इव कुल्यया ।
चतुर्थे व्यक्तताङ्गानां चेतनायाश्च पञ्चमे ॥ ६८ ॥

षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ।
सर्वैस्सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ॥ ६९ ॥

गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः ।
कण्डूं विदाहं कुर्वन्ति गर्भिण्याः किक्किसानि च ॥ ७० ॥

नवनीतं हितं तत्र कोलाम्लमधुरौषधैः ।
सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ॥ ७१ ॥

चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ।
श्रेष्ठया चैणहरिणशशलोहितयुक्तया ॥ ७२ ॥

अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ।
पटोलनिम्बमञ्जिष्ठासुरसैस्सेचयेत्पुनः ॥ ७३ ॥

दार्वीमधुकतोयेन मृजां च परिशीलयेत् ।
ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ॥ ७४ ॥

तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।
शिशुरोजोनवस्थानान्नारी संशयिता भवेत् ॥ ७५ ॥

क्षीरपेया च पेयात्र सघृतान्वासनं घृतम् ।
मधुरैस्साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ७६ ॥

शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।
शताह्वाकल्कितो वस्तिस्सतैलघृतसैन्धवः ॥ ७७ ॥

तस्मिंस्त्वेकाहयातेऽपि कालस्सूतेरतः परम् ।
वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः ॥ ७८ ॥

शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ।
बहूस्नेहो यवागूर्वा पूर्वोक्तं वानुवासनम् ॥ ७९ ॥

तत एव पिचुश्चास्या नित्यं योनौ निधापयेत् ।
वातघ्नपत्रभङ्गाम्भश्शीतं स्नानेऽन्वहं हितम् ॥ ८० ॥

निस्नेहाङ्गीं न नवमान्मासात्प्रभृति वासयेत् ।
प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ॥ ८१ ॥

पुन्नामदौर्हृदप्रस्नरता पुंस्वप्नदर्शिनी ।
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥ ८२ ॥

पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम् ।
नृत्तवादित्रगान्धर्वगन्धमाल्यप्रिया च या ॥ ८३ ॥

क्लीवं तत्सङ्करे तत्र मध्यं कुक्षेस्समुन्नतम् ।
यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते ॥ ८४ ॥

(बाह-)

बलापलशतार्द्धं स्यात्तस्यार्द्धं चित्रकं भवेत् ।
त्रिकण्टकन्तु तस्यार्द्धं कुलत्थमथ तत्समम् ॥ ८५ ॥

एतं सङ्गृह्य सम्भारं जलद्रोणे विपाचयेत्।
चतुर्भागावशेषं तु कषायं सुपरिस्रुतम् ॥ ८६ ॥

काकोली क्षीरकाकोली जीवकर्षभकावुभौ।
मेदाद्वयसमायुक्तं द्विपलं स्यात् पृथक् पृथक् ॥ ८७ ॥

यष्टिद्विपलिकश्चैव पिष्ट्वा कल्केन संयुतम्।
घृतप्रस्थद्वयं युक्तं क्षीरेण द्विगुणेन च ॥ ८८ ॥

मन्दाग्निना च विपचेद्योपितामसृतं घृतम्।
अनार्तवाश्च या नार्यो योनिशूलेन पीडिताः ॥ ८९ ॥

ऋतुकाले च या नार्यो वस्तिशूलेन पीडिताः।
तासामेव विधातव्यं गर्भस्थापनमुत्तमम् ॥ ९० ॥

प्रथमे गर्भमासे तु बलासिद्धं पयः पिबेत्।
द्वितीये लक्ष्मणासिद्धं तृतीये बृहतीपयः ॥ ९१ ॥

चतुर्थेंशुमतीसिद्धं पञ्चमे चामृतापयः।
षष्ठे निदिग्धिकासिद्धं सप्तमे यवकात्पयः ॥ ९२ ॥

अष्टमे गर्भवृद्ध्यर्थं मोरटक्षीरमेव च।
तटाकशुक्तिमादाय भित्त्वा मांसं जलाढके ॥ ९३ ॥

अर्द्धप्रस्थं क्षिपेन्मांसं पक्त्वा प्रस्थावशोषिते।
चतुष्पलं मांसकल्कं घृतप्रस्थं विपाचयेत् ॥ ९४ ॥

क्षीरद्विगुणसंयुक्तं मृदुना वह्निना पचेत्।
अग्नौ निश्शब्दमादाय पीडयेन्मतिमान् भिषक् ॥ ९५ ॥

गर्भिण्या गर्भवृद्ध्यर्थं पाययेत्प्रातरुत्थितः।
कृशानां बृंहणश्चैव यक्ष्मरोगनिवारणम्
अनेनैव विधानेन शङ्खशङ्खणयोर्घृतम् ॥ ९६ ॥

(वृद्ध-)

गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा।
पुष्पे दृष्टेऽथवा शूले वाह्यान्तः स्निग्धशीतलम् ॥ ९७ ॥
सेव्याम्भोजहिमक्षीरिवल्ककल्काज्यलेपितान्।

धारयेद्धस्तियोनिम्यां आर्द्रार्द्रान् पिचुनक्तकान् ॥ ९८ ॥
पिबेत्कान्ताब्जशालूकबालोदुम्बरवत्पयः ।
शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः ॥ ९९ ॥
पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम् ।
रसैर्वा जाङ्गलैश्शुद्धिवर्जश्चास्रोक्तमाचरेत् ॥ १०० ॥

(बाहट)

उत्पलबलापयस्यागोप्याह्वोशीरसम्भृतं पाथः ।
सक्षीरं परिपीतं गर्भस्रावार्त्तिनुत् सहसा ॥ १०१ ॥
अतितरुणनाळिकेरीकुसुमसदाफलफलाम्बुदकाथः ।
शमयति गर्भस्रावं जलार्द्रिकाक्षरिवृक्षतोयञ्च ॥ १०२ ॥

(काञ्ची-)

शारिबा चन्दनद्राक्षालोध्रोत्पलपयोधरैः ।
सक्षीरैः ससितं वारि गर्भस्रावनिबर्हणम् ॥ १०३ ॥
पद्मकन्दकृतं वारि सक्षीरं पाययेद्वधूम् ।
गर्भस्रावहरं श्रेष्ठं शर्करामिश्रितं निशि ॥ १०४ ॥

(योगमाला)

मधुकं शाकबीजञ्च पयस्यामरदारु च ।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ १०५ ॥
वत्सादनी पयस्या च लता सोत्पलशारिबा ।
अनन्ता शारिबा रास्ना पद्माथ मधुयष्टिका ॥ १०६ ॥
बृहतीद्वयकाश्मर्यक्षीरिश्रृङ्गत्वचो घृतम् ।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ १०७ ॥
शृङ्गाटकं बिसं द्राक्षा कशेरु मधुकं सिता ।
सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥ १०८ ॥
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।
कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात् ॥ १०९ ॥

---

१. साधितमिति पाठः

मूलैश्शृतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे।
नवमे शारिवानन्तापयस्यामधुयष्टिभिः॥ ११० ॥

योजयेद्दशमे मासे सिद्धं क्षीरं पयस्यया।
अथवा यष्टिमधुकनागरामरदारुभिः॥ १११ ॥

(वाहटे)

गोक्षुरं कदलीमूलं क्षीरे पक्त्वा सधान्यकम्।
तत्पिबेद् गर्भशूले तु सदाहे च विशेषतः॥ ११२ ॥

शुण्ठीं बलां च निष्क्वाथ्य गर्भिणी सर्पिषा सह।
तैलेन वा समं पीत्वा गर्भशूलात्प्रमुच्यते॥ ११३ ॥

(काश्य-)

महतः पञ्चमूलस्य कषायं क्षीरसंयुतम्।
पाययेन्न परीक्षेत गर्भशूलहरं परम्॥ ११४ ॥

(योगा-)

पाठा च पिप्पलीमूलं कुष्ठं कटुकरोहिणी।
तत्सिद्धं शर्करायुक्तं गर्भशूले पयः पिबेत्॥ ११५ ॥

(जीवक-)

पञ्चमूलबलासिद्धं सलिलं क्षीरसंयुतम्।
पाययेन्न परीक्षेत गर्भशूलहरं परम्॥ ११६ ॥

बलादारु च यष्टी च बिल्वमूलाग्निमन्थकम्।
सक्षीरं साधितं पीतं गर्भशूलविनाशनम्॥ ११७॥

(तन्त्रा-)

बलानागरचित्राणां पाथः पाठाग्निमन्थयोः।
पीत्वा विमुच्यते साज्यं गर्भिणी गर्भशूलतः॥ ११८॥

बलायास्त्रिफलायाश्च निष्क्वाथो घृतमूर्च्छितः।
गर्भिणीशूलरोगाणां पानमेव विधीयते॥ ११९ ॥

शुण्ठीबिल्वबलाक्वाथं ससर्पिष्कं सरामठम्।
प्रपिबेत्सर्वशूलेषु गर्भिणी हिङ्गुना विना॥ १२० ॥

(सारसंक्षेपः)

काकोळी क्षीरकाकोळी कन्दं नीलोत्पलस्य च ।
समांशं शीततोयेन पिष्ट्वा क्षीरेण पाययेत् ॥ १२१ ॥
पञ्चमे मासि शूलं तु विनश्यति न संशयः ।
काको(ळि?ळ्यादि) गणः क्वाथः शीतः शर्करया युतः ॥
क्षीरेण गर्भं लभते वेदना च प्रणश्यति ।
अथास्याः प्रथमे मासे गर्भे भवति वेदना ॥ १२३ ॥
पद्मकश्चन्दनोशीरं तगरं समभागिकम् ।
शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य पाययेत् ॥ १२४ ॥
एवं न पतते गर्भः स च शूलः प्रणश्यति ।
अथास्याः द्वितीये मास इत्यादि.... ... ...
नीलोत्पलं सशाल्कं शृङ्गाटककशेरुकम् ॥ १२५ ॥
शीततोयेनेत्यादि
अथास्या तृतीये मास इत्यादि ।
काकोळी क्षीरकाकोळी मधुकं चन्दनं तथा ॥ १२६ ॥
शीततोयेनेत्यादि .... .... .... ।
अथास्याश्चतुर्थे इत्यादि .... ... ... ।
गोक्षुरं कदळीमूलं उत्पलं च सनालकम् ॥ १२७ ॥
शीततोयेनेत्यादि .... ... .... ।
अथास्याः पञ्चम इत्यादि ... .... ... ।
काकोळी क्षीरकाकोळीमुत्पलञ्च सनाळकम् ॥ १२८ ॥
शीततोयेनेत्यादि .... ....
अथ षष्ठे मासे इत्यादि .... ....
प्रियाळबीजं मृद्वीकामुत्पलञ्च सकेसरम् ॥ १२९ ॥
शीततोयेनेत्यादि .... ....
अथ सप्तमे मासे इत्यादि .... ....
कपित्थकच्छूरामूलं शर्करालाजसंयुतम् ॥ १३० ॥
शीततोयेनेत्यादि .... ....

अथाष्टमे मासे इत्यादि .... ....
धान्योत्पलश्च पिप्पल्या पद्मकं कासमर्द्दकम् ॥ १३१ ॥
शीततोयेनेत्यादि .... ....

अथ नवमे मासे इत्यादि .... ....
पिप्पल्युशीरकाकोलीद्वयं क्षीरेण पाययेत् ॥ १३२ ॥
शीततोयेनेत्यादि .... ....

अथ दशमे मासे इत्यादि .... ....
उत्पलं मधुसंयुक्तं शर्करालुलितं वधूः ॥ १३३ ॥
शीततोयेनेत्यादि .... ....

अथैकादशे मासे इत्यादि ....
मधुकं पद्मकं चैव सोत्पलञ्च सनालकम् ॥ १३४ ॥
शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य पाययेत्।
एवं न पतते गर्भः स च शूलः प्रणश्यति ॥ १३५ ॥

अमृतोद्भवे अमृतस्वरूपे इमान्यौषधान्यमृतं कुरु भगवति विश्वेश्वरि स्वाहा।

अनया विद्यया मासविहितान्यभिमन्त्र्य पाययेत्।

जीवकी-)

बहूपद्रवशूलार्त्तं गर्भस्रावं विवर्जयेत् ॥ १३६ ॥

(काश्य-)

असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत्।
आमान्वये च तत्रेष्टं शीतं रूक्षोपसंहितम् ॥ १३७ ॥
उपवासो घनोशीरगुडूच्यरलुधान्यकाः।
दुरालभापर्पटकचन्दनातिविषा बलाः ॥ १३८ ॥
क्वथितास्सलिले पानं तृणधान्यानि भोजयेत्।
मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत् ॥ १३९ ॥

(वाहटे)

कुशकाशोरुवूका(शां ? नां) मूलैर्गोक्षुरकस्य च।
दुरालभापर्पटकह्रीबेरघनचन्दनैः ॥ १४० ॥

गुडूच्यातिविषोशीरबलाकट्वङ्गधान्यकैः ।
एभिः क्वाथत्रयो योज्या सामे गर्भपरिस्रवे ॥ १४१ ॥
(भद्रवर्मा)

मृद्वीकाचन्दनोशीरकाकोलीः शर्करायुताः ।
शीताम्बुना पिबेत् गर्भस्रावे सकतकं पयः ॥ १४२ ॥

चन्दनं मधुकं लोध्रं वटशुङ्गं घृतं मधु ।
तण्डुलोदकसंयुक्तं जीवदाने प्रशस्यते ॥ १४३ ॥

रक्तातिसारे पातव्यं शोणितप्रदरेषु च ।
गर्भस्य ध्वंसने नार्याः क्षीरेण सह पाययेत् ॥ १४४ ॥

शर्करोत्पलयष्ट्याह्वलोध्रचन्दनशारिवाः ।
स्रवमाणे स्त्रियं गर्भे पाययेत्तण्डुलाम्भसा ॥ १४५ ॥

शारिवा चन्दनं द्राक्षा लोध्रक्वाथं पयोऽन्वितम् ।
ससितं शीतलं गर्भस्रावारम्भे पिबेद्वधूः ॥ १४६ ॥

जम्बूपल्लवकल्कं तु पिष्ट्वा तण्डुलवारिणा ।
पाययेत्पयसा वापि गर्भस्रावे विशेषतः ॥ १४७ ॥
(सारसं)

पार्श्वद्वये तथा बस्तौ श्रोण्यां कुक्षौ तथैव च ।
उदग्रवेदनात्यर्थं सीदनं हृदयस्य च ॥ १४८ ॥

पाण्डुत्वं नाभिशूलञ्च श्रमोऽथ परिकीर्तिता ।
इत्येतत्स्रंसमानस्य विद्यात् गर्भस्य लक्षणम् ॥ १४९ ॥
(काश्यपी)

आचतुर्थात्ततो मासात् प्रस्रुतेः स्राव उच्यते ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं भवेन्मूढो यावद्द्वादशादिति ॥ १५० ॥
(तत्रैव)

भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् ।
गर्भे भवति रक्तस्य सशूलं दर्शनं भवेत् ।
सेकावगाहनालेपाः शस्यन्ते चातिशीतलाः ॥ १५१ ॥
(सिद्ध)

शतधौतघृताक्तां स्त्रीं तदम्भस्यवगाहयेत् ।
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ १५२ ॥

गर्भकोष्ठविशुद्ध्यर्थमार्तिविस्मरणाय च ।
पेयाममद्यपा कल्के साधितां पाञ्चकौलिके ॥ १५३ ॥

बिल्वादिपञ्चकक्वाथे तिलोद्दालकतण्डुलैः ।
मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ॥ १५४ ॥

लघुरस्नेहलवणो दीपनीययुतो हितः ।
दोषधातुपरिक्लेदशोषणार्थमयं विधिः ॥ १५५ ॥

सञ्जातसारे महति गर्भे योनिपरिस्रवात् ।
वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥ १५६ ॥

उपविष्टकमाहुस्तं वर्धते तेन नोदरम् ।
शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥ १५७ ॥

वाते क्रुद्धे कृशः शुष्येत् गर्भो नागोदरन्तु तत् ।
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १५८ ॥

(वाहटे)

यस्याः कुक्षौ पुनर्ग्लानिः पुनराध्मानमेव च ।
गर्भिण्या दृश्यते नार्यास्तस्यानागोचरं विदुः ॥ १५९ ॥

नाळी रसं न वहति प्रवृद्धे मारुते सति ।
शोषं प्रपद्यते गर्भः सदाल्पे पोषणे सति ॥ १६० ॥

स्पन्दते केवलं गर्भो विवर्णा सा च जायते ।
मासि मास्यार्त्तवं तस्यास्सशूलन्तु प्रवर्तते ॥ १६१ ॥

अङ्गशोषोविपाकश्च कटीपृष्ठग्रहस्तथा ।
सीदतः सक्थिनी चास्याः सततं परिहीयते ।
एवं हि शुष्कं तं विद्यात्तथा चाप्युपविष्टकम् ॥ १६२ ॥

(काश्यपीये)

तयोर्बृंहणवातघ्नमधुरद्रव्यसाधितैः ।

घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ।
लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः ॥ १६३ ॥

रसा बहुघृता देया माषमूलकजा अपि ।
वाकनिल्वं तिलान्माषान् सक्तूंश्च पयसा पिबेत् ॥ १६४ ॥
समेध्यमांसं मधु वा कल्यभ्यङ्गञ्च शीलयेत् ।
हर्षयेत्सततश्चैनामेवं गर्भः प्रवर्द्धते ॥ १६५ ॥
पुष्टोऽन्यथा वर्षगणैः कृच्छ्रात् जायेत नैव वा ॥ १६६ ॥
(वाहटे)

पयस्याशारिवापाठातोयतोयदनागरैः ।
शृतशीतं पिबेद्वारि गर्भिणीज्वरसूदनम् ॥ १६७ ॥
श्रीपर्ण्याश्च गुडूच्याश्च क्वाथं समधुशर्करम् ।
गर्भिणीं पाययेद्वैद्यः सर्वज्वरविनाशनम् ॥ १६८ ॥
मधुकं मधुलोध्रञ्च पयस्या शारिवा बला ।
कषायं क्षीरसंयुक्तं गर्भिणीज्वरनाशनम् ॥ १६९ ॥
गर्भिणीनां ज्वरः कष्टः सर्वव्याधिषु पार्थिव ।
ज्वरोष्मणोपतप्तस्तु गर्भो यात्येव विक्रियाम् ॥ १७० ॥
(तन्त्रा-)

गर्भिणीनामतीसारे सामे श्लेष्मानुगे भिषक् ।
वृक्षकस्य त्वचो मुस्ता दार्वी च सुरदारु च ॥ १७१ ॥
कषायमेषां पातव्यमामातीसारनाशनम् ।
दार्वी च मधुकं मुस्ता श्रीपर्णी शारिवा बला ।
गर्भिणीं पाययेत्क्वाथं अतीसारविनाशनम् ॥ १७२ ॥
(काश्य-)

दुरालभाबलापाठानागराम्बुदसम्भृतम् ।
गर्भिणीं पाययेत्तोयमतीसारेषु सर्वथा ॥ १७३ ॥
सर्वातिसारे गर्भिण्याः धान्याम्लं पाययेद्भिषक् ।
पाचनं ग्राहि तद् विद्याद्दीपनीयं विशेषतः ॥ १७४ ॥
पुनर्नवार्द्रकक्वाथं सक्षीरमनिशं पिबेत् ।
शोफोदावर्त्तगुल्मार्शश्शान्त्यर्थं गर्भिणी निशि ॥ १७५ ॥

---

१. पुनर्नवाक्वाथमिति पाठः.

आर्द्रककाथसंसिद्धं क्षीरं गुळयुतं पिबेत् ।
पिप्पलीचूर्णसंयुक्तं गर्भिणीशोफनाशनम् ॥ १७६ ॥
(तन्त्रा-)

भद्रदारु श्लक्ष्णपिष्टं शोफे मधुयुतं पिबेत् ॥ १७७ ॥
(जीवकी-)

पुनर्नवं धान्यकञ्च वचा कुष्ठं हरीतकी ।
कल्कमालेपनं शोफे गर्भिण्याः कारयेद्भिषक् ॥ १७८ ॥
(काश्य-)

चन्दनं मधुकोशीरं नागपुष्पं फलं तथा ।
दूर्वापत्रं च कालेयं शारिबा तण्डुलीयकम् ॥ १७९ ॥
एष शोफहरो लेपो ऽक्षीरससमायुतः ।
हरीतकी शृङ्गिबेरमजगन्धा वचापि च ॥ १८० ॥
अजशृङ्गी च मञ्जिष्ठा अर्कमूलं पुनर्नवम् ।
श्रेष्ठः शोफहरो लेपो गर्भिणीनां विशेषतः ॥ १८१ ॥
वर्षाभूमूलनिष्क्राथं सघृतं गुळसंयुतम् ।
गर्भिणीं पाययेदेतत् शोफोदावर्त्तनाशनम् ॥ १८२ ॥
(तन्त्रा-)

मधुकोशीरसिद्धं वा द्राक्षामलकसाधितम् ।
पिबेत्क्षीरं यवागूं वा गर्भिणी पित्तरोगिणी ॥ १८३ ॥
(काश्य-)

पृश्निपर्णीबलावाशानिर्यूहो रक्तपित्तनुत् ।
गर्भिण्याः कामलार्तायाः छिन्नरोहासमन्वितः ॥ १८४ ॥

वातरक्तं च शमयेत् कासं श्वासं च नाशयेत् ॥ १८५ ॥
(हिरण्या-)

पिप्पल्यङ्कोलमूलानां अश्वगन्धारसेन च ।
दध्ना च माहिषेणैव गर्भिणीकामलापहः ॥ १८६ ॥
(श्लोकालं-)

हरीतकी वचा शुण्ठी भार्ङ्गी कटुकरोहिणी ।
गुळेन सह संयुक्तं गर्भिणीश्वासकासनुत् ॥ १८७ ॥
चूर्णं वै मरिचानां तु सिताक्षौद्रघृतैस्सह ।
लिह्यात्कासहरं पथ्यं गर्भिणीनाञ्च शस्यते ॥ १८८ ॥

हिङ्गुगैरिकपिप्पलिभार्ङ्गीकर्कटकशृङ्ग्यः क्षौद्रयुक्ताः कासश्वासहराः । सैन्धवयुक्तो मातुलुङ्गरसो हृदयशूलप्रशमनः ।

(काश्य-)

स्वरसं मातुलुङ्गस्य पिप्पलीसैन्धवान्वितम् ।
गर्भिणीं पाययेद्युक्त्या शूलहृद्रोगकासनुत् ॥ १८९ ॥

बिल्वलामज्जलाजाम्बु पिबेच्छर्दिषु गर्भिणी ।
हिक्कायां बिल्वफलयोरम्भः क्षीरावशेषितम् ॥ १९० ॥

मधुरोशीरसिद्धाम्बु द्राक्षामधुकसाधितम् ।
पक्वाम्रस्वरसं वापि बिल्वजं वा ससैन्धवम् ॥ १९१ ॥

पाययेच्छर्दिनाशाय गर्भिणीं लाजतर्पणम् ।
शुण्ठीबिल्वकषायन्तु यवसक्तुविमिश्रितम् ॥ १९२ ॥

गर्भिणीं पाययेद्वैद्यः सर्वच्छर्दिविनाशनम् ।
कुस्तुम्बुरूणां कल्कन्तु तण्डुलोदकसंयुतम् ॥ १९३ ॥

पीतं सशर्करं स्त्रीणां छर्दिं दौहृदजां जयेत् ।
अजमोजोऽश्वगन्धा च जीरकं पिप्पलीद्वयम् ॥ १९४ ॥

सक्षौद्रं सगुळं लेह्यं गर्भिण्याश्चाग्निदीपनम् ।
शुण्ठीबलाद्वयक्वाथं साज्यं चैव सरामठम् ॥ १९५ ॥

सर्वगुल्महरं पेयं गर्भिण्या हिङ्गुना विना ।
पृश्निपर्णीबलाबिल्वबिदारीक्वथितं पिबेत् ॥ १९६ ॥

क्षीरं क्षीरयवागूं वा गर्भिणीवातरोगनुत् ॥ १९७ ॥

(तन्त्रा-)

बिल्वाग्निमन्थपक्वं वा पाटलीनागरेण वा ।
सिद्धं क्षीररसं वापि गर्भिणीवातरोगनुत् ॥ १९८ ॥

(काश्य-)

मधुकोशीरसिद्धं वा द्राक्षामधुकसाधितम् ।
पिबेत्क्षीरं यवागूं वा गर्भिणीवातरोगनुत् ॥ १९९ ॥

सक्षीरो वाप्यदुग्धो वा सघृतो वाघृतोऽपि वा ।
गर्भिण्यार्त्तिषु सर्वासु बलाक्वाथः प्रशस्यते ॥ २०० ॥

(जातुक-)

बलेक्षुगोक्षुरक्काथो मूत्रदोषनिबर्हणः ।
जाङ्गलैश्च रसैश्चोष्णः पिप्पलीतृणसंयुतैः ॥ २०१ ॥

धान्याम्लं त्र्यूषणं चैव पाययेद्गर्भिणीं सुखम् ।
पैत्तिके श्लैष्मिके वाते नाशयेत्परमौषधम् (?) ॥ २०२ ॥
(वृद्धवि-)

उदावर्तं तु गर्भिण्या स्नेहैराशुतरं जयेत् ।
योग्यैश्च वस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम् ॥ २०३ ॥
(वाग्भटे)

तेषु तेषु च रोगेषु तत्तत्कुर्याद्भिषग्जितम् ।
प्राक्चैवं नवमान्मासात् सा सूती गृहमाश्रयेत् ॥ २०४ ॥
तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ।
अद्य श्वः प्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ॥ २०५ ॥
अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ।
वेदनोरूदरकटीपृष्ठहृद्बस्तिवंक्षणे ॥ २०६ ॥
योनिभेदरुजातोदस्फुरणस्रवणानि च ।
आवीनामनु जन्मातस्ततो गर्भोदकस्रुतिः ॥ २०७ ॥
अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ।
हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णांबुसेचिताम् ॥ २०८ ॥
पाययेत्सघृतां पेयां तनौ भूशयने स्थिताम् ।
आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनः पुनः ॥ २०९ ॥
अधो नाभेर्विमृद्नीयात्कारयेज्जृम्भचङ्क्रमम् ।
गर्भः प्रयात्यवागेवं तल्लिङ्गं हृद्विमोक्षतः ॥ २१० ॥
आविश्य जठरं गर्भो वस्तेरुपरि तिष्ठति ।
आव्यो हि त्वरयन्त्येनां खट्वामारोपयेत्ततः ॥ २११ ॥
अथ सम्पीडिते गर्भे योनिमस्याः प्रसाधयेत् ।
मृदु पूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ॥ २१२ ॥
हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलानिलैः ।
प्रत्यायान्ति तथा प्राणास्सूतिक्लेशावसादिताः ।
गर्भसङ्गे तु धूपायेद्योनिं कृष्णाहिकञ्चुकैः ॥ २१३ ॥
(वाग्भटे)

अपामार्गस्य मूलन्तु या नारी दुःखसूयिनी ।
धारयेद्योनिमध्येन सा सुखेन प्रसूयते ॥ २१४ ॥

मधुकं चन्दनं पीत्वा हविषा माहिषेण च ।
लाङ्गल्या चरणौ लिप्त्वा सा सुखेन प्रसूयते ॥ २१५ ॥

(चाक्षुषे)

उन्मूल्य चक्रमर्द मूले गृह्णन्नधोमुखं नीत्वा ।
दर्शय तदेव सद्यः सूतेऽन्तर्वत्न्यनायासात् ॥ २१६ ॥

कोष्णेन पिबेन्महिषीदुग्धप्रस्थेन साष्टमाज्येन ।
मलयजमधुकार्द्धपलं सद्यः सूते सुखं वनिता ॥ २१७ ॥

क्षुद्रदारिवल्कलचर्वणमाशु प्रसूतिमबलानाम् ।
विदधाति पफ्फणच्छदलेप इवाधोऽर्पितो नाभेः ॥ २१८॥

(काञ्ची)

(?)पिशाचेक्षुरसश्चैव नाळिकेरोदकं पिबेत् ।
सद्यः प्रसूयते नारी मूढगर्भे च शस्यते ॥ २१९ ॥

क्वथितेनारनाळेन रामठं सैन्धवान्वितम् ।
सद्यः प्रसूयते देयं मूढगर्भे च शस्यते ॥ २२० ॥

(तन्त्रान्तरे)

इमां विद्यां प्रवक्ष्यामि विशल्यकरणीं शुभाम् ।
अपविद्धस्तु शूलेन हतो वज्रेण वा स्वयम् ॥२२१ ॥
विक्षिप्तमन्त्रैर्विविधैरथवा कण्टकैरपि ।
गर्भिणीष्वपि यद् गर्भे विषमं समुपस्थितम् ।
जलेनानेन सिक्तस्य भस्मीभवति नान्यथा ॥ २२२ ॥

उत्क्षिप उत्पत्वथ निपीड प्रथमं मुञ्च स्वाहा । इत्यौषधं परिजप्य पानीयं देयम् । सुखेन प्रसूयते ।

(शचीमतादिति वङ्गदे)

वियज्जलं क्षितिस्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु वैशल्यं च दधत्वपि ॥ २२३ ॥
प्रसूष्व त्वमविक्लिष्टमविक्लिष्टे शुभानने ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम् ॥ २२४ ॥
इति मन्त्रं जपेत् । अपरापातनेऽप्येवम् ॥

हिरण्यपुष्पीमूलञ्च पाणिपादेन धारयेत् ।
सुवर्चलां विशल्यां वा जराय्वपतनेऽपि च ॥ २२५ ॥

कार्यमेतत्तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत् ।
तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपयः ॥ २२६ ॥

भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ।
पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ २२७ ॥

कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां बिल्वजेनासवेन वा ॥ २२८ ॥

शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ।
सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ २२९ ॥

तैलं सिद्धं हितं पायौ योन्यां वाप्यनुवासनम् ।
शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ॥ २३० ॥

निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ।
तत्सङ्गे ह्यनिलो हेतुस्सा निर्यात्याशु तज्जयात् ॥ २३१ ॥

कुशला पाणिनाक्तेन हरेत्क्लृप्तनखेन वा ।
मुक्तगर्भापरां योनिं तैलेनाङ्गं च मर्दयेत् ॥ २३२ ॥

(बाहटे)

सूतायां हृच्छिरोवस्तिशूलो मर्कलसंज्ञितः ।
यवक्षारं पिबेत् तत्र सर्पिषोष्णोदकेन वा ॥ २३३ ॥

(सिद्ध-)

भार्ङ्गी सश्रृङ्गिवेरञ्च भद्रदारुं तथैव च ।
श्लक्ष्णं दृषदि तत् पिष्टमुष्णोदकसमायुतम् ॥ २३४ ॥
मर्कले दारुणे पीतं सद्यो गृह्णाति वेदनाम् ।
एतदेव तु पातव्यं ग्रन्थौ गर्भाशयस्थिते ॥ २३५ ॥

(तन्त्रा-)

मर्कलाख्ये शिरोवस्तिकोष्ठशूले तु पाययेत् ।
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ २३६ ॥

धान्याम्बु वा गुळव्योषत्रिजातकरजोन्वितम् ॥ २३७ ॥

(बाहटे)

पञ्चकोलकनिर्यूहं पिप्पल्यादिभृतं तथा ।
यवक्षारपरागाढ्यं मर्कलाशूलसूदनम् ।
गुल्मशूलविधानञ्च मर्कलेष्ववचारयेत् ॥ २३८ ॥

(ब्रह्मो-)

पञ्चकोलकुलत्थानां यवागूश्शूलनाशिनी ॥ २३९ ॥

(तन्त्रा-)

सूतिकायाः नाभेरधस्ताद् भेदनशूलनं परिकर्तनं च करोति रक्तं वायुसंसृष्टं सा मर्कला । वरणादिः पतितगर्भाया गर्भमलशोधनो मर्कलाशूलविद्रधिवातगुल्माध्मानवातमूत्रपुरीषसङ्गशमनश्च भवति ॥

रक्तधातूद्भवे कुर्यात् पित्तविद्रधिवत् क्रियाम् ॥ २४० ॥

प्रजातायास्तु बस्तिशिरउदरयोनिशूले मर्कलसंज्ञे दुष्टशोणितनिमित्ते यवक्षारचूर्णं वा मधुना पाययेत् लवणचूर्णं वा ॥

मर्कलावेदनायां तु घृतेनोष्णोदकेन वा ।
क्षीरचूर्णं प्रयोक्तव्यं सर्वशूलप्रशान्तये ॥ २४१ ॥
पञ्चकोलघृतं पेयं त्रिफलासर्पिरेव वा ।

(तन्त्रान्तरात्)

सूतिका क्षुद्वती तैलात् घृताद्वा महतीं पिबेत् ॥ २४२ ॥

पञ्चकोलकिनीं मात्रामनुचोष्णं गुळोदकम् ।
वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति ॥ २४३ ॥

विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ।
स्नेहयोग्या तु निस्नेहमशुमेव विधिं भजेत् ॥ २४४ ॥

पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ।
जीर्णे स्नात्वा पिबेत्पेयां पूर्वोक्तौषधसाधिताम् ॥ २४५ ॥

त्र्यहादूर्ध्वं विदार्यादिवर्गक्वाथेन साधिता ।
हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाथ वा ॥ २४६ ॥

सप्तरात्रात्परं चास्यै क्रमशो बृंहणं हितम् ।
द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत् ॥ २४७ ॥

यत्नेनोपचरेत्सूतां दुस्साधा हि तदामयाः ॥ २४८ ॥

(बाहटे)

शुण्ठ्यैरण्डबलानां निष्क्वाथं तैलघृतलुलितम् ।
प्रथमेऽह्नि पिबेत्सूता कोष्ठविशुद्ध्यर्त्तिशमनार्थम् ॥ २४९ ॥

(प्रयोगकोशात्)

दशमूलरसः शुण्ठीपाठावान् सूतिकागदे ॥ २५० ॥

(सहस्रयोग्याम्)

बलाबिल्वशृतं तोयं सर्पिस्तैलगुलाविलम् ।
प्रपिबेद्द्वादशाहन्तु सूतिका सूतिकामृतम् ॥ २५१ ॥

अथवा दशमूलाम्बु विश्वौषधसमायुतम् ।
दुरालभाविश्वतुल्यं दशमूलशृतं जलम् ॥ २५२ ॥

पीत्वा ज्वरातिसाराभ्यां मुच्यते सूतिका ध्रुवम् ।
धान्वन्तरं बलातैलं सूतिकायाः प्रशस्यते ॥ २५३ ॥

(तन्त्रान्तरे)

पञ्चकोलदशाङ्घ्रिभ्यां समाभ्यां साधु साधितम् ।
निषेव्य सलिलं सूता गुल्मादिभ्यः प्रमुच्यते ॥ २५४ ॥

देवदारुबलारास्नाशुण्ठीसैर्य्यकसाधितम् ।
सलिलं तैलसम्मिश्रमनिलार्त्ता सदा पिबेत् ॥ २५५ ॥

योनिक्षतौ घृतं सिद्धमम्बष्ठाक्षीरिवल्कलैः ।
तैलञ्च दुग्धं सलिले पक्वं योनिव्रणापहम् ॥ २५६ ॥

(भारद्वा-)

ग्राम्यधर्मवाहनाध्वगमनप्रस्खलनप्रपतनप्रपातनाभिघातलङ्घन-प्रभृतिभिरभिघातविशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धनात् । स मुक्तबन्धनो गर्भाशयमाक्रम्य यकृत्प्लीहान्त्रविवरे स्रंसमानो जठर-

संक्षोभतामापादयति । तस्याः जठरसंक्षोभणाद्वायुरपानो मूढः पार्श्ववस्तिशिरोरुजायोनिशूलानाहमूत्रसङ्गानापाद्य गर्भं च्यावयति । तरुणं शोणितभावेन तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिर्गच्छमानमपानवैगुण्यसम्मोहितं गर्भं मूढगर्भमाचक्षते ॥

(सौश्रु)

गर्भेतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ।
मृतेऽन्तर्जठरं शीतं स्तब्धाध्मातं भृशव्यथम् ॥ २५७ ॥

गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ।
अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ॥ २५८ ॥

(वाहटे)

मूत्रपुरीषस्तम्भो गात्रश्यावता हस्तपादशोफः पूतिनिःश्वासता मुखपूतित्वं मुखशोषो मूर्च्छा च गर्भव्यापत्तिलक्षणम् इति ॥

(काश्यपीये)

जीवति तु गर्भे सूतिकागर्भनिर्हरणे प्रयतेत । निर्हर्तुमशक्ये च्यावनान्मन्त्राननुश्रृणुयात् ॥

इहामृतं च सोमश्च चित्रभानुस्सुभामिनि ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ २५९ ॥

इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं प्रमुञ्चतु स्त्रि ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥
औषधानि च विदध्याद्यथोक्तम् ।

(पाठशुद्धौ)

कपित्थतुळसीमूलं करञ्जस्य च बीजकम् ।
पयसा कल्कितं कल्कं नाभिमूले प्रलेपयेत् ॥ २६१ ॥

मूढगर्भः पतेत्तेन हस्तपादतलेषु च ।
लाङ्गलीमूलमेकन्तु श्लक्ष्णं दृषदि पेषयेत् ।
लेपनं योनिमूले तु गर्भप्रस्रवणं परम् ॥ २६२ ॥

(महोदधावात चन्द्रटे)

मन्त्रैर्योगैर्जरायुक्तैर्मूढगर्भो न चेत् पतेत् ।
अथापृच्छयेश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६३ ॥

हस्तमभ्यज्य योनिञ्च साज्यशल्मलिपिञ्छया ।
यद्यद्वायुवशादङ्गं सज्जेत् गर्भस्य खण्डशः ॥ २६४ ॥
तत्तच्छित्वा हरेत् सम्यग्रक्षन्नारीं च यत्नतः ।
छिन्द्याद्गर्भन्न जीवन्तं मातरं स हि मारयेत् ॥ २६५ ॥
सहात्मना नचोपेक्ष्यः क्षणमप्यस्तजीवितः ।
योनिसंवरणभ्रंशमक्कलश्वासपीडिताम् ॥ २६६ ॥
पूत्युद्गारां हिमाङ्गीञ्च मूढगर्भां परित्यजेत् ।

(बाहटे)

अविषह्ये विकारे तु श्रेयो गर्भस्य पातनम् ॥ २६७ ॥
न गर्भिण्या विपर्यासस्तस्मात्प्राणं न हापयेत् ॥ २६८ ॥

(हिरण्याक्षीये)

अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक् ।
एवं निर्हृतशल्यान्तु सिञ्चेदुष्णेन वारिणा ॥ २६९ ॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।
योनिर्मृदूभवेत्तेन शूलञ्चास्याः प्रशाम्यति ॥ २७० ॥
दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकात् ।
चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्ततः ॥ २७१ ॥
कटुकातिविषापाठाशाकत्वक्हिङ्गुतेजनीः ।
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ २७२ ॥
त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत् ।
पयो वातहरैस्सिद्धं दशाहं भोजने हितम् ॥ २७३ ॥
रसो दशाहञ्च परं लघुपथ्याल्पभोजनम् ।
स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत् ॥ २७४ ॥
ऊर्ध्वं चतुर्भ्यो मासेभ्यस्सा क्रमेण सुखानि च ।
उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत् ॥ २७५ ॥

(बाहटे)

उपद्रवाद्विशुद्धाञ्च ज्ञात्वा च बलवर्णिनीम् ।
ऊर्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत्परिहारतः ॥ २७६ ॥

(पाठ)

मूढगर्भापहरणे वस्तिर्यस्यास्तु भिद्यते ।
नखेनान्येन वा योनौ स्रवेदच्छं जलं सदा ॥ २७७ ॥

तस्यां मत्तः प्रतीकारं शृणु भार्गव तत्त्वतः ।
तैलेनाभ्यज्य सर्वाङ्गमत्यन्तं स्वेदयेदथ ॥ २७८ ॥

तप्तलोष्ठैस्तथा पत्रैर्वातघ्नैर्वस्तिमूलतः ।
तस्याः प्रगृह्य चरणौ धुनुयात्तदवाक्छिराः ॥ २७९ ॥

एवञ्च बहुशः कृत्वा क्षीरेण प्रतिभोजयेत् ॥ २८० ॥

(तन्त्रा-)

तुम्बीपत्रञ्च लोध्रञ्च समभागानि कारयेत् ।
दद्याल्लेपं भगस्येदं प्रसूता ह्यक्षता भवेत् ॥ २८१ ॥

क्षीरिवृक्षकषायेण सेल्लुसिद्धेन वा तथा ।
योनिप्रक्षाळनं शीघ्रं गाढीकरणमुत्तमम् ।
तेषां त्वग्भिः प्रलेपश्च कन्याकरणमुत्तमम् ॥ २८२ ॥

(साराणवात्)

वेतसस्य तु मूलानि क्वाथयेन्मृदुनाग्निना ।
योनिः प्रक्षाळिता तेन गाढत्वमुपगच्छति ॥ २८३ ॥

(तन्त्रान्तरे)

श्रेष्ठा पुंसवने लक्ष्मीर्गर्भस्रावेऽब्जमुत्पलम् ।
बलाग्न्या गर्भिणीरोगे मूढगर्भेऽपकर्षणम् ।
योनिगाढविधौ सेलुरग्रय इत्याह भार्गवः ॥ २८४ ॥

(साराणवात्)

वकुळस्य फलं पिष्ट्वा पिबेन्मद्येन लाभतः ।
पुष्पकाले सदा नारी नाशयेत्पुष्पसम्भवम् ॥ २८५ ॥

शर्करोदकपिष्टानि मरिचानि सितानि च ।
पुष्पकाले त्र्यहं पीत्वा नाशयेत्पुष्पसम्भवम् ॥ २८६ ॥

किंशुकस्य फलं पिष्ट्वा मधुना सह योजयेत् ।
पुष्पकाले त्र्यहं दद्यान्नाशयेत्पुष्पसम्भवम् ॥ २८७ ॥

असनस्य च निर्यासं क्षीरेणालोड्य पाययेत् ।
जनयेदार्त्तवं नष्टं क्षिप्रमेव सुखा भवेत् ॥ २८८ ॥

(तन्त्रान्तरे)

एकधा तद्द्विधा चैव त्रिधा च बहुधा तथा ।
वायुना प्रतिभिन्ने तु बीजे स्यात् बहुपुत्रता ॥ २८९ ॥
वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ।
सर्पवृश्चिककूश्माण्डविकृताकृतयस्तु ये ॥ २९० ॥
गर्भास्त्वेता स्त्रियश्चैव ज्ञेयाः पापकृतो भृशम् ।
गर्भो वातप्रकोपेन दौहृदे चावमानिते ॥ २९१ ॥
भवेत्कुब्जः कुणिः पंकुर्मूक उन्मत्त एव वा ।
मातापित्रोश्च नास्तिक्यादशुभैश्च पुराकृतैः ॥ २९२ ॥
वातादीनां प्रकोपेन गर्भवैकृतमुच्यते ॥ २९३ ॥

(सौश्रु)

यत्स्वहस्तनखाच्छित्वा मर्दय... .... ... ।
... .... बुशल्यात्पिच्छिलैर्लेपितं भृशम् ॥ २९४ ॥
सूतिकालश्च तद्वाद्ये शङ्खदुन्दुभिघोषणैः ।
पुण्याहैस्स्वस्तिवाक्येन मङ्गलैर्वचनैस्तथा ॥ २९५ ॥
दानैर्देशिकसम्पन्नैर्दरिद्रैर्ब्राह्मणैरपि ।
वैद्यैर्नक्षत्रिकैश्चान्यैर्भूतविघ्नोपशोभितैः ॥ २९६ ॥
भूतग्रहपिशाचादीन् धूपयेद्बलिभिस्तथा ।
स्निग्धैर्बहुभिराकीर्णैर्भर्ता संरक्षयेद् भृशम् ॥ २९७ ॥
कुमारं पूजयेन्नित्यं कुमारबलिकर्मणि ।
योगिनी शार्ङ्गिणी चैव शार्ङ्गी शाबरिका तथा ॥ २९८ ॥
भूतग्रहपिशाचादीन् पूजयेद्बलिभिस्तथा ।
एवं क्रमेण तत्कुर्यात् सूतिका च सुखाभवेत् ॥ २९९ ॥

(कात्याय-)

गर्भप्रपतनेनैव पुरुषेणातियोगतः ।
विविधैरभिघातैर्वा नार्या रक्तं प्रदुष्यति ॥ ३०० ॥

तदा तत्र योनौ शूलं शोफश्च जायते ।

नीलमत्यर्थदुर्गन्धि बहुवेदनमजस्रं रक्तं स्रवते । तत्त्रिरात्रमतिक्रान्तं महाशोणितं विद्यात् ॥

त्रिभिर्दोषैस्तु संसृष्टं सर्ववर्णं प्रदुष्यति ॥ ३०१ ॥

(काश्यपी-)

तत्र रक्तपित्तप्रदरचिकित्सां कुर्यात् ॥

गर्भाशयस्थः पवनोऽतिदुष्टो व्यवायवातादिनिरोधनाद्यैः ।
कटीनितम्बत्रिकवंक्षणोरुयोनीषु वस्तावपि वृक्कनाभ्याम् ॥ ३०२ ॥

करोत्यसह्यामधिकां रुजां तु सा सूतिकालेष्विव याति दुःखम् ।
तं रक्तगुल्मं प्रवदन्ति केचिदष्ठीलिकाग्रन्थिरितीह चान्ये ॥ ३०३ ॥

नाष्ठीलिका नैव च रक्तगुल्मस्ससम्पिण्डितः केवल एव वायुः ।
इतस्ततः सञ्चरतानिलेन विद्यते चातिरुजाकरेण ॥ ३०४ ॥

तत्पार्श्व एवातिरुजा भवेद्धि सम्पिण्डितः केवलमातरिश्वा ।
यत्पार्श्वमाश्रित्य मरुत्स्थितस्तु समुद्रमण्डूकनिभःस्थिरस्तु ॥ ३०५ ॥

गर्भाशयस्थं निरुणद्धि यद्धि ग्रन्थीति केचिन्निगदन्ति मूढाः ।
ऋतौ कषायोदकसन्निकाशं मांसोदकाभन्त्वथवातिसान्द्रम् ॥ ३०६ ॥

स्रवेदसृक्कृष्णमथाल्पमल्पं तच्चातिदुष्टं बलिनानिलेन ।
स वष्टिरोगो ह्ययमस्य तैक्ष्ण्यादतस्तु वष्टीत्यभिधीयतेऽसौ ॥ ३०७ ॥

निरूहमन्वासनमुत्तराख्यं समीरणघ्नौषधसाधितं तु ।
युञ्ज्यात्तथा शान्तिमुपैति वष्टिः स्वेदैर्विचित्रैश्च पुनर्नवाद्यैः ॥ ३०८ ॥

अजोण्डुकं सर्षपतैलयुक्तं सुरानुपानन्तु निषेवमाणा ।
पलाण्डुलाजापललप्रसेविनी सुदुस्तराद्वष्टिगदाद्विमुक्ता ॥ ३०९ ॥

पुनर्नवो वा पयसा विपक्वो निषेव्यमाणश्च निहन्ति वष्टिम् ।
न्यग्रोधजम्ब्वर्जुनतिन्दुकाम्रप्रियालपालाशमधूकलोध्रम् ॥ ३१० ॥

जले विपाच्यात्र पयोधरैलाकृष्णानिशादारुनिशास्सपथ्याः ।
पद्मग्रन्थिलोध्रद्वयकुष्ठपाठाः पिष्ट्वा तु सम्यग्विपचेच्च तैलम् ॥ ३११ ॥

तत्सेवनाच्छान्तिमुपैति वस्तिः
पिचुप्रयोगैरनुवासनैश्च ॥ ३१२ ॥

(आगमात्)

स्नानौषधं प्रवक्ष्यामि सूतिकानां विशेषतः ।
विल्वप्लक्षकरञ्जौ च सहदेवी सपल्लवा ॥ ३१३ ॥

पञ्चौषधमिति ख्यातं प्रशस्तं कलिनाशनम् ।
प्लक्षः कपित्थको बिल्वः करञ्जः कङ्ककेसरौ ॥ ३१४ ॥

पाटलं ककुभं चैव दृष्टास्तेषां महौषधाः ।
सर्वग्रहविमोक्षार्थं स्नापयेत विशेषतः ॥ ३१५ ॥

स्निग्धस्विन्नां यथास्थानं स्रस्तां योनिं प्रवेशयेत् ।
धूपयेदहिकृत्त्या वा ततः पिष्टसुरां पिबेत् ॥ ३१६ ॥

दूर्वा क्षुद्रसहा लाक्षा पयस्या मधुकं बला ।
लोध्रं हरिद्रा मञ्जिष्ठा भद्रदारु च पेषयेत् ॥ ३१७ ॥

एतैः सर्पिः पचेद्धीमान् पयश्चाधिश्रयेत् ततः ।
एतैः क्षीरं च सर्पिश्च पाययेत्प्रातरुत्थिताम् ॥ ३१८ ॥

स्रस्ता योनिः पदात्क्षिप्रं यथास्थानगता भवेत् ।
पयस्या पद्मकोशीरसदाभद्रा शतावरी ॥ ३१९ ॥
मञ्जिष्ठा मधुकं लोध्रं वयस्स्था भद्रदारु च ॥
एतेन तैलं निष्पक्वं पिचुनाऽऽयोज्य धारयेत् ।
शूनायाः स्फुटितायाश्च क्षतायाश्चौषधं परम् ॥ ३२० ॥

(हिरण्याक्षीये)

जातमात्रं विशोध्योल्बाद्बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितञ्चानुबलातैलेन सेचयेत् ॥ ३२१ ॥
स्वस्थीभूतस्य नाभिञ्च सूत्रेण चतुरङ्गुलात् ।
बद्ध्वोर्ध्वं वर्धयित्वा च ग्रीवायामवसज्जयेत् ॥ ३२२ ॥
नाभिश्च कुष्ठतैलेन सेचयेत्स्नपयेदनु ।
क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा ॥ ३२३ ॥
कोष्णेन तप्तरजततपनीयनिमज्जनैः ।
क्षीरवृक्षकषायेण कुमारमवगाहयेत् ॥ ३२४ ॥

पयसा(सौवीरकणापि ? काञ्चिकेनापि) उष्णोदकमथापि वा ।
स्नापयेत्केशरक्षार्थं कुमारं शास्त्रकर्मणा ॥ ३२५ ॥
(तन्त्रा-)

ततो दक्षिणतर्जन्या तालून्नाम्यावगुण्ठयेत् ।
शिरसि स्नेहपिचुना प्राशञ्चास्य प्रयोजयेत् ॥ ३२६ ॥
हरेणुमात्रं मेधायुर्बलार्थमभिमन्त्रितम् ।
ऐन्द्रीब्राह्मीवचाशङ्खपुष्पीकल्कं घृतं मधु ॥ ३२७ ॥
चामीकरवचाब्राह्मीताप्यपथ्यारजीकृताः ।
लिह्यान्मधुघृतोपेता हेमधात्री रजोथवा ॥ ३२८ ॥
(बाहटे)

श्वेतमाल्याम्बरो नित्यं ... ... ब्राह्मणपूजिते ।
शौचान्वितेऽरिष्टगृहे न तेभ्यः स्त्रीशिशोर्भयम्? ॥ ३२९ ॥
अद्वारके गुदे सूच्या व्यधयेन्मतिमान् भिषक् ।
घृतेन सेकं कुर्वीत वदने नयनेऽपि च ॥ ३३० ॥
लिङ्गदेशे च कर्णे च नासायाञ्च तथैव च ।
तन्मात्रदेशं सूच्यैव व्यधित्वा सेकमाचरेत् ॥ ३३१ ॥
(प्रयोगसि)

प्रसूतानां तु नारीणां त्र्यहं पञ्चाहमेव वा ।
स्तन्यं नश्यति वातेन स्तन्यमार्गावरोधनात् ॥ ३३२ ॥
नार्याश्रित्य(?)शरीराया विवृते मांसशोणिते ।
तदभ्यङ्गस्य वीर्येण स्वेदेन च विशेषतः ॥ ३३३ ॥
प्रवरस्नेहपानाच्च मारुते प्रशमं गते ।
क्षीरमुत्पद्यते क्षिप्रं सन्तापश्चोपशाम्यति ॥ ३३४ ॥
यावन्नोत्पद्यते स्तन्यं यावदूष्मा न शाम्यति ।
तावत्सर्पिः कुमाराणां त्रैकाल्यं सम्प्रदापयेत् ॥ ३३५ ॥
क्षीरन्तु स्तन्यवृद्ध्यर्थं गव्यं माहिषमेव वा ।
जाङ्गलानां रसं मांसं मृगाणां पक्षिणामपि ।
नाडिकास्वस्तिकाभ्यां वा तिलकल्करसेन वा ॥ ३३६ ॥

वाजीकरणयोगेन नष्टं स्तन्यं प्रवर्तते ।
अतिप्रवृद्धे स्तन्ये तु यवकोद्रवभोजनम् ॥ ३३७ ॥

यूषैस्तैलेन वाश्नीयात्प्रवृद्धञ्च विरेचयेत् ।
स्तन्यप्रवृद्धिहेतूनां ग्रन्थीनां लेपनं हितम् ॥ ३३८ ॥

यष्टीमधुतिलानन्ताकपोतैः कन्यकायुतैः ।
घृततैलसमायुक्तं शिग्रुमूलं प्रलेपयेत् ॥ ३३९ ॥

वातादिस्तनरोगे तु सुखोष्णश्च मुहुर्मुहुः ।
सक्षीरे वाप्यदुग्धे वा दोषः प्राप्तः स्तने स्त्रियाः ॥ ३४० ॥

प्रदुष्य मांसरुधिरं स्तनरोगाय कल्पते ।
तदपत्यस्य संशब्दाद्दर्शनात्स्मरणादपि ॥ ३४१ ॥

ग्रहणाच्च शरीरेभ्यश्शुक्रवत्संप्रवर्तते ।
मधुकं शारिवा लाजाः पिष्ट्वा क्षीरेण पैत्तिके ।
प्रदेहं कारयेत्कल्कं शर्करापादसंयुतम् ॥ ३४२ ॥

(तन्त्रान्तरे)

कषाये .... .... .... .... ।
... ... ... ... ... ... ॥ ३४३ ॥

कषायैर्यौगिकैर्युञ्ज्यात्स्वैस्वैस्तद्वाच्छिलाजतु ।
स्तनजे व्रणवत्सर्वं न त्वेनमुपनाहयेत् ॥ ३४४ ॥

पाटयेत्पालयन् स्तन्यवाहिनीः कृष्णचूचुके ।
सर्वास्वामाद्यवस्थासु निर्दुहीत च तत्स्तनम् ॥ ३४५ ॥

(वाहटे)

कच्छपमस्तकचरणौ सुरेन्द्रगोपञ्च तैलपक्वानि ।
ललनाकुचप्रणाशं प्रलेपनात्सम्प्रकुर्वन्ति ॥ ३४६ ॥

आकुल्याश्च प्रवाळानि क्षीरपिष्टानि वा पुनः ।
सघृतानि वचालेपः स्तनवृद्धिविनाशनः ॥ ३४७ ॥

(तन्त्रान्तरे)

तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते ।
प्रथमे दिवसे तस्मात् त्रिकालं मधुसर्पिषी ॥ ३४८ ॥

अनन्तामिश्रिते मन्त्रभाविते प्राशयेच्छिशुम् ।
द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ॥ ३४९ ॥

प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम् ।
स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ ३५० ॥

मातुरेव पिबेत्स्तन्यं तद्ध्यलं देहवृद्धये ।
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥ ३५१ ॥

शुक्क्रोधलङ्घनायासाः स्तन्यनाशस्य हेतवः ।
स्तन्यस्य शीधुवर्ज्यानि मद्यान्यानूपजा रसाः ॥ ३५२ ॥

क्षीरं क्षीरिण्य ओषध्यश्शोकादेश्च विपर्ययः ॥ ३५३ ॥
(वाहटे)

चटकेक्षुबलाद्राक्षाशारिवाम्भो निषेवितम् ।
स्तन्यवृद्धिकरं श्रेष्ठं घृतचर्मरसं (?) तथा ।
जीवनीयशृतं क्षीरं पयश्च स्तन्यवर्द्धनम् ॥ ३५४ ॥
(औरभ्रात् )

अभीरुवीरेक्षुबलापयस्यामधूकयष्टीमधुगोपकन्याः ।
तैरम्बु सिद्धं ससितं प्रयुञ्ज्यात् वृष्यं परं स्तन्यकरं प्रशस्तम् ॥

दुग्धेन कमलतण्डुलचूर्णं पीतं विदारिकन्दो वा ।
सप्ताहमदुग्धायाः करोति दुग्धं प्रसूतायाः ॥ ३५६ ॥
(तन्त्रान्तरे)

विरुद्धाहारभुक्तायाः क्षुधिताया विचेतसः ।
प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥ ३५७ ॥

त्रिविधः कथितो बालः क्षीरान्नोभयवर्तनः ।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः ॥ ३५८ ॥

यदद्भिरेकतां याति न च दोषैरधिष्ठितम् ।
तद्विशुद्धं पयो वाताद्दुष्टन्तु प्लवतेऽम्भसि ॥ ३५९ ॥

कषायं फेनिलं रूक्षं वर्चोमूत्रविबन्धकृत् ।
पित्तादुष्णाम्लकटुकं पीतराज्यप्सु दाहकृत् ॥ ३६० ॥

कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ।
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ ३६१ ॥

यथास्वलिङ्गांस्तन्व्याधीञ्जनयत्युपयोजितम् ॥ ३६२ ॥

(बाहटे)

पाठानागरसुरदारुघनामृतशारिबेन्द्रयवमूर्वाः ।
कटुकाकिराततिक्तौ वर्गोऽयं स्तन्यशुद्धिकरः ॥ ३६३ ॥

(सङ्ग्रहे)

पाठाञ्च शृङ्गिबेरञ्च दद्यात्स्तन्यविशुद्धये ।
हरिद्रादिं वचादिं वा योजयेत्स्तन्यशुद्धये ॥ ३६४ ॥

(प्रयोगसि-)

पिबेद्वा पिप्पलीमूलचव्यचित्रकनागरम् ।
पाठानागरशार्ङ्गेष्ठामूर्वाभिर्लेपयेत्स्तनौ ॥ ३६५ ॥

(चर-)

शिशोस्तीक्ष्णामतीक्ष्णाञ्च रोदनाल्लक्षयेद्रुजम् ।
स्वयं स्पृशेत् भृशं देशं यत्र च स्पर्शनाक्षमः ॥ ३६६ ॥

तत्र विद्याद्रुजं मूर्ध्नि रुजश्चाक्षिनिमीलनात् ।
हृदि जिह्वोष्टदशनश्वासमुष्टिनिपीडनैः ॥ ३६७ ॥

कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः ।
आध्मानपृष्ठनमनजठरोन्नमनैरपि ॥ ३६८ ॥

वस्तौ गुह्ये च विण्मूत्रसंगोत्त्रासदिगीक्षणैः ।
तत्र धात्र्याः क्रियां कुर्याद्यथादोषं यथामयम् ॥ ३६९ ॥

(बाहटे)

सर्वान्निर्वार्यते बालः स्तन्यान्न प्रतिवार्यते ॥ ३७० ॥

(प्रयोगसि-)

व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपितः ।
स्थितो मुहूर्तं धौतो नुपीतस्तं तञ्जयेद्गदम् ॥ ३७१ ॥

(बाहटे)

शिशूनां स्तन्यसंयुक्तं त्रिमासाद्भेषजं विदुः ।
अतःपरं कुमाराणां जलेनैव प्रदापयेत् ॥ ३७२ ॥
क्षीरपस्यौषधं धात्र्यै क्षीरान्नादस्य चोभयोः ।
बिल्वफलमात्रन्तु जातमात्रे विधीयते ।
एतेनैव विवर्द्धेत मासि मासि क्रमेण च ॥ ३७३ ॥

(प्रयोगसि-)

F

त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत् ।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ ३७४ ॥

सौकुमार्याल्पकायत्वात्सर्वान्नानुपसेवनात् ।
स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ॥ ३७५ ॥

सद्यस्तान्वमनं तस्मात्पाययेन्मतिमान्मृदु ।
स्तन्यस्य तृप्तं वमयेत्क्षीरक्षीरान्नसेविनम् ॥ ३७६ ॥

पीतवन्तं तनुं पेयामन्नादं घृतसंयुताम् ।
वस्ति साध्ये विरेकेण मर्शेन प्रतिमर्शनम् ॥ ३७७ ॥

युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान् ।
रोगांश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ॥ ३७८ ॥

अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ।
त्रासयेन्नाविधेयश्च त्रस्तं गृह्णन्ति हि ग्रहाः ॥ ३७९ ॥

वस्त्रवातात्परस्पर्शात्पालयेल्लङ्घनाच्च तम्[1] ।
स्तन्ये त्रिदोषमलिने दुर्गन्ध्यामं जलोपमम् ॥ ३८० ॥

विवद्धमच्छं विच्छिन्नं फेनिलं चोपवेश्यते ।
शकृन्नानाव्यथावर्णं मूत्रं पीतं सितं घनम् ॥ ३८१ ॥

ज्वरारोचकतृट्छर्दिशुष्कोद्गारविजृम्भिकाः ।
अङ्गभङ्गोऽङ्गविक्षेपः क्वणनं वेपथुर्भ्रमः ॥ ३८२ ॥

घ्राणाक्षिमुखपाकाद्या जायन्तेऽन्येऽपि तं गदम् ।
क्षीरालसक इत्याहुरत्ययश्चातिदारुणम् ॥ ३८३ ॥

तत्राशु धात्रीं बालञ्च वमनेनोपपादयेत् ।
विहितायाश्च संसर्ग्या वचादिं योजयेद् गणम् ॥ ३८४ ॥

निशादिं वाथवा माद्रीपाठातिक्ताघनामयान् ।
पाठाशुण्ठ्यमृतातिक्ता तिक्तदेवाह्वशारिवाः ॥ ३८५ ॥
समुस्तमूर्वेन्द्रयवाः स्तन्यदोषहराः परम् ॥ ३८६ ॥

(बाहटे)

पैष्टिकं पायसं शाकं मत्स्यं माषं तिलौदनम् ॥ ३८७ ॥

---

१. खरस्पर्शादिति पा-

फाणितापूपदुग्धं च पिष्टं शुक्तं दधि .... ... ।
मेदस्वीनि च मांसानि यात्यर्थमुपसेवते ॥ ३८८ ॥
तस्याः प्रकुपितः श्लेष्मा क्षिप्रं स्तन्यं विगाहते ।
तस्यास्तत्पिबतः स्तन्यं कुमारस्य तथाविधम् ॥ ३८९ ॥
जायते स्तन्यदोषेण व्याधिः स्तन्यसमीरितः ।
क्षीरालसक इत्येवं यं प्राहुः भिषजो बुधाः ॥ ३९० ॥
विरिच्यते छर्दयति मुखं च परिशुष्यति ।
वेदना जायते कुक्षौ तालुदेशे च कण्टकम् ॥ ३९१ ॥
परिप्लवेते नयने तालुशोषं च गच्छति ।
चक्षुर्भवति गम्भीरमभीक्ष्णं च विलीयते ॥ ३९२ ॥
उद्गारश्चाऽस्य भवति तृष्णा चाऽस्योपजायते ।
हिक्कते जृम्भते गाढमानाहं चाऽस्य जायते ॥ ३९३ ॥
भृशं छर्दयते तस्य कूजन्त्यान्त्राणि सर्वतः ।
श्वेतं भवति वर्चोऽस्य प्रद्रवं चातिसार्यते ॥ ३९४ ॥
विच्छिन्नं पिच्छिलं चैव शैवलं चाऽतिसार्यते ।
जिह्वा विवर्णा भवति स्तनौ नैवाऽभिनन्दति ॥ ३९५ ॥
क्षीरालसकमेतैस्तु लिङ्गैर्व्याधिं विनिर्दिशेत् ।
तत्रौषधं प्रवक्ष्यामि यथा स लभते सुखम् ॥ ३९६ ॥
तत्रैतत्प्रथमं कर्म धात्रीमस्योपवासयेत् ।
एकरात्रं द्विरात्रं वा ततः स्यादुत्तरक्रिया ॥ ३९७ ॥
ततः स्तन्यविशुद्ध्यर्थमिमान्योगान्समाचरेत् ।
वमनं पाययेत्पूर्वं ततः पश्चाद्विरेचयेत् ॥ ३९८ ॥
ततः संशुद्धकोष्ठायै भिषग्धात्र्यै प्रयोजयेत् ।
युक्तानि षष्टिबीजैश्च दाडिमस्य रसेन च ॥ ३९९ ॥
नीलोत्पलाञ्जने चोभे क्षौद्रं पद्मस्य केसरम् ।
शर्करा कोलमज्जा च छर्दिग्रहणमुत्तमम् ।
नागरं चाजमोजं च हिंगु चित्रकमेव च ॥ ४०० ॥

एतैः क्षौद्रसमायुक्तं छर्दिग्रहणमुत्तमम् ।

(काश्यपीये)

पाययेन्मातरं तस्मात्कषायं पाञ्चमौलिकम् ॥ ४०१ ॥

वचातरटमुस्तानां क्राथं भद्रद्रुमस्य च ।
तगरक्काथसिद्धां वा यवागूं मधुना सह ॥ ४०२ ॥

मुस्ताबिल्वशलाटूनां कुङ्कुका(?)मेषशृङ्गयोः ।
लेहयन् मधुना चूर्णमन्नादं क्षीरपं तथा ॥ ४०३ ॥

पाययेत् स्तनमालिप्य सर्वत्रैव च कल्पयेत् ।
आम्रतिन्दुकजम्बूनां क्वाथं वा पत्रकं तयोः ॥ ४०४ ॥

बिल्वभङ्गकषायं वा क्षीरालसकभेषजम् ।
बिल्वमूलं च कोलं च तुकाक्षीरीं च चूर्णिताम् ॥ ४०५ ॥

पिबेत् मधुगुडाभ्यां तु मुद्गयूषेण वा सह ।
क्षीरालसकतृष्णायाः क्षीरैश्चैनं प्रदेहयेत् ॥ ४०६ ॥
पाययेन्मातरं तस्मिन् कषायं पाञ्चमौलिकम् ॥ ४०७ ॥

(हिरण्या-)

अनुबन्धे यथाव्याधि प्रतिकुर्वीत कालवित् ।
दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम् ॥ ४०८ ॥
विशेषात् ज्वरवीसर्पकासच्छर्दिशिरोरुजाम् ।
अभिष्यन्दस्य पोथक्या विट्भेदस्य च जायते ॥ ४०९ ॥
यथादोषं यथारोगं यथोद्रेकं यथाबलम् ।
विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम् ॥ ४१० ॥
दन्तपालिं समधुना चूर्णेन प्रतिसारयेत् ।
पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ॥ ४११ ॥
हतं करोति बालानां दन्तकेसरवन्मुखम् ।
दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ॥
स्वयमेवोपशाम्यन्ति जातदन्तस्य यद्गदाः ।

(वाहटे)

मस्तके घृतमण्डस्तु ज्वरितस्य सदा हितः ॥

शिरोरोगहरो मुख्यो रक्षोघ्नश्च विशेषतः ॥ ४१४ ॥

(काश्य-)

रोहिणीकल्कसंयुक्तं नवनीतं नवं श्रृतम् ।
पानालेपनयोर्योज्यं बालानां पित्तजे ज्वरे ॥ ४१५ ॥

सहदेवीरसे पिष्टा कटुरोहिणिकाथवा ।
पानालेपनयोर्योज्या सर्वज्वरविनाशिनी ॥ ४१६ ॥

कटुरोहिणिकाचूर्णं पिबेत्स्तन्यसमायुतम् ।
सर्वज्वरहरं श्रेष्ठं शिशूनान्तु विशेषतः ॥ ४१७ ॥

(प्रयोगासि-)

शिशोस्सर्वज्वरे देयास्तिक्ताश्शम्याकवारिणा ।
लाजाञ्जनसितावांशीयष्टिचूर्णं समाक्षिकम् ॥ ४१८ ॥

(सारस)

चूर्णं पर्प्पटकानान्तु स्तन्येन ज्वरनाशनम् ।
क्षुद्राशुण्ठीगुडूचीनां क्वाथे सिद्धं पयः पिबेत् ॥ ४१९ ॥

पिप्पलीचूर्णसंयुक्तं बालानां ज्वरनाशनम् ।
अश्वत्थस्य प्रवाळानां मुष्टिमात्रं तु पाचयेत्
जले तस्मिन् श्रृतं क्षीरं बालानां ज्वरनाशनम् ॥ ४२० ॥

(काश्य-)

पायसं सुमना लाजा मोदकं शर्करा मधु ।
श्वेतानुलेपनं धूपं ध्वजं श्वेतं पवित्रकम् ॥ ४२१ ॥

हिरण्यगर्भं कलशं श्वेतपद्मोत्तरच्छदम् ।
अहताम्बरसंवीतश्शिरस्स्नातस्सदक्षिणः ॥ ४२२ ॥

राजवृक्षे हरावासे रुद्राय बलिमाहरेत् ।
गोक्षीरकुन्दवर्णाभ त्रिशूलधर गोपते ॥ ४२३ ॥

भस्मधूसर भूतेश त्रिनेत्र शिव शङ्कर ।
प्रगृहाण बलिञ्चेमं ज्वरितस्य ज्वरापह ! ॥ ४२४ ॥

मन्त्रेणानेन विधिना द्वादशाहं बलिं हरेत् ।
पायसं कृसरं लाजा गुल्मासं सक्तुपिण्डकम् ॥ ४२५ ॥

स्वस्तिकापूपरक्तान्नं गुळोदनमथापि वा ।
धूपानुलेपनं माल्यं ध्वजं नीलं पवित्रकम् ॥ ४२६ ॥

हिरण्यगर्भं कलशं श्वेतपद्मोत्तरच्छदम् ।
अहतांबरसंवीतश्शिरस्स्नातः सभूषणः ॥ ४२७ ॥

अश्वत्थे विष्णुगेहे वा विष्णवे बलिमाहरेत् ।
एतेनैव विधानेन नरो मुच्येत च ज्वरात् ॥ ४२८ ॥

पक्षिवाहन गोविन्द वराहवदन प्रभो ।
असुरघ्न सुरश्रेष्ठ नरसिंह गदाधर ॥ ४२९ ॥

प्रगृहाण बलिञ्चेमं ज्वरितस्य ज्वरापह ।
एतेनैव विधानेन दशरात्रं बलिं हरेत् ॥ ४३० ॥

(कात्या-)

अपूपमधुलाजाभ्यां विघ्नेशाय निवेदयेत् ॥ ४३१ ॥

(भविष्यत्पुराणे)

पूजयेद्देवतानाञ्च पितॄणाञ्च ग्रहाणि च ।

ब्राह्मणान् भोजयेच्चैव यथाशक्त्यनुरूपतः ।
तेन शान्तिर्भवति च बलमायुश्च वर्धते ॥ ४३२ ॥

(भार्गवात्)

शतधौतघृतं शीतं चन्दनोशीरसंयुतम् ।
तेनैव च प्रयोगेन ज्वरदाहात्प्रमुच्यते ॥ ४३३ ॥

क्षीरेण पिष्ट्वा कटुकां पाययेद्दुग्धसर्पिषा ।
एतत् पित्तज्वरहरं बालानां सम्प्रपूजितम् ॥ ४३४ ॥

उशीरजम्ब्वाम्रवटप्ररोहैः क्वाथो रसो वा मधुसम्प्रयुक्तः ।
पीतो ज्वरच्छर्द्यतिसारतृष्णाः बालस्य मूर्च्छामपहन्ति सद्यः ॥४३५॥

(तन्त्र -)

समङ्गांशुमती शुण्ठीबलाधान्ययवैः शृतम् ।
कुमारं पाययेत्क्वाथं ज्वरातीसारनाशनम् ॥ ४३६ ॥

---

१- धातकीति पा-

समंगाधातकीपुष्पं स्तन्ययुक्तं पिबेच्छिशुः ।
लोध्रं प्रियङ्गुं स्तन्येन ज्वरातीसारनाशनम् ॥ ४३७ ॥

(योगमा-)

समङ्गापिप्पलीचूर्णं स्तन्येन सह संयुतम् ।
क्षीरेण वा पिबेच्चूर्णं ज्वरातीसारनाशनम् ॥ ४३८ ॥

चाङ्गेरीस्वरसक्षौद्रवचातिविषचूर्णयुक् ।
शिशूनां भेषजं श्रेष्ठं ज्वरातीसारनाशनम् ॥ ४३९ ॥

आम्रजम्बूभवाळानि क्षीरिणाञ्चापि पल्लवाः ।
पयस्या शारिबामूलं गण्डीरश्चैव चित्रकम् ॥ ४४० ॥

एभिः कषायो बालस्य छर्द्यतीसारनाशनः ।
बिल्वमूलजले सिद्धं लाजमिश्रं पयः शिशुः ।
पिबेत्क्षौद्रेण संयुक्तं छर्द्यतीसारनाशनम् ॥ ४४१ ॥

(तन्त्रा-)

चूतशलाकमहौषधमुस्तासाधितमम्ब्वथवा मधुयुक्तम् ।
धातकिशारिबलोध्रसमङ्गासाधितमम्बु च कुक्षिविकारे ॥ ४४२ ॥

पुष्पं कदल्यास्सहकार[1]तिक्ताचाङ्गेरिकातामलकीदलैस्तु ।
पक्त्वा पुटे तस्य रसो मधूढः प्रवाहिकां हन्त्यचिराच्छिशूनाम् [॥ ४४३ ॥

(सिद्धयोग-)

दार्वीहरिद्रा कुटजस्य बीजं सिंही च यष्टीमधुकं च सिद्धम् ।
जलं शिशोस्तन्यकृते तु दोषे सर्वातिसारेषु च सर्वथेष्टम् ॥ ४४४ ॥

(वररु-)

कुटचातिविषाकल्कं स्तन्ययुक्तं कणान्वितम् ।
पाययेत्तं शिशुं वैद्यस्सर्वातीसारनाशनम् ॥ ४४५ ॥

शार्ङ्गेष्ठास्वरसः पेयो रम्भापुष्परसस्तथा ।
चाङ्गेर्याश्च रसः क्षौद्रयुक्तः सर्वातिसारजित् ॥ ४४६ ॥

(सिद्धसा-)

समङ्गाधातकीपुष्पशारिबालोध्रसम्भवः ।
निष्काथो मधुसंयुक्तो बालातीसारनाशनः ॥ ४४७ ॥

(प्रयोगसि-)

---

१. सहकार इति पा-

आम्रजम्बूप्रवालानि पद्मोत्पलशतावरीः ।
पक्त्वा क्वाथं पिबेत् बालो रक्तातीसारनाशनम् ॥ ४४८ ॥

पाठातोयदशुण्ठीनां कषायं क्षौद्रसंयुतम् ॥
रक्तातीसारनाशाय पिबेत् बालो विशेषतः ॥ ४४९ ॥

रम्भापुष्पं नाळिकेरस्य पुष्पं जम्बूत्वक्चोदुम्बरोत्थं फलञ्च ।
चिञ्चामूलं तोयदं तैः कषायो रक्तोद्भूतं हन्ति सद्योऽतिसारम्
[ ॥ ४५० ॥

(तन्त्रा-)

सिंहीयष्टीनिशायुग्मवत्सकक्काथसेवनम् ।
शिशोस्सर्वातिसारेषु स्तन्यदोषे च शस्यते ॥ ४५१ ॥

(नारायणीये)

लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्पितः ।
बालस्य रुन्ध्यान्नियतं रक्तस्रावं प्रवाहिकाम् ॥ ४५२ ॥

(चन्द्र-)

वत्सकातिविषापाठाः समङ्गाबिल्वदीप्यकान् ।
मधुना लेहयेद् बालं सर्वातीसारनाशनम् ॥ ४५३ ॥

नाळिकेरस्य पुष्पाणि जलेन सह पाचयेत् ।
मधुना सह पातव्यं रक्तातीसारनाशनम् ॥ ४५४ ॥

(योगमा-)

अनन्तादिर्गणो योज्यः क्षीरस्तन्यरसादिभिः ।
दीप्यकस्तन्यसंयुक्तस्तैलेन सह योजितः ।
अतीसाराणि सर्वाणि बालानामाशु नाशयेत् ॥ ४५५ ॥

(सारसंक्षे-)

मधुनातिविषाशृङ्गीपिप्पलीर्लेहयेच्छिशुम् ।
एकां वातिविषां कासज्वरच्छर्दिरुपद्रुतम् ॥ ४५६ ॥

(वाहटे)

भार्ङ्गीकणाविश्वकुळीरशृङ्गीचूर्णं विदध्यान्मधुना शिशूनाम् ।
श्वासे सकासे सकफे घृतं वा क्षीरे बृहत्याः फलमूलसिद्धम् ॥ ४५७॥

(योगामृ-)

क्षौद्रसनाथेन सदा कृष्णाकल्केन लिप्तयोः स्तनयोः ।
आपानेन शिशूनां प्रबलोऽपि विनश्यति श्लेष्मा ॥ ४५८ ॥

यदि वहति शिशोः कण्ठे घोर्घोरीशब्दमुल्बणः श्लेष्मा ।
वमनाय मदनमिश्रं क्षीरं परिपाययेत्कामम् ॥ ४५९ ॥

(अमृताञ्ज-)

वांशीकृष्णाञ्जनैर्लाजाशृङ्गीमरिचमाक्षिकैः ।
लेहः शिशोर्विधातव्यः छर्दिश्वासज्वरापहः ॥ ४६० ॥

(चन्द्र-)

बिल्वमूलस्य निष्क्वाथे लाजचूर्णं सशर्करम् ।
आलोड्य पाययेत् बालं छर्दिक्रिमिविनाशनम् ॥ ४६१ ॥

(काश्य-)

प्रसूते शालिलाजानां यवागूमुपकल्पिताम् ।
सुशीतां मधुसंयुक्तां पिबेच्छर्दिहरां शिशुः ॥ ४६२ ॥
छर्दिहिक्कापहैर्लाजबीजपूराम्लसैन्धवात् ।
लाजक्षौद्रसितासर्पिस्सैन्धवान्वाऽवलेहयेत् ॥ ४६३ ॥

(प्रयोग-)

आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्दिहा ॥ ४६४ ॥

(चन्द्र-)

मृद्वीकोत्पलनालैस्तु यवागूं पाययेत्तनुम् ।
तस्या मण्डस्तु निस्सिक्थश्शीतस्तृष्णाविनाशनः ॥ ४६५ ॥

(काश्य-)

पीतं पीतं वमति यस्तन्यन्तं मधुसर्पिषा ।
द्विवार्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ ४६६ ॥

(बाहटे)

इन्द्रपुष्पीवृषफलं बीजमुर्वारुकस्य च ।
मूषिकस्य पुरीषञ्च गोरेखाबीजमेव च ॥ ४६७ ॥
एतानि समभागानि पिष्ट्वा भृङ्गरसेन तु ।
लेपयेन्नाभिवस्तौ च स्रंसते मूत्रविट् तथा ।
मधूकोषणयोः कल्कं गोमूत्रेणापि लेपयेत् ॥ ४६८ ॥

(तन्त्रा-)

कृष्णाश्मभित्सिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतम् ।
मूत्रग्रहे प्रयोक्तव्यं शिशूनां लेहमुत्तमम् ॥ ४६९ ॥

श्वदंष्ट्राफलचूर्णन्तु शिशोर्दद्यान्मधुप्लुतम् ।
मूत्रकृच्छ्रापहं क्षीरं पेयं तन्मूलसाधितम् ॥ ४७० ॥
(चन्द्र-)

अत्यह्रस्वप्नशीताम्बुश्लैष्मिकस्तन्यसेविनः ।
शिशोः कफेन रुद्धेषु स्रोतस्सु रसवाहिषु ॥ ४७१ ॥
अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते ।
कुमारः शुष्यति ततः स्निग्धशुष्कमुखेक्षणः ॥ ४७२ ॥
सैन्धवव्योषशार्ङ्गष्ठापाठागिरिकदम्बकान् ।
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत् ॥ ४७३ ॥
यष्ट्याह्वपिप्पलीलोध्रपद्मकोत्पलचन्दनैः ।
तालीसशारिवाभ्यां च साधितं शोषजिद्घृतम् ॥ ४७४ ॥
शृङ्गीमधूलिकाभार्ङ्गीपिप्पलीदेवदारुभिः ।
अश्वगन्धाद्विकाकोलीरास्नर्षभकजीवकैः ॥ ४७५ ॥
सूप्यपर्णीविडङ्गैश्च कल्कितैः साधितं घृतम् ।
शशोत्तमाङ्गनिर्यूहे शुष्यतः पुष्टिकृत्परम् ॥ ४७६ ॥
वचावयस्थातगरकायस्थाचोरकैश्शृतम् ।
बस्तमूत्रसुराभ्याञ्च तैलमभ्यञ्जने हितम् ॥ ४७७ ॥
(वाहटे)

कुमाराः क्षीणमांसाः स्युर्ये चात्र व्रणशोषिणः ।
कुक्कुटाण्डाश्वगन्धाभ्यां क्षीरे सिद्धं घृतं हितम् ॥ ४७८ ॥
बृंहणीयञ्च हृद्यञ्च बलवर्णविवर्धनम् ॥ ४७९ ॥
(तन्त्रा)

लाक्षारससमं तैलप्रस्थं मस्तुचतुर्गुणम् ॥
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ।
समूर्वारोहिणीरास्नाशताह्वामधुकैस्समैः ॥ ४८० ॥
सिद्धं लाक्षादिकं नाम तैलमभ्यञ्जनादिदम् ।
बल्यञ्ज्वरक्षयोन्मादश्वासापस्मारवातजित् ॥ ४८१ ॥
यक्षराक्षसभूतघ्नं गर्भिणीनाञ्च शस्यते ।
सदन्तो जायते यस्तु दन्ताः प्राग्यस्य चोत्तराः ॥ ४८२ ॥

कुर्वीत तस्मिन्नुत्पाते शान्तिकञ्च द्विजातये।
दद्यात्सदक्षिणं बालं नैगमेषञ्च पूजयेत् ॥ ४८३ ॥
तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ ४८४ ॥
तालुपाकस्स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम्।
तृडास्यकण्ड्वक्षिरुजा ग्रीवादुर्धरता वमिः ॥ ४८५ ॥
तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत्।
तालु तद्वत्कणाशुण्ठीगोशकृद्रससैन्धवैः ॥ ४८६ ॥
शृङ्गिबेरनिशाभृङ्गं कल्कितं वटपल्लवैः।
बद्ध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ॥ ४८७ ॥
रसेन लिम्पेत्ताल्वास्यं नेत्रे च परिषेचयेत्।
हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ॥ ४८८ ॥
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात्।
मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः ॥ ४८९ ॥
ताम्रो व्रणोन्तःकण्डूमाञ्जायते भूर्युपद्रवः।
केचित्तं मातृकादोषं वदन्त्यन्ये च पूतनाम् ॥ ४९० ॥
पृष्ठारुर्गुदकुट्टञ्च केचिच्च तमनामकम्।
तत्र धात्र्याः पयश्शोध्यं पित्तश्लेष्महरौषधैः ॥ ४९१ ॥
शृतशीतञ्च शीताम्बुयुक्तमन्तरपानकम्[१]।
सक्षौद्रताक्ष्र्यशैलेन व्रणं तेन च लेपयेत् ॥ ४९२ ॥
त्रिफलाबदरीप्लक्षत्वक्क्काथपरिषेचितम्।
रागकण्डूत्कटे कुर्याद्रक्तस्रावं जळौकसा ॥ ४९३ ॥
सर्वं च पित्तव्रणजित् शस्यते गुदकुट्टके ॥ ४९४ ॥

(बाहटे-)

गुदपाकेषु बालानां पित्तघ्नीं कारयेत्क्रियाम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ४९५ ॥

(तन्त्रा-)

१. सितशीतं चेति मुद्रिताष्टाङ्गसङ्ग्रहे.

शल्मलीकण्टकप्रख्याकफमारुतकोपजा ।
शिशूनां पिटका वक्त्रे विज्ञेया मुखदूषिका ॥ ४९६ ॥

घृंक्षये(?घर्षयेत्) सामजाक्षीरैर्जीरकाञ्जनसंयुतैः ।
जात्या रसैर्वापि तथा तेन सा विनिवर्तते ॥ ४९७ ॥

अश्वत्थत्वग्गदक्षौद्रैर्मुखपाके प्रलेपनम् ।
दार्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथापरम् ॥ ४९८ ॥

(प्रयोगसि)-

पित्तेन जूर्त्यार्त्तियुताश्शरीरे स्फोटा भवन्त्याशु लयं प्रयान्ति ।
रात्रौ दिवान्ते च पुनर्भवन्ति प्रायः शिशूनां स निचूरिकाख्यः ॥
तेनैव तेषां पिळकास्सदाहा कण्डूयुतास्तद्विपवज्रमाहुः ।
त्रिजातशीतामयदारुयष्टीवरासुगन्धा कुमुदोत्पलश्च ॥ ५०० ॥

वरी सरळमाञ्जिष्ठा कमलं सशताह्वयम् ।
क्षीरेण पिष्ट्वा दूर्वाज्यमिश्रं लिम्पेत्तयोर्हितम् ॥ ५०१ ॥

क्षीरवृक्षाङ्कुरं दूर्वामूलं शीतञ्जलाह्वयम् ।
शारिवां तिलयष्टिश्च तयोर्लिम्पेत्सकाञ्जिकम् ॥ ५०२ ॥

(तन्त्रा-)

वातेनाध्मापितं नाभिं सरुजं तुण्डसंज्ञितम् ।
मारुतघ्नैः प्रशमयेत्स्नेहस्वेदोपनाहनैः ॥ ५०३ ॥

(सुश्रु)-

मृत्पिण्डेनाग्निवर्णेन क्षीरसिक्तेन सोष्मणा ।
स्वेदयेदुच्छ्रितं नाभिं तुण्डं तेन प्रशाम्यति ॥ ५०४ ॥

नाभिपाके निशालोध्रप्रियङ्गुमधुकैश्शृतम् ।
तैलमभ्यञ्जनं तैलमेभिर्वाप्यवचूर्णितम् ॥ ५०५ ॥

(चन्द्र)-

देवदारुवचाशिग्रुफलत्रयपयोमुचाम् ।
क्वाथस्सकृष्णापृथ्वीकाकल्कः सर्वान् क्रमीन्हरेत् ॥ ५०६ ॥

(नारायणीये)

कुण्डालास्त्रिविधाः प्रोक्ताः वातपित्तकफैर्नृणाम् ।
ते तु सर्वत्र देहे स्युरेकदेशेऽपि वा पुनः ॥ ५०७ ॥

जायन्ते ग्रन्थिवत्पूर्वमुन्नता रक्तमांसगाः।
ततः कालेन पक्वास्ते कुण्डवद्यान्ति निम्नताम् ॥ ५०८ ॥

कृष्णं तोदज्वरयुतं वातात्कुण्डालकं भवेत्।
सदाहपाकासृक्स्रावं क्षिप्रपाकि च पित्ततः ॥ ५०९ ॥

सकण्डूगौरवं स्निग्ध्यस्तैमित्यसहितं कफात्।
ते स्युस्सुदुस्तरा घोरा बालानान्तु विशेषतः ॥ ५१० ॥

पुष्पाश्वत्थस्य पञ्चाङ्गक्वाथे तत्कल्कसंयुते।
तैलं पक्वन्तु सक्षीरं कुण्डालकविनाशनम् ॥ ५११ ॥

कदळीपत्रजं भस्म तैलेन सहितं हितम्।
दग्ध्वा हरिद्रां सञ्चूर्ण्य तान्तु तैलेन लेपयेत् ॥ ५१२ ॥

पुष्पाश्वत्थत्वचश्चूर्णं सूक्ष्मं तैलेन लेपयेत्।
कुण्डालं विनिहन्त्याशु सर्वदुष्टव्रणव्रणुत् ॥ ५१३ ॥

उन्मत्तक्षारचूर्णं वा तैलेन सह लेपयेत्।
उन्मत्तं कदळीपत्रं रजनीं च पृथक् पृथक् ॥ ५१४ ॥

दग्ध्वा तत् भस्म तैलेन लेपं कुण्डालनाशनम्।

(तन्त्रा)-

अरविन्दस्य पञ्चाङ्गं पुष्पाश्वत्थस्य पञ्चकम्।
पिष्ट्वा क्षीरेण संसिद्धं सर्पिः कुण्डालनाशनम् ॥ ५१५ ॥

आमलक्याः फलं पत्रं त्वचश्च मधुकं तथा।
शकृद्रसे गवामेतत्तैलं कुण्डालनाशनम् ॥ ५१६ ॥

कल्केन यष्टीमधुकस्य तैलं चतुर्गुणे पद्मदळप्रभूते।
रसे विपक्वं विनिहन्ति घोरं कुण्डालकं वायुरिवाभ्रवृन्दम् ॥ ५१७ ॥

(योगमा)-

अश्वत्थत्वग्गतं क्षौद्रं मुखपाके प्रलेपनम्।
दार्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथा परम् ॥ ५१८ ॥

अर्कवल्यभयानिम्बकार्पासतलपोटकम्।
चिञ्चाककुभशिम्बारुयजातीकिंशुकमार्कवम् ॥ ५१९ ॥

वसिरं क्षीरवृक्षत्वक् सुमनाः खरमञ्जरी ।
व्रणरोही सदाभद्रा हरिद्रा च निदिग्धिका ॥ ५२० ॥
एषां स्वरसकल्कैश्च सिद्धं तैलं व्रणापहम् ।
कुण्डालहरणश्चैतद्दुष्टनाळीव्रणापहम् ॥ ५२१ ॥
मनश्शिला शङ्खनाभिः पिप्पल्यथ रसाञ्जनम् ।
वर्त्तिः क्षौद्रेण संयुक्ता बालसर्वाक्षिरोगनुत् ॥ ५२२ ॥
त्वचो बृहत्या भागौ द्वौ भाग एकोऽञ्जनस्य च ।
कुकूणकेक्षिलेपोयमञ्जनञ्चैव शस्यते ॥ ५२३ ॥

(चाक्षुषे)

अजाक्षीरेण संपिष्टैर्दार्वीगैरिकमुस्तकैः ।
बहिरालेपनं कार्यं अक्षिरोगविनाशनम् ॥ ५२४ ॥

(सिद्धसा)-

घृतेन सिन्धुमिश्रैलाहिङ्गुभार्ङ्गीर(हो?जो) लिह्न् ।
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः ॥ ५२५ ॥

(भद्रव)-

पथ्या भृङ्गी[1] वचाहिङ्गुनिशाः पञ्चामृतं स्मृतम् ।
बालानाममृतं बल्यमग्निवर्धनमेव च ॥ ५२६ ॥

(तन्त्रा)

गृहधूमनिशाकुष्ठराजिकेन्द्रयवैश्शिशोः ।
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः ॥ ५२७ ॥

(भद्रव)-

रजनीदारुसरळश्रेयसी बृहतीद्वयम् ।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥ ५२८ ॥
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ।
अतीसारज्वरश्वासकामलापाण्डुकासजित् ॥ ५२९ ॥
बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ।

(बाहटे)

क्षीरपस्य कुमारस्य सौम्यादग्निर्न दीप्यते ॥ ५३० ॥

---

१. भृङ्गीतिपा.

स्तन्यदोषेण वा केचिच्छूलाध्मानयुता भृशम् ।
स्रंसते पिच्छिलं विस्रं विशदञ्च मुहुर्मुहुः ॥ ५३१ ॥

छर्द्यते च सदा बालोऽप्यजीर्णमिति निर्दिशेत् ।
अन्नादस्य कुमारस्य जीर्णाजीर्णौ....... ॥ ५३२ ॥

बालकस्याग्निवैषम्याद् भुक्तमन्नं न पच्यते ।
विदग्ध्य छर्द्यते तेन विदग्धमतिसार्यते ॥ ५३३ ॥

प्रलापस्तेन दोषेण मदो मूर्छा ज्वरस्तथा ।
वाक्सङ्गो वातशूलश्च स्याद् गात्रारुचितापि वा ॥ ५३४ ॥

विषूचिकाया विज्ञानं चिकित्सितमतःपरम् ।
वामयेत्तं विशुद्धोयं संशुद्धमपकर्षयेत् ॥ ५३५ ॥

जीर्णाजीर्णविशङ्कायामुष्णमम्बु पिबेन्नरः ।
नागरातिविषाहिङ्गु चित्रमूलं वचाभया ॥ ५३६ ॥

चूर्णमुष्णेन तोयेन अजीर्णार्त्तः पिबेच्छिशुः ।
वचादिं वा हरिद्रादिं पाययेदामपाचनम् ॥ ५३७ ॥

सश्रृङ्गिबेरलवणां यवागूं पाययेत्ततः ।
तथा संशान्तदोषस्य दीपनीयैस्समाचरेत् ॥ ५३८ ॥

उष्णाम्भसा पिबेच्छुण्ठीवरालंकणदीप्यकम् ।
स्तन्येनामपराङ्गं वा(१) पिबेद्बालोऽप्यजूर्त्तिके ॥ ५३९ ॥

त्रयो वातोद्धता दोषा धमनीनिर्गमाश्शिरः ।
स्थिरीभूतप्रतिष्ठाश्च नानाव्यञ्जनवेदनाः ॥ ५४० ॥

शिरःकपालमाश्रित्य जनयन्ति महारुजाः ।
अर्शः प्रवर्तते तस्य शेषे बहुविधास्तथा ॥ ५४१ ॥

गोस्तनाकारसदृशं सुषिरं कर्कारान्वितम् ।
बालमृणालीमात्रैस्तु मुखैर्बहुभिरावृतम् ॥ ५४२ ॥

गुरुत्वं तीव्रदाहत्वं निस्तोदनमथापरैः ।
विविधैर्व्यञ्जनैर्युक्तं वल्मीकामिति निर्दिशेत् ॥ ५४३ ॥

---

१. वरालवणदीप्यकमिति—पा.

छेद्यं भेद्यश्च लेख्यं च विस्राव्यञ्चेति निर्दिशेत् ।
भीतस्य सुकुमारस्य वृद्धस्य तरुणस्य च ॥ ५४४ ॥

ग्राहयेद्वा जलूकाभिर्मतिमान्दुष्टशोणितम् ।
व्रणक्रिया च कर्तव्या नित्यं शस्त्रं विजानता ॥ ५४५ ॥

नक्तमालस्य पत्राणि पत्राणि कृतमालिनः ।
सुमनायाश्च पत्राणि कल्कं दृषदि पेषयेत् ॥ ५४६ ॥

हरिद्राकल्कसंयुक्तं तैलमेतैर्विपाचयेत् ।
व्रणेषु रोपणीयन्तु जातकण्डुषु दापयेत् ॥ ५४७ ॥

सूर्यवल्याश्च मूलानां त्वचः संहृत्य पेषयेत् ।
श्लक्ष्णानि कृत्वा चूर्णानि तैलेन सह संसृजेत् ॥ ५४८ ॥

आदित्यपाकं कृत्वैतद्व्रणमालेपयेद्भिषक् ।
उपर्युपरि दातव्यं तदा सम्पद्यते सुखी ॥ ५४९ ॥

पाठापथ्याहिगन्धाद्रुमसरळबलाद्वन्द्वमाद्रीद्विरात्री
तेजोह्वाव्योषकद्र्वीकुटचगदवचामातुलुङ्गाजमोजैः ।
गण्डीरग्रन्थिकोलाग्न्यरलुकारिकणाडाडिमैः सिद्धमाज्यं
क्षीरे बालातिसारज्वरवमिकृशताल्पाग्निशोफारुचिघ्नम् ॥

(काश्यपीयादादाय श्लोकीकृतम्)

पाठावेल्लद्विरजनीमुस्ताभार्ङ्गीपुनर्नवैः ।
सबिल्वत्र्यूषणैः सर्पिः वृश्चिकाळियुतैश्शृतम् ॥ ५५१ ॥
लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः ।

(वाहटे)

हिङ्गुभार्ङ्गीवचायष्टीव्योषकुष्ठाजमोजकैः ॥ ५५२ ॥
मुस्ताविषारसोनैश्च स्फूर्जातकरसाढके ।
सिद्धं क्षीरे च बालानां सर्वातीसारनाशनम् ॥ ५५३ ॥

(तन्त्रा)-

अळर्कस्वरसप्रस्थे तत्पक्वफलकल्कितम् ।
सिद्धं घृतं शिशोर्लेहात् कासश्वासहरं परम् ॥ ५५४ ॥

(वैदेही)

षट्सप्ताष्टमासेषु नीरुजस्य शुभेऽहनि ।
कर्णौ हिमागमे विद्ध्येद्धात्र्यङ्कस्थस्य सान्त्वयन् ॥ ५५५ ॥
प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ।
दक्षिणेन दधत्सूचीं पालीमन्येन पाणिना ॥ ५५६ ॥
मध्यतः कर्णपीठस्य किञ्चिद्गण्डाशयं प्रति ।
जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ॥ ५५७ ॥
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ।
विध्येद्दैवकृते च्छिद्रे सकृदेवर्जु लाघवात् ॥ ५५८ ॥
नोर्ध्वं न पार्श्वयोर्नाधस्सिरास्तत्र हि संश्रिताः ।
स्थानव्यधान्न रुधिरं नरुग्रागादिसम्भवः ।
स्नेहाक्तं सूचयत्नुस्यूतं सूत्रञ्चानुनिधापयेत् ॥ ५५९ ॥

(वाह)

शनैश्शनैर्विवर्द्धेत तन्तुभिश्च भिषग्वरः ।
अश्वगन्धामपामार्गं पक्कञ्च बृहतीफलम् ॥ ५६० ॥
कुष्ठं कुटजबीजानि अजाक्षीरेण पेषयेत् ।
मासमुद्वर्त्तनात्कर्णं हस्तिहस्तोपमं भवेत् ॥ ५६१ ॥

(प्रयोगसि)

अथैनं जातदशनं क्रमशोऽपनयेत्स्तनात् ॥ ५६२ ॥

(वाह)

हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचाम् ।
आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षणीम् ॥ ५६३ ॥

(तत्रैव)

वचाचूर्णफलं लिह्याद् ब्रह्मीस्वरसभावितम् ।
क्षीरभुक् प्रत्यहं मासं मेधावी स्याद् घृतद्रुतम् ॥ ५६४ ॥

(चन्द्र)

सुचूर्णितं सुवर्णन्तु घृष्टं वा सह सर्पिषा ।
पीतं श्रुतधरं जन्तुं करोतीत्येष निश्चयः ।
बचा वा सततं पथ्या चूर्णिता घृतसंयुता ॥ ५६५ ॥

(तन्त्रा)

बालो यदि लिहेत् घृष्टां क्षौद्रे हेमशलाकया ।
षचां वाचस्पतिस्तस्य पुरतः स्थातुमक्षमः ॥ ५६६ ॥

विश्वाजमोजरजनीद्वयसैन्धवोग्रा
यष्ट्याह्वकुष्टमगधोद्भवजीरकाणाम् ।
चूर्णं प्रभातसमये लिहतां ससर्पि-
र्वाग्देवता निवसति स्वयमेव वक्त्रे ॥ ५६७ ॥

(कार्श्वी)

कुष्ठाश्वगन्धे लवणाजमोजे द्वे जीरके त्रीणि कटूनि पाठा ।
मङ्गल्यपुष्पश्च समानि चूर्णं कृत्वा च चूर्णेन वचोद्भवेन ॥ ५६८ ॥
तुल्येन युक्तं बहुशो रसेन तद्भावितं ब्रह्मविनिर्मितायाः ।
सर्पिर्मधुभ्यां तु ततोक्षमात्रं लिह्यान्नरः सप्तदिनं हिताशी ॥५६९॥

शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्रह्मीरसे घृतम् ।
पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमम् ॥ ५७० ॥

(चन्द्र)-

सब्रह्मीस्वरसार्मणे वृषजयामण्डूकपर्णीवरी-
च्छिन्नोत्थार्द्धतुलाविपाचितरसप्रस्थद्वये कार्षिकैः ।
सिद्धार्थासितनिम्बशम्बररुहब्रह्मीवचावाकुची-
बिल्वत्वक्फलिनीनिशापटुतुटीवेल्लार्कपुष्प्यासयैः ॥ ५७१ ॥

सिद्धं सार्द्धसितोपलं समपयो हैयङ्गवीनाढकं
क्षौद्रप्रस्थयुतं त्रिघृष्टकनकं बालेन लीढं जयेत् ।
मूकत्वं जडतां स्खलद्वचनतामश्रोत्रतां मूढतां
हिक्काकासमसूरिकाक्षयविषापस्मारपाण्डूनपि ॥ ५७२ ॥

(तन्त्रान्तरे)

ब्रह्मीसिद्धार्थकवचाशारिबाकुष्ठसैन्धवैः ।
सकणैस्साधितं पीतं वाङ्मेधास्मृतिकृद्घृतम् ॥ ५७३ ॥
आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम् ।

(वाहटे)

व्योषवरापटुरजनीवृद्धवचाशर्कराविडङ्गभृतम् ।
सर्पिर्ब्राह्मीस्वरसे बालो विद्वान् लिहन् भवति ॥ ५७४ ॥
(काशी)।

स्वरसे साधयेद्ब्राह्मया घृतप्रस्थं चतुर्गुणे ।
कार्षिकैस्सैन्धववचाशर्कराकृमिजित्कणैः ॥ ५७५ ॥
पथ्यानिशात्रिवृद्धात्रीफलैरपि पलोन्मितैः ।
घृतं सारस्वतं नाम मेध्यं वाचाश्च शुद्धिकृत् ॥ ५७६ ॥

इति योगरत्नसमुच्चये
बन्ध्यागर्भिणीसूतिकाबालचिकित्साधिकारः
एकविंशः ।

---

## अथ बालग्रहप्रतिषेधाधिकारः
## द्वाविंशः ॥

पराशरः—

वरप्रसादं गोकर्णे लब्ध्वा रावणसूरिणा
कृतं कुमारतन्त्रं यत्तत् प्रवक्ष्ये समासतः ॥ १ ॥

प्रथमे दिवसे मासे वर्षे च नन्दना नाम मातरी गृह्णाति बालम्। तया गृहीतस्य पूर्वं ज्वरः स्यात् । गात्रशोषशोफौ चाशनञ्च न गृह्णाति ।

बलिन्तस्य प्रवक्ष्यामि येन मुञ्चति मातरी ॥ २ ॥

नद्या मृत्तिकां गृहीत्वा पुत्तलिकां कारयेत् । शुक्लोदनगन्धानुलेपनपुष्पाणि पञ्च पञ्च ध्वजदीपस्वस्तिकान् पूर्वाह्णे पूर्वस्यां दिशि बलिं दद्यात् । राजसर्षपोशीरशिवनिर्माल्यमार्जाररोममानुषकेशनिम्बपत्रगव्यघृतैर्बालं धूपयेत् । चतुर्थे दिने शान्त्युदकेन स्नापयेत् । ब्राह्मणं भिक्षुकं वा क्षीरेण भोजयेत् । बालः स्वस्थो भवति । ओं ह्रीं फट् स्वाहा । द्वितीये दिवसे मासे वर्षे वा सुनन्दा नाम बालं गृह्णाति । तया गृहीतस्य ज्वरदन्तघाताक्षिनिमीलनसन्ततरोदनाशनद्वेषाध्मानानि स्युः । तत्र तण्डुलप्रस्थकृतपुत्तलिकाः त्रयोदश स्वस्तिकध्वजान् चतुरो दीपानर्ध-

प्रस्थसिद्धापूपं मत्स्यं मांसं शुक्लोदनं पश्चिमायां दिशि पश्चिमसन्ध्यायां त्रिदिनं बलिं दद्यात्। धूपनस्नानभोजनमन्त्राः पूर्ववत्। तृतीये दिवसे मासे वर्षे च पूतना नाम मातरी बालं गृह्णाति। तया गृहीतस्य ज्वररोमहर्षाङ्गभेदाक्षिनिमीलनान्नद्वेषा भवन्ति। तत्र तण्डुलप्रस्थपुत्तळिकां रक्तान्योदनध्वजस्वस्तिकपुष्पगन्धानुलेपनानि पश्चिमसन्ध्यायामुत्तरस्यां दिशि बलिन्दद्यात्। धूपस्नानमन्त्राणि पूर्ववत्। चतुर्थे दिवसे मासे वर्षे वा मुखमण्डिका नाम बालं गृह्णाति। तस्य ज्वरगात्रभेदशिरोत्भ्रमनाक्षिनिमीलनानि स्युः। तिलपिष्टकृतपुत्तळिकां बिल्वकण्टकैरष्टाङ्गं वेधयेत्। शुक्लपुष्पध्वजस्वस्तिका मत्स्यं मांसं प्रस्थार्धसिद्धोदनमपूपं पश्चिमायां दिशि त्रिसन्ध्यं बलिं दद्यात्। गोशृङ्गलशुनसर्पनिर्मोकमार्जाररोममानुषकेशनिम्बपत्रगव्यघृतैर्धूपयेत्। स्नानभोजनमन्त्राः पूर्ववदेव। पञ्चमे दिवसे मासे वर्षे वा यदा बिलाळिका नाम मातरीबालं गृहणाति। तस्य ज्वरशोषश्वासकासहिक्का भवन्ति। तण्डुलप्रस्थपुत्तळिकाः शुक्लोदनध्वजशुक्लगन्धदीपपञ्चरक्तपुष्पाण्यपराह्णे पश्चिमायां दिशि वृक्षमूले बलिन्दद्यात्। धूपस्नानभोजनमन्त्राः पूर्ववत्। षष्ठे दिवसे मासे वर्षे वा शकुनी नाम गृह्णाति। तस्य ज्वरोद्वेजनगात्रशोषाः स्युः। तत्र तण्डुलप्रस्थपुत्तळिकां कृष्णपुष्पध्वजस्वस्तिकान् मत्स्यं मांसप्रस्थोदनं पूर्वाह्णे पश्चिमस्यां दिशि बलिन्दद्यात्। धूपस्नानभोजनमन्त्राणि पूर्ववत्। सप्तमे दिवसे मासे वर्षे वा शुष्करेवती नाम मातरी गृह्णाति। तस्य ज्वरगात्रभेदान्नस्तनद्वेषाः स्युः। तत्र तण्डुलप्रस्थपुत्तल्किां सप्तध्वजस्वस्तिकदीपपुष्पाणि मत्स्यं मांसमुत्तरस्यां दिशि बलिं दद्यात्। धूपादीनि पूर्ववत्। अष्टमे दिवसे मासे वर्षे वा बिलाळिका नाम मातरी गृह्णाति। तस्य ज्वराङ्गभेदरोदनजिह्वाशोषाङ्गप्रेरणाक्षिनिमीलनान्नद्वेषाः स्युः। तत्र तण्डुलप्रस्थपुत्तळिकां पायसगुळमधुसर्पींषि चतुरो ध्वजदीपान् लाजमेषमांसपर्पटिकाः शष्कुलिका रक्तपुष्पगन्धानि कृष्णाष्टम्यां दिशि दक्षिणस्यां पूर्वसन्ध्यायां बलिं दद्यात्। धूपादि पूर्ववत्। ओं नमो नारायणाय त्रैलोक्यविद्रावणाय ज्वल ज्वल ओं ह्रीं फट् स्वाहा। नवमे दिवसे मासे वर्षे वा मदमेदसा नाम गृह्णाति बालम्। तस्य ज्वर-

छर्दिग्रहण्याध्मानकासशूलशोषाङ्गभेदाः स्युः । तत्र तण्डुलप्रस्थपुत्तलिकां शुक्लोदनमत्स्यमांसशष्कुलिकापर्पटिका उत्तरस्यान्दिशि पूर्वसन्ध्यायां बलिं दद्यात् । धूपादि पूर्ववत् । ओंनमो भगवते वासुदेवाय कृष्णमण्डलीबलिमादाय हन हन हुं फट् स्वाहा । दशमे दिवसे मासे वर्षे वा रेवती नाम बालं गृह्णाति । तस्य ज्वरच्छर्दिश्वासकासशूलाध्मानान्नद्वेषाः स्युः । तत्र तण्डुलप्रस्थपुत्तलिकां बिल्वकण्टकैरष्टाङ्गं वेधयेत् । मघृतगुळमोदनं पञ्चविंशतिध्वजस्वस्तिकदीपांश्चत्वारि रक्तपुष्पाणि दक्षिणस्यां दिशि त्रिसन्ध्यं बलिं दद्यात् । धूपादि पूर्ववत् । ओंनमो भगवते वैश्वदेवाय हन हन हुं फट् स्वाहा । एकादशे दिवसे मासे वर्षे वा अर्चका नाम बालं गृह्णाति । तस्य ज्वरान्नद्वेषशोषगात्रभेदाः स्युः । ऊर्ध्वदृक् च स्यात् । तत्र माषपुत्तळिकां शुक्लान्योदनपुष्पाणि पञ्चविंशतिं ध्वजस्वस्तिकदीपान् दक्षिणस्यां दिशि पूर्वसन्ध्यायां बलिं दद्यात् । धूपादि पूर्ववत् । ओं नमो भगवते नारायणाय चन्द्रहासवज्रहस्ताय ज्वल ज्वल दुष्टनिग्रहाय ओं ह्रीं फट् स्वाहा । द्वादशे दिवसे मासे वर्षे वा अद्भुता नाम बालं गृह्णाति । तस्य ज्वरो दन्तखादनमतिरोदनमक्षिशूलमूर्ध्वरोमता च ददामीति वाचश्च । तत्र तण्डुलप्रस्थपुत्तळिकां त्रयोदश स्वस्तिकध्वजदीपानपूपान् मत्स्यमांसपर्पटिकाश्च दक्षिणस्यां दिशि बलिं दद्यात् । धूपादिपूर्ववत् । ओं नमो नारायणाय प्रज्वलितहस्ताय हन हन शोधय मर्दय मर्दय पातय पातय हूं हूं हन हन हुं फट् स्वाहा ।

इति नारायणीयं बालतन्त्रं समाप्तम् ।

धन्वन्तरिरुवाच—

धन्वनी तु गृही नाम गृह्णीते चातिमात्रकम् ।
तया गृहीतस्य शिशोर्लक्षणं च निबोध मे ॥ ३ ॥

ग्रीवा च पृष्ठतो भग्ना लाला च स्रवते मुखात् ।
उद्वेजयति गात्राणि न गृह्णाति स्तनन्तथा ॥ ४ ॥

ईदृशं लक्षणं दृष्ट्वा चिकित्सां तत्र कारयेत् ।
मञ्जिष्ठां तगरं लोध्रं हरितालं रसाञ्जनम् ॥ ५ ॥
पिष्ट्वैतान् पयसा बालन्तेन कल्केन लेपयेत् ।
गन्धमाल्यं शर्कराश्च पायसं दाधिपंचमम् ॥
पञ्चवर्णोदनञ्चापि दद्यान्मुञ्चति सा ग्रही ॥ ६ ॥

ओं नमो भगवति धन्विनि कार्मुकधारिणि । इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

भिषगत्रोक्तमन्त्रैस्तु मन्त्रयित्वा तु सप्तशः ।
बलिं निवेदयेत्तत्र यत्र चोक्ता बलिक्रिया ॥ ७ ॥
कालेऽनुक्ते निशायान्तु देशेऽनुक्ते चतुष्पथे ।
द्रव्येऽनुक्तेन्नमात्रेण दद्याद्भिषगतन्द्रितः ॥ ८ ॥
कूजते स्तनते बालो गात्रं सङ्कोचयेत्ततः ।
भीषण्या प्रगृहीतस्तु द्वितीये दिवसे शिशुः ॥ ९ ॥
तस्य कुर्यात् प्रतीकारं येन सम्पद्यते सुखी ।
अपामार्गमुशीरञ्च पिप्पली चित्रकं समम् ॥ १० ॥
अजामूत्रेण पिष्ट्वा तु तेन बालं प्रलेपयेत् ।
निम्बगोदन्तकेशाहित्वङ्नखैश्चापि धूपयेत् ॥ ११ ॥
मत्स्योदनं सुरां मांसं गन्धमाल्यञ्च दापयेत् ।
बलिं दद्यात्तु मन्त्रेण ततो मुञ्चति सा ग्रही ॥ १२ ॥

ओंनमो भगवति भीषणि भुजगधारिणि इमं बलिं गृहाण । बालं मुञ्च स्वाहा ।

नोन्मीलयति नेत्रे च न गृह्णाति स्तनन्ततः ।
कण्ठमाल्या गृहीतस्तु तृतीये दिवसे शिशुः ॥ १३ ॥
गजदन्तनखोशीरानजामूत्रेण पेषयेत् ।
अनेन लेपितं बालं धूपयेन्निम्बसर्षपैः ।
बलिं दद्यात्तु मन्त्रेण ततो मुञ्चति सा ग्रही ॥ १४ ॥

ओं नमो भगवति कण्टमालिनि इमं बलिं गृहाण। बालं मुञ्च स्वाहा।

फेनमुद्गिरते चैव दिशश्चैव निरीक्षते।
उद्वेजयति गात्राणि रुदते च पुनः पुनः॥ १५॥

काकोल्या च गृहीतस्तु चतुर्थे दिवसे शिशुः।
गजदन्ताहिनिर्मोकराजसर्षपसंयुतम्॥ १६॥

गोमूत्रेणैव पिष्ट्वा वा तेन बालं प्रलेपयेत्।
कपिरोमनखैर्निम्बसर्षपैश्चैव धूपयेत्॥ १७॥

अन्नपानीयमांसैश्च बलिं दद्यात्समन्त्रकम्।
अनेनैव विधानेन ततो मुञ्चति सा ग्रही॥ १८॥

ओं नमो भगवति काकोलि कृष्णाभरणभूषिते इमं बलिं गृहाण बालं मुञ्च स्वाहा।

मातुरुत्सङ्गवर्ती तु मुष्टिं बध्वा तु नित्यशः।
जृम्भते स्वपते वापि आकाशञ्च निरीक्षते॥ १९॥

हस्तिन्या च गृहीतस्तु पञ्चमे दिवसे शिशुः।
मेषशृङ्गवचा लोध्रं हरितालं मनःशिला॥ २०॥

एतानि चोदकैः पिष्ट्वा तेन बालं प्रलेपयेत्।
रक्तवर्णानि पुष्पाणि गन्धं चैव तथाविधम्॥ २१॥

ओदनं गुळसंयुक्तं बलिं दद्यात्समन्त्रकम्।
एतेनैव विधानेन ततो मुञ्चति सा ग्रही॥ २२॥

ओं नमो भगवति हस्तिनि अब्जधारिणि इमं बलिं गृहाण बालं मुञ्च स्वाहा।

भजते हस्तपादौ च श्वसते च पुनः पुनः।
रुदित्वा मुह्यते चापि न गृह्णीते स्तनन्तथा॥ २३॥

शुङ्कार्यापि गृहीतश्च षष्ठे हि दिवसे शिशुः।
सर्ज्जगुग्गुलगोदन्तं कुष्ठं सिद्धार्थकं वचाम्॥ २४॥

घृतेन धूपयित्वा तु तेन बालं प्रलेपयेत्।
गोरोमशृङ्गसर्पाणां निर्मोकञ्चैव धूपयेत्॥ २५॥

पुष्पाणि चन्दनं रक्तमन्नं मांसं तथैव च ।
बलिं दद्याच्च मन्त्रेण ततो मुञ्चति सा ग्रही ॥ २६ ॥

ओन्नमो भगवति रक्तकुलेशाने हुङ्कारि इमं बलिं गृहाण । बालं मुञ्च स्वाहा ।

दंशते मुश्यते चापि कोकिलस्वरसंयुतः ।
पूतिगन्धं च वमति गृध्रगन्धं तथैव च ॥ २७ ॥

मुक्तकेश्या गृहीतश्च सप्तमे दिवसे शिशुः ।
वचां च बृहतीं कुष्ठं गोमूत्रेण च पेषयेत् ॥ २८ ॥

लेपयेद् बालकं तेन नखैर्व्याघ्रस्य धूपनम् ।
बलिं दद्याच्च मन्त्रेण ततो मुञ्चति सा ग्रही ॥ २९ ॥

ओं नमो भगवति मुक्तकेशि रक्ताभरणभूषिते इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

स्वपते हसते बालो गृह्यमाणस्तु रोदिति ।
निरीक्षते दिशस्सर्वा जिह्वाञ्चालयते सदा ॥ ३० ॥

त्रिदण्ड्या तु गृहीतश्च अष्टमे दिवसे शिशुः ।
वचां हिङ्गुसमं पिष्ट्वा तेन बालं प्रलेपयेत् ॥ ३१ ॥

धूपं लशुनसिद्धार्थं मत्स्यमांससुरासवैः ।
बलिं दद्याच्च मन्त्रेण ततो मुञ्चति सा ग्रही ॥ ३२ ॥

ओं नमो भगवति त्रिदण्डि त्रिनयने त्रिशूलहस्ते इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

ऊर्ध्वमुच्छ्वसते नित्यमुत्थितो मुह्यते मुहुः ।
रोदनं कुरुते बालो मुष्टिं बध्नात्युभे भृशम् ॥ ३३ ॥

अजमेष्या गृहीतश्च नवमे दिवसे शिशुः ।
श्वेतया वचया कुष्ठतगरश्वेतसर्षपम् ॥ ३४ ॥

जलेन सह पिष्ट्वा तु तेन बालं प्रलेपयेत् ।
कपिरोमनखैश्चापि धूपं दद्याद्विचक्षणः ॥ ३५ ॥

बलिं दद्याच्च मन्त्रेण गन्धपुष्पादिकं तथा ।
लेपितं धूपितं बालं ततो मुञ्चति सा गृही ॥ ३६ ॥

ओं नमो भगवति अजमेषि मेषाधिरूढे शक्तिहस्ते इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

नीलोत्पलसुवर्णाभं रूपं भवति बालके ।
रोदित्यपि दिवारात्रं गन्धं वा वाति शोभनम् ॥ ३७ ॥

रोदिन्या तु गृहीतस्य दशमे दिवसे शिशुः ।
कुष्ठं सर्जरसं शीतं सर्षपं जलपेषितम् ॥ ३८ ॥

अनेन लेपितं बालं धूपयेद्वा विधूपनैः ।
मांसी च निम्बपत्राणि लाक्षया सह धूपनम् ॥ ३९ ॥

कोद्रवान्नं ततो दद्यात् कलशं वारिपूरितम् ।
बलिं दद्याच्च मन्त्रेण ततो मुञ्चति सा गृही ॥ ४० ॥

ओं नमो भगवति रोदिनि कुन्देन्दुनिर्मले इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

इति दिवसाधिकारः ।

दशस्वेव दिनेष्वेषु यदुक्तं लक्षणं शिशोः ।
तस्मिन्नदृष्टे दृष्टे च मासिके लक्षणे तदा ॥ ४१ ॥

कुर्यान्मासिकमेवात्र कर्म नित्यमतन्द्रितः ।
आरभ्य जन्मदिवसान्मासस्त्रिंशद्दिनैर्युतः ॥ ४२ ॥

तथा द्वादशमासेषु यद्यद्वक्ष्यामि लक्षणम् ।
तस्मिन् दृष्टे तु तत्कार्यं दृष्टे चिह्ने तथाब्दिके ॥ ४३ ॥

अतः परं प्रवक्ष्यामि मासानां विधिमुत्तमम् ।
शृणु जीवकतन्त्रेण[1] मन्त्रांश्चैव पृथक् पृथक् ॥ ४४ ॥

प्रथमे मासि गृह्णाति शकुनी नाम पूतना ।
तया गृहीतो बालस्तु काकरावं करोति च ॥ ४५ ॥

---

१. जीवककल्पेन इति

रोदित्येव दिवारात्रं पूतिगन्धश्च जायते ।
रक्तञ्च स्रवते मूत्रं चक्षुर्भ्यां च न पश्यति ॥ ४६ ॥
तेन सा रमते नित्यं पूतना बलिकाङ्क्षिणी ।
बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखी ॥ ४७ ॥
पायसं त्रिविधं दद्यान्मांसश्चैव चतुर्विधम् ।
रक्तपुष्पं तथा गन्धं वस्त्रं दद्यात्सदीपकम् ॥ ४८ ॥
पानीयञ्च प्रदातव्यं याम्यां दिशि गृहाच्छिशोः ।
करञ्जवृक्षमाश्रित्य मध्याह्ने तु बलिं क्षिपेत् ॥ ४९ ॥
धूपयेन्मेषशृङ्गेण गोदन्तेन नखेन च ।
दीपं दद्याच्च तैलेन सप्तरात्रं बलिं हरेत् ॥ ५० ॥
स्नापितं धूपितं बालं ततो मुञ्चति पूतना ।
ओं नमो भगवत्यै शकुन्यै इमं बलिं गृहाण बालं मुञ्च स्वाहा।
पूतना मकुटा नाम द्वितीये मासि बालकम् ॥ ५१ ॥
गृह्णाति चानया ग्रस्तो जायते काञ्चनप्रभः ।
शीतलानि च गात्राणि निष्पन्दश्चैव जायते ॥ ५२ ॥
ग्रीवा च पृष्ठतो शुष्का मुखं च परिशुष्यति ।
क्षीरं पिबति विस्रब्धं तत्क्षणात्तु समुद्गिरेत् ॥ ५३ ॥
आमतण्डुलपक्वान्नं कृष्णपायसमेव च ।
गन्धपुष्पं तथा धूपं वस्त्रञ्चैव प्रदापयेत् ॥ ५४ ॥
धूपञ्चारिष्टपत्रेण कुसुम्भलशुनेन च ।
दीपश्च निम्बतैलेन पूजयेच्च यथाविधि ॥ ५५ ॥
पूर्वां दिशं समाश्रित्य पूर्वाह्ने तु बलिं हरेत् ।
अनेनैव विधानेन ततो मुञ्चति पूतना ॥ ५६ ॥
ओं नमो भगवत्यै मकुटे शुभाङ्गे इमं बलिं गृहाण बालं मुञ्च स्वाहा ।
पूतना गोमती नाम तृतीये मासि बालकम् ।
गृह्णाति स तया ग्रस्तो बालो रोदिति निष्ठुरम् ॥ ५७॥

स्रवेन्मूत्रपुरीषञ्च मारुतश्च न निन्दति ।
मधुगन्धास्सदा वान्ति वसुगन्धाश्च वाह्यतः (?) ॥ ५८ ॥
ओदनं क्षीरशाकञ्च यवागूं कृष्णपायसम् ।
गुल्मासं तिलचूर्णञ्च पिण्याकं गन्धमाल्यकम् ॥ ५९ ॥
सुगन्धं सर्षपेणैवं धूपयेत्सन्ध्ययोश्शिशुम् ।
स्नापयेत्पञ्चभङ्गेन तिलतैलेन दीपयेत् ॥ ६० ॥
पूर्वां दिशं समाश्रित्य पूर्वाह्णे तु बलिं हरेत् ।
अनेनैव विधानेन ततो मुञ्चति पूतना ॥ ६१ ॥
ओं नमो भगवति गोमति इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

पूतना पिङ्गळा नाम चतुर्थे मासि बालकम् ।
गृह्णाति च गृहीतस्य कम्पते दक्षिणः करः ॥ ६२ ॥
क्षीरं पिबति विस्रब्धं रावं सृजति दारुणम् ।
श्वेतवर्णं शरीरं च मुखं च परिशुष्यति ॥ ६३ ॥
पूतिगन्धो भवेत्तस्य न मन्त्रं नापि चौषधम् ।
वर्जयेत्तादृशं बालं बलिं तत्र न कारयेत् ॥ ६४ ॥
पूतना काञ्चनी नाम पञ्चमे मासि बालकम् ।
गृह्णाति च गृहीतस्तु जायते काञ्चनप्रभः ॥ ६५ ॥
सीदन्ति सर्वगात्राणि मुखञ्च परिशुष्यति ।
क्षीरं पिबति विस्रब्धं रुदते च पुनः पुनः ॥ ६६ ॥
शाकोदनं पूपळिकां पायसं शर्करायुतम् ।
गन्धमाल्यं स्वस्तिकञ्च धूपनं चन्दनं तथा ॥ ६७ ॥
दक्षिणां दिशमाश्रित्य मध्याह्ने तु बलिं हरेत् ।
अनेनैव विधानेन ततो मुञ्चति पूतना ॥ ६८ ॥
ओं नमो भगवति काञ्चनकुमुदप्रभशरीरे कुमुदगन्धे इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

पूतना पङ्कजा नाम षष्ठे मासि तु बालकम् ।
गृह्णाति च गृहीतस्तु रोदित्येव पुनः पुनः ॥ ६९ ॥

श्वासस्तीव्रो भवेत्तस्य कुक्षिशूलश्च जायते ।
मत्स्यमन्नं सुरां मांसमपूपं कृसरं तथा ॥ ७० ॥

मयूरं कुक्कुटं छागं पिष्टेनैव च कारयेत् ।
गन्धपुष्पादिसंयुक्तं बलिं तत्र प्रदापयेत् ॥ ७१ ॥

अनेनैव विधानेन ततो मुञ्चति पूतना ॥ ७२ ॥

ओं नमो भगवति पङ्कजाभरणभूषिते पङ्कजगन्धे इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

पूतना शीतळा नाम सप्तमे मासि बालकम् ।
गृह्णात्यतो गृहीतस्तु श्वसित्यति पुनः पुनः ॥ ७३ ॥

आस्फोटयति गात्राणि आहारं च न वाञ्छति ।
रोदते दन्तवीणां च पूतिगन्धं प्रयाति च ॥ ७४ ॥

मांसोदनं सुरां शाकं गुल्मासं तिलचूर्णकम् ।
कुक्कुटश्चक्रवाकश्च पिष्टेनैव तु कारयेत् ॥ ७५ ॥

गन्धपुष्पादिकं सर्वमप्रमत्तः प्रदापयेत् ।
एकरात्रं बलिं दद्यात् ग्राममध्ये समन्ततः ॥ ७६ ॥

अनेनैव विधानेन ततो मुञ्चति पूतना ॥ ७७ ॥

ओं नमो भगवति शीतळे शीतळशरीरे बहुलेपने इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

पूतना रजनी नाम अष्टमे मासि बालकम् ।
गृह्णात्यतो गृहीतस्तु बालो मुञ्चति तत्क्षणात् ॥ ७८ ॥

स्फोटकं सर्षपाकारं शरीरे तस्य जायते ।
कम्पते वामहस्तश्च मुखञ्च परिशुष्यति ॥ ७९ ॥

ईदृशं लक्षणं दृष्ट्वा क्रियां तत्र न कारयेत् ।
पूतना कुम्भकर्णी तु नवमे मासि बालकम् ॥ ८० ॥

गृह्णात्यतो गृहीतस्तु बालो रोदिति निष्ठुरम् ।
दह्यते मुह्यते चैव ज्वरः छर्दिश्च जायते ॥ ८१ ॥

पाटलः कौमुदो गन्धो गुळगन्धस्तथैव च ।
कृसरं च गुळं मत्स्यं तथा क्षीरं गुळासवम् ॥ ८२ ॥

गुल्मासन्तिलचूर्णश्च बलिं तत्र प्रदापयेत् ।
पुष्पाणि चैव रक्तानि सुगन्धं कुङ्कुमं तथा ॥ ८३ ॥

पूर्वां दिशं समाश्रित्य मध्याह्ने तु बलिं हरेत् ।
अनेनैव विधानेन ततो मुञ्चति पूतना ॥ ८४ ॥

ओं नमो भगवति कुम्भकार्णि मत्तमातङ्गगामिनि इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

पूतना शबरी नाम दशमे मासि बालकम् ।
गृह्णात्यतो गृहीतस्तु चक्षुर्भ्यां नैव पश्यति ॥ ८५ ॥

उद्वेजयति गात्राणि आहारन्नाभिवाञ्छति ।
गुळान्नं पीतरक्ताभं मत्स्यं मांसं च दापयेत् ॥ ८६ ॥

घण्टाश्चैव पताकाश्च पिष्टैरेव तु कारयेत् ।
श्वेतपुष्पं तथा गन्धं तिलतैलेन दापयेत् ॥ ८७ ॥

उत्तरां दिशमाश्रित्य बलिन्दद्याद्दिनत्रयम् ।
मध्याह्ने तु प्रदातव्यं ततो मुञ्चति पूतना ॥ ८८ ॥

ओं नमो भगवति शबरवसनप्रिये इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

पूतना राक्षसी नाम मासे ह्येकादशे शिशुम् ।
गृह्णात्यतो गृहीतस्तु तत्क्षणादेव नश्यति ॥ ८९ ॥

पूतना चञ्चला नाम द्वादशे मासि बालकम् ।
गृह्णात्यतो गृहीतस्तु श्वसते मुह्यते तथा ॥ ९० ॥

उद्वेजयति गात्राणि आहारं नाभिवाञ्छति ।
तिलचूर्णं सगुल्मासं घृतं दधि गुळोदनम् ॥ ९१ ॥

पूर्वां दिशं समाश्रित्य मध्याह्ने तु बलिं हरेत् ।
स्नापयेत्पञ्चपत्रेण धूपयेन्निम्बसर्षपैः ॥
दीपञ्च तिलतैलेन ततो मुञ्चति बालकम् ॥ ९२ ॥

ओं नमो भगवति चञ्चले चञ्चलशरीरे इमं बलिं गृहाण बालं मुञ्च स्वाहा।

इति मासाधिकारः।

---

अतः परं प्रवक्ष्यन्ते घोररूपास्तु मातरः।
शृणु जीवकतत्त्वेन मन्त्राणां च पृथक् पृथक् ॥ ९३ ॥

कुमारी गन्धिनी नाम पूर्वे वर्षे तु बालकम्।
गृह्णात्यतो गृहीतस्तु धरण्यां पतति ध्रुवम् ॥ ९४ ॥

नोन्मीलयति नेत्रे च रोदित्यपि पुनः पुनः।
दह्यते मुह्यते चैव तथाहारं न वाञ्छति ॥ ९५ ॥

गुळोदनं सुरां मांसं मत्स्यान् पूपलिकां दधि।
गुल्मासं पललं लाजा गुळं माल्यं सगन्धकम् ॥ ९६ ॥

केशैश्चापि च लाजैश्च गोदन्तेन च धूपयेत्।
स्नापयेत्पञ्चभङ्गेन तिलतैलेन दीपयेत् ॥ ९७ ॥

पूर्वां दिशं समाश्रित्य चैकरात्रं बलिं हरेत्। ९८ ॥

ओं नमो भगवत्यै सुगन्धिन्यै सुगन्धालेपने इमं बलिं गृहाण बालं मुञ्च स्वाहा।

कुमारी नन्दिनी नाम द्वितीये वत्सरे शिशुम्।
गृह्णात्यतो गृहीतस्तु ज्वरेण परितप्यते ॥ ९९ ॥

शोणितं स्रवते मूत्रविड्भ्यां स्रवति शोणितम्।
कम्पते दक्षिणो हस्तः हसते च पुनः पुनः ॥ १०० ॥

पद्मकेसरसङ्काशं गात्रं तस्य प्रजायते।
तेन सा रमते नित्यं कुमारी बलिकांक्षिणी ॥ १०१ ॥

गुळोदनं च पानीयन्तस्य मांसं प्रदापयेत्।
गुल्मासं तिलचूर्णञ्च दध्यपूपकमेव च ॥ १०२ ॥

सौगन्धिकोत्पलं पद्मं कुमुदञ्चैव पिष्टकम्।

पिष्टेनोद्वर्त्य बालन्तु प्रकृतिं तेन कारयेत् ।
गन्धमाल्यादिकं दद्यात् तिलतैलेन दीपयेत् ॥ १०३ ॥

पूर्वां दिशं समास्थाय मध्यरात्रे बलिं हरेत् ।
लशुनं सर्पनिर्मोकं सिन्धुवारेण धूपयेत् ॥ १०४ ॥
... ... ... ... ।
.... ... ... ... ॥

स्नापयेन्निम्बबिल्वाभ्यां पलाशाश्वत्थकिंशुकैः ।
स्नापितं धूपितं बालं चन्दनेन तु लेपयेत् ॥ १०५ ॥

अनेनैव विधानेन ततो मुञ्चति नन्दिनी ॥ १०६ ॥

ओं नमो भगवति नित्यानन्दस्वरूपिणि ! इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

कुमारी बन्धिनी नाम तृतीये वत्सरे शिशुम् ।
गृह्णात्यतो गृहीतस्तु चक्षुर्भ्यां नैव पश्यति ॥ १०७ ॥

सीदन्ति सर्वगात्राणि ज्वरः शोषश्च जायते ।
कम्पते वामहस्तश्च तथाहारं न वाञ्छति ॥ १०८ ॥

ओदनं कृसरं मांसं गुल्माषं च सफाणितम् ।
दधि लाजाश्च दातव्या गन्धं पुष्पं तथैव च ॥ १०९ ॥

शाकश्च चक्रवाकश्च पिष्टेनैव तु कारयेत् ।
पिष्टेनोद्वर्त्य बालन्तु प्रदीपं तेन कारयेत् ॥ ११० ॥

लशुनं मृगरोमाणि शिखिपत्रैश्च धूपयेत् ।
स्नापयेत्पञ्चभङ्गेन तिलतैलेन दीपयेत् ॥ १११ ॥

उत्तरां दिशमाश्रित्य पञ्चरात्रं बलिं हरेत् ।
अनेनैव विधानेन ततो मुञ्चति सा ग्रही ॥ ११२ ॥

ओं नमो भगवति ! बन्धिनि ! धनुर्धरहस्ते ! इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

कुमारी चपला नाम चतुर्थे वत्सरे शिशुम् ।
गृह्णात्यतो गृहीतस्तु ज्वरेण परितप्यते ॥ ११३ ॥

सीदन्ति सर्वगात्राणि त्रसते बालकस्सदा ।
सर्वं कृष्णं बलिं दद्याद् गन्धपुष्पं तथैव च ॥ ११४ ॥

स्नापनं पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
प्रसुप्ते च प्रदातव्यं ततो मुञ्चति सा ग्रही ॥ ११५ ॥

ओं नमो भगवति चपले इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

कुमारी तापसी नाम पञ्चमे वत्सरे शिशुम् ।
गृह्णात्यतो गृहीतस्तु सद्यः स्विन्नो भवेच्छिशुः ॥ ११६ ॥

सीदन्ति सर्वगात्राणि मुखञ्च परिशुष्यति ।
स रक्तं स्रवते मूत्रं स्रवते च पुनः पुनः ॥ ११७ ॥

पायसं कृसरं क्षीरं तिलचूर्णं सुरासवम् ।
पक्वामकानि मांसानि दध्यपूपकमेव च ॥ ११८ ॥

धूपो लशुनकेशैश्च श्वेतसर्षपसंयुतैः ।
स्नापयेत्पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
अनेनैव विधानेन ततो मुञ्चति सा ग्रही ॥ ११९ ॥

ओं नमो भगवति तापसि ! इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

कुमारी कार्मुकी नाम षष्ठे वर्षे तु बालकम् ।
गृह्णात्यतो गृहीतस्तु ज्वरेण परितप्यते ॥ १२० ॥

रोदित्यपि दिवारात्रमाकाशञ्च निरीक्षते ।
मत्स्यं मांसं सुरां भक्ष्यं पायसं कृसरं दधि ॥ १२१ ॥

धूपकाः स्वस्तिकं लाजा व्यञ्जनैर्बहुभिस्सह ।
चतुष्पथे तु मध्याह्ने सप्तरात्रं बलिं हरेत् ॥ १२२ ॥

स्नापयेत्पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
गोशृङ्गेण हरेद्धूपं गोरोम्णा च नखेन च ॥ १२३ ॥

अनेनैव विधानेन ततो मुञ्चति सा ग्रही ।

ओं नमो भगवति कार्मुके कार्मुकधारिणि अङ्कुशहस्ते रक्त-माल्यानुलेपने इमं बलिं गृहाण बालं मुञ्च स्वाहा ।

कुमारी जातवेदा तु सप्तमे वत्सरे शिशुम् ।
गृह्णात्यतो गृहीतस्तु गेहान्निष्क्रम्य गच्छति ॥ १२४ ॥
हसते च दिवारात्रमाहारञ्च न वाञ्छति ।
ओदनं पायसं मांसं मत्स्यञ्च कृसरं घृतम् ॥ १२५ ॥
क्षीरञ्च पोलिकां चैव मध्याह्ने तु बलिं हरेत् ।
चतुष्पथे पञ्चरात्रं कुशास्तरणसंयुते ॥ १२६ ॥
मन्त्रतन्त्रं प्रयुञ्जीत वक्ष्यमाणं विशेषतः ।
होतव्यश्च प्रयत्नेन निम्बपत्रैस्सर्षपैः ॥ १२७ ॥
स्नापनं पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
अनेनैव विधानेन ततो मुञ्चति सा ग्रही ॥ १२८ ॥
ओं नमो भगवति जातवेदे कूश्माण्डि राजा ... ....
... .... .... । ॥ १२९ ॥

.... ... .... ...
... .... ... ... ॥ १३० ॥

सर्वग्रहाणां तु बलिं मन्त्रेणानेन कारयेत् ।
यत्र स्वपिति बालस्तु तत्र होमञ्च कारयेत् ॥ १३१ ॥
कुमारी नलिनी नाम चाष्टमे वत्सरे शिशुम् ।
गृह्णात्यतो गृहीतस्तु बालश्चाह्वयते शिशून् ॥ १३२ ॥
आस्फोटयति बाहुभ्यां बालो गर्जति धावति ।
... ... ... ... ... ... ... ।
... ... ... ... ... ... ... ॥ १३३ ॥
पायसं कृसरं मांसं अपूपाः स्वस्तिकं तथा ।
गुडमासं दधि लाजाश्च सर्पिर्भक्ष्यन्तथैव च ॥ १३४ ॥
अर्धरात्रे बलिं दद्यात्सप्तरात्रं समाहितः ।
धूपयेत्सर्पनिर्मोकनिम्बाभ्यां लशुनेन च ॥ १३५ ॥

K

स्नापयेत्पञ्चभङ्गेन ततो मुञ्चति ... ग्रही ॥ १३६ ॥

... ... ... ... ... ...

... मन्त्राणि पूर्ववदेव ॥ १३७ ॥

कुमारी चपला नाम नवमे वत्स ... शिशुम् ।

गृह्णात्यतो गृहीतस्य दाहो भवति दारुणः ॥ १३८ ॥

कुशश्च* तीव्रो भवति कृशो भवति बालकः ।

चतुर्विधौदनं दद्याल्लाजान् पूपलिकां दधि ॥ १३९ ॥

लशुनं सर्षपं कुष्ठं वचालेपस्य लेपनम् ।

स्नापयेन्निम्बबिल्वाभ्यामश्वत्थोदुम्बरेण च ॥ १४० ॥

धूपनं गजदन्तेन केशैर्भृङ्गरजेन च ।

पञ्चरात्रं बलिं दद्यात्ततो मुञ्चति सा ग्रही ॥ १४१ ॥

मन्त्राणि पूर्ववदेव ।

कुमारी रेवती नाम दशमे वत्सरे शिशुम् ।

गृह्णात्यतो गृहीतस्तु मूत्रं स्रवति नित्यशः ॥ १४२ ॥

उद्वेजयति गात्राणि नोन्मीलयति लोचने ।

भुक्त्वा पीत्वा च सततं न च तृप्तिं स गच्छति ॥ १४३ ॥

धावंश्च गायति सदा गृहं त्यक्त्वा च गच्छति ।

यामि यामीति वदति विकारान् कुरुते बहून् ॥ १४४ ॥

पक्कमांसानि मत्स्यांश्च स्वास्तिकापूतिकानि च ।

ओदनं पायसं लाजा गुल्मासं पललं तथा ॥ १४५ ॥

करवीरस्य पुष्पाणि पीतं कुमुदमेव च ।

धूपनं तगरं काष्ठं नखं गुग्गुलुमेव च ॥ १४६ ॥

स्नापनं पञ्चभङ्गेन तिलतैलेन दीपकम् ॥

स्नापितं धूपितं बालं ततो मुञ्चति सा गृही ॥ १४७ ॥

मन्त्राणि पूर्ववत् ।

कुमारी बालिका नाम वर्षे त्वेकादशे शिशुम् ।

गृह्णात्यदोगृहीतस्तु नेत्ररोगेण पीड्यते ॥ १४८ ॥

साधीयान् ।

---

* कुरकुच तीव्रं भवति इति पाठः.

अत्यन्ततृषया ग्रस्तः काकरावं करोति च ।
.... .... ... ... ॥ १४९ ॥
... ... ... .... ।
पक्वमांसानि मत्स्यांश्च गुल्मासश्चौदनन्तथा ॥ १५० ॥

अपूपाञ्छष्कुलीश्चापि गुळक्षीरेण संयुतान् ।
दिनत्रयं बलिं दद्यात् धूपयेद्यवसर्षपैः ॥ १५१ ॥

स्नापयेत्पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
अनेनैव विधानेन ततो मुञ्चति सा ग्रही ॥ १५२ ॥
... .... ... .... ।
.... ... ... ... ॥ १५३ ॥

मन्त्रं पूर्ववदेव ।

कुमारी यामिनी नाम द्वादशे वत्सरे शिशुम् ।
गृह्णात्यतो गृहीतस्तु दन्तवाक्यं करोति च ॥ १५४ ॥

सीदन्ति सर्वगात्राणि मुखं च परिशुष्यति ।
रक्तमाल्यानि गन्धांश्च रक्तवर्णौदनं तथा ॥ १५५ ॥

दिनत्रयं तु मध्याह्ने बलिं तत्र निवेदयेत् ।
घृताभ्यङ्गं ततः कृत्वा घृतपानं च कारयेत् ॥ १५६ ॥

स्नापनं पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
सर्षपैर्निम्बपत्रैश्च धूपयेद् बालकं तथा ॥ १५७ ॥

अनेनैव विधानेन ततो मुञ्चति पूतना ।
कुमारी यक्षिणी नाम गृह्णीतेऽब्दे त्रयोदशे ॥ १५८ ॥

तया गृहीतमात्रः स ज्वरेण परितप्यते ।
वातशूलं भवेत्तस्य रोदित्यपि सुदारुणम् ॥ १५९ ॥

ईदृशं लक्षणं दृष्ट्वा बलिं तत्र प्रदापयेत् ।
घृताभ्यङ्गं ततः कृत्वा घृतपानं च कारयेत् ॥ १६० ॥

पायसं कृसरं मांसं सक्तवश्च सुरासवम् ।
कुल्माषं तिलचूर्णं च गन्धपुष्पं च शोभनम् ॥ १६१

स्नापनं पञ्चभङ्गेन तिलतैलेन दीपयेत् ।
दिनत्रयं तु मध्याह्ने बलिं दद्यात्समन्त्रकम् ॥ १६२ ॥
.... ... .... ... ।
अनेनैव विधानेन ततो मुञ्चति यक्षिणी ॥ १६३ ॥

मन्त्राणि पूर्ववत् ।

कुमारी सुन्दरी नाम गृह्णीतेऽब्दे चतुर्दशे ।
तया गृहीतमात्रस्तु क्षणात्स्रवति शोणितम् ॥ १६४ ॥

गतायुषं विजानीयान्न च जीवति बालकः ।
कुमारी वारुणी नाम वर्षे पञ्चदशे शिशुम् ॥ १६५ ॥

गृह्णात्यतो गृहीतस्तु भूमौ पतति निःस्वनन् ।
ज्वरस्तीव्रो भवेत्तस्य निद्रा चातीव जायते ॥ १६६ ॥

पायसं कृसरं मत्स्यं ओदनं च सुरासवम् ।
गुल्माषं च तथाऽपूपं सितानि कुसुमानि च ॥ १६७ ॥

दद्याद्बलिं तु मन्त्रेण प्रदोषे दिवसत्रयम् ।
स्नापनं पञ्चभङ्गेन धूपं हिङ्गुं वचां तथा ॥ १६८ ॥

दीपयेत्तिलतैलेन ततो मुञ्चति सा ग्रही ।
कुमारी धनदा नाम षोडशे वत्सरे शिशुम् ॥ १६९ ॥

गृह्णात्यदोगृहीतस्तु हसते च पुनः पुनः ।
.... ... .... .... ॥ १७० ॥

... .... ... .... ।
उद्वेजयति गात्राणि रोदित्यपि पुनः पुनः ॥ १७१ ॥

ओदनं कृसरं मांसं पायसं तिलपिष्टकम् ।
गुल्मासं दधि लाजांश्च गन्धं पुष्पञ्च दापयेत् ॥ १७२ ॥

धूपनं गजदन्तेन मेषशृङ्गयुतेन च ।
स्नापनं पञ्चभङ्गेन तिलतैलेन दीपकम् ॥ १७३ ॥

... .... .... ... ।
... .... .... .... ॥ १७४ ॥

पूर्वां दिशं समाश्रित्य त्रिरात्रं तु बलिं हरेत् ।
अनेनैव विधानेन ततो मुञ्चति सा ग्रही ॥ १७५ ॥

मन्त्राणि पूर्ववत् ।

पलाशाश्वत्थकापित्थबिल्वोदुम्बरपल्लवाः ।
पञ्चभङ्गो भवेदेष बालानां तु हितावहः ॥ १७६ ॥

ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणस्तथा ।
रक्षन्तु त्वरितं बालं मुञ्च मुञ्च कुमारकम् ॥ १७७ ॥

इति संवत्सराधिकारः ॥

इति जीवककृतं बालतन्त्रं समाप्तम् ॥

---

क्षणादुद्विजते बालः क्षणात् त्रसति रोदिति ।
नखैर्दन्तैर्विलिखति धात्रीमात्मानमेव च ॥ १७८ ॥

ऊर्ध्वं निरीक्षते दन्तान् खादन् जृम्भति कूजति ।
भ्रुवौ क्षिपति दष्टोष्ठः फेनं वमति चासकृत् ॥ १७९ ॥

मा मेति निशि जागर्त्ति म्लानाङ्गो भिन्नविट्स्वरः ।
मत्स्यशोणितगन्धश्च न चाश्नाति यथापुरम् ॥ १८० ॥

सामान्यग्रहजुष्टानां लक्षणं समुदाहृतम् ।

(चर-)

नष्टसंज्ञो भवेद् बालो दन्तान् खादति कूजति ॥ १८१ ॥
ऊर्ध्वं निरीक्षते चैव जृम्भत्यातिविनाम्यति ।
अथ फेनञ्चोद्वमति दष्टोष्ठः क्रूरनिःस्वनः ॥ १८२ ॥
मातुस्तन्यं नाभिलषत्येतत्सामान्यलक्षणम् ।
स्रवत्येकमस्य नेत्रं निमीलयत्येकां दृष्टिम् ॥ १८३ ॥

ऊर्ध्वमुच्चारयति । जिह्ममस्य वक्त्रं भवति । भ्रुवमुदस्यत्येकामा-कृष्यतेऽस्य जिह्वा बाहुः स्पन्दते प्रकम्पते । सक्थ्येकमुद्विजते मूत्रपुरीषमुत्सृजति । विक्षिपति शिरः । ग्रीवां नमयति । स्तनं दशति नखैर्विलिखति । मुहुर्मुहुर्विक्षिप्तचित्तो भवति । हस्तपादमस्य खेलति

मुहुर्मुहुर्ग्रहेणाविश्यते । क्षतजगन्धप्रभृतीनि स्कन्दग्रहोपविष्टानि लिङ्गानि ।

अथातः स्नापनविधिमध्यायं व्याख्यास्यामः ।

तत्र नवप्रवालवर्णैः स्वस्तिकाङ्केन नवैर्घटैश्चतुर्भिर्वास्तुकौणिक-वासोभिः सर्वौषधसर्वगन्धसर्वबीजसर्वरत्नसर्वकषायदूर्वाङ्कुरलाजसिद्धार्थकशिरःस्नापनमुष्टिकालेपनदर्भैर्देवायतनवल्मीकाग्रसहस्रपर्णभृङ्गगजदन्तगोष्ठभूमीन्द्रनीलनद्युभयतटपुरागाराराजकोशागारोपस्थानानां मृदा शोणाम्भसा पूर्णैः शिरीषपत्रपद्मोत्पलविधानैः स्कन्दग्रहोपविष्टं निशि त्रिरात्रे कृतोपवासस्स्नानश्शुचिर्गृहीतशास्त्रो वैद्यश्चत्वरे स्नापयेत् । एभिर्मन्त्रैरभिमन्त्र्यमाणं एकैकं कलशं प्राङ्मुखेनाभिषिञ्चेत् । त्वां हि भगवान् ब्रह्मा ब्रह्मर्षिभिस्साङ्गोपाङ्गाश्चत्वारो वेदा वेदार्थनिश्चयै राजर्षयस्सुरेन्द्रश्च सह वैवस्वतेन तु वरुणेन धनाधिपश्च त्वामभिषिञ्चति । पण्डिता अदितिर्दितिर्दनुः कद्रुस्सुरभी रजनी तथा —

स्वाहा लक्ष्मीश्च कीर्त्तिश्च धृतिश्च त्वाभिषिञ्चति ।
सरस्वती च सावित्री मतिर्मेधा रतिः क्षमा ॥ १८४ ॥

इन्द्राणी भूतिरित्येतास्त्वाभिषिञ्चन्ति देवताः ।
त्रिलोकं तर्पयन्ती या नदीनामुत्तमा नदी ॥ १८५ ॥

गङ्गा भागीरथी च त्वा रक्षास्थानेभिषिञ्चति ।
महानद्यश्च याः काश्चित् गोदावरीपुरःसराः ॥ १८६ ॥

अथ जातदिने वत्सं ग्रही गृह्णाति पापिनी ।
गात्रोद्वेगो निराहारो लाला ग्रीवानिवर्त्तनम् ॥ १८७ ॥

तच्चेष्टितमिदन्तस्य मातॄणाञ्च बलिं हरेत् ।
मत्स्यमांससुराभक्तगन्धास्रक्धूपदीपकैः ॥ १८८ ॥

लिम्पेत्तं धातकीलोध्रमञ्जिष्ठातालचन्दनैः ।
महिषाक्षेण धूपञ्च द्विरात्रे भीषणी ग्रही ॥ १८९ ॥

तच्चेष्टा कासनिःश्वासा गात्रसङ्कोचनं मुहुः ।
अजमूत्रैः सहालिम्पेत् सेव्यापामार्गचन्दनैः ॥ १९० ॥

गोशृङ्गदन्तकेशैस्तु धूपयेत्पूर्ववद् बलिः।
ग्रही त्रिरात्रे षण्डारी तच्चेष्टा स्कन्दनं मुहुः। १९१॥

जृम्भणं स्तनितं त्रासो गात्रोद्वेगमरोचकम्।
केशरञ्जनगोहस्तिदन्तं साजपयो लिपेत्॥ १९२॥

खराजिनं निम्बदलैर्धूपयेच्च बलिं हरेत्।
ग्रही चतुर्थे काकोली गात्रोद्वेगः प्ररोदनम्॥ १९३॥

फेनोद्गारो दिशादृष्टिः कुल्माषैस्तासवैर्बहिः।
गजदन्ताहिनिर्मोकराजीमूत्रैः प्रलेपयेत्॥ १९४॥

सराजीनिम्बपत्रेण मृतकेशेन धूपयेत्।
हंसाधिका पञ्चमी स्याज्जृम्भा श्वासोर्ध्ववीक्षणम्॥ १९५॥

मुष्टिबन्धश्च तच्चेष्टा बलिं मत्स्यादिना हरेत्।
मेषशृङ्गवचालोध्रशिलातालैः शिशुं लिपेत्॥ १९६॥

फट्कारी तु ग्रही षष्ठी हासो मोहः प्ररोदनम्।
निराहारोऽङ्गविक्षेपो हरेत्मत्स्यादिना बलिम्॥ १९७॥

राजीगुग्गुलुकुष्ठेभदन्ताज्यैर्धूपलेपनैः।
मुक्तकेशी ग्रही बालं दिने गृह्णाति सप्तमे॥ १९८॥

नादः प्ररोदनं कासः पूतिगन्धश्च जृम्भणम्।
धूपो व्याघ्रनखैर्लेपो वचामूत्रत्वगाज्यैः॥ १९९॥

त्रिदण्डी चाऽष्टमी जिह्वाचालनं कासरोदनम्।
दिशानिरीक्षणं देयो मत्स्यादिः सर्वतो बलिः॥ २००॥

वचालशुनसिद्धार्थहिङ्गुभिर्धूपलेपनम्।
महामहिषिनवमी तच्चेष्टा त्रासरोदनम्॥ २०१॥

उद्वेजनोर्ध्वनिःश्वासो स्वमुष्टिद्वयखादनम्।
पत्रं चन्दनकुष्ठोग्रासर्षपैर्लेपयेच्छिशुम्॥ २०२॥

कपिरोमनखैर्धूपो दशमी रोदनी ग्रही।
तच्चेष्टा रोदनं शश्वत्सुगन्धो नीलवर्णता।
धूपो निम्बेन कुष्ठोग्राराजीसर्जरसैर्लिपेत्॥ २०३॥

बलिञ्च निर्हरेल्लाजान् कुल्माषवरकोदनैः ।
यावत् त्रयोदशाहः स्याद्देवधूपादिकाः क्रियाः ॥ २०४ ॥

इति दिवसाधिकारः ।

गृह्णाति मासिकं वत्सं पूतना शकुनी ग्रही ।
काकवद्रोदनं श्वासो गृध्रगन्धोऽक्षिमीलनम् ॥ २०५ ॥
रक्तमूत्रञ्च तत्स्नायाद् गोदन्तनखधूपनम् ।
पीतं वस्त्रं ददेद्रक्तस्रग्गन्धस्तैलदीपकम् ॥ २०६ ॥
त्रिविधं पायसं मद्यं तिलं मांसञ्चतुर्विधम् ।
करं चाधो यमदिशि सप्ताहं तैर्बलिं हरेत् ॥ २०७ ॥
द्विमासिकं च मकुटा वपुः पीतं च शीतलम् ।
स्तन्यपानं न रोचेत तच्छर्दिर्मुखशोषणम् ॥ २०८ ॥
ग्रीवादिवृत्तिनिस्पन्दस्तच्चेष्टा पायसं तिलम् ।
अपूपं मोदकं दीपं पुष्पं गन्धांशुकानि च ॥ २०९ ॥
कृष्णानि दापयेत्तस्या दीपतैलेन सर्वतः ।
धूपयेन्निम्बपत्रैस्तं सर्षपैः लशुनैर्युतैः ॥ २१० ॥
तृतीया गोमुखी तस्याः चेष्टा निद्रा प्ररोदनम् ।
गोगन्धो मधुगन्धो वा विण्मूत्रस्रवणं सदा ॥ २११ ॥
जपा प्रियङ्गुपललं कुल्माषं शाकमोदनम् ।
क्षीरिकं पिण्डकं दीपं दत्त्वा प्राच्यां बलिं हरेत् ॥ २१२ ॥
मध्याह्ने पंचपत्रेण स्नानं धूपयेत सर्षपैः ।
चतुर्थी पिङ्गला गात्रशोषणं दारुणो रवः ॥ २१३ ॥
विस्रम्भेण पयःपानं पूतिगन्धः सिता तनुः ।
भुजस्य कम्पनं तस्य चिकित्सा न विधीयते ॥ २१४ ॥
पञ्चमी वदना तत्र सादनं मुखशोषणम् ।
ग्रन्थयः पयसः पानं पीतवर्णं प्ररोदनम् ॥ २१५ ॥
मत्स्यमांसान्नशाकाद्यैः पिष्टभेदैर्बलिं हरेत् ।
मध्याह्ने दक्षिणाशायां षण्मासे पङ्कजा ग्रही ॥ २१६ ॥

तच्चेष्टा रोदनं कुक्षिशूलनं विकृतः स्वरः ।
शिखिकुक्कुटमेषाणां मांसं सक्तुः कुलत्थकम् ॥ २१७ ॥

माषोदनं सुरा पुष्पं गन्धादिः तैर्बलिं हरेत् ।
शीतला सप्तमे मासे निराहारोक्षिमीलनम् ॥ २१८ ॥

दन्तवाद्यं चातिगन्धस्समांसान्नसुरातिलैः ।
पद्मादिपुष्पगुल्मासपिष्टशाकैर्बलिं हरेत् ॥ २१९ ॥

अष्टमी यमुना मोहस्स्तनितं मुखशोषणम् ।
स्फोटकास्सर्षपाकारास्सर्वगात्रेषु कम्पनम् ॥ २२० ॥

चिकित्सा तत्र .... .... .... .... ।
.... .... .... नवमी कुम्भकर्णिका ॥ २२१ ॥

अश्रद्धया पयःपानं तच्छर्दिर्दारुणो ज्वरः ।
रोदनं पाटलीगन्धो मांसं मत्स्यं सुरां पयः ॥ २२२ ॥

गुल्मासमन्नं पललं गन्धं पुष्पं च दापयेत् ।
ऐशानीं दिशमाश्रित्य मध्याह्ने बलिमाहरेत् ॥ २२३ ॥

तापसी दशमे मासे निराहारोक्षिमीलनम् ।
उद्वेजनञ्च गात्राणां पीतं रक्तमथोदनम् ॥ २२४ ॥

घण्टा पताका पिष्टोत्था(?) मत्स्यं मांसं सुरा पयः ।
सौम्यायां दिशि मध्याह्ने बलिमेभिस्समाहरेत् ॥ २२५ ॥

बालमेकादशे मासे ग्रही गृह्णाति राक्षसी ।
तच्चिह्नं नेत्रयोरान्ध्यं तस्यां नैव चिकित्सितम् ॥ २२६ ॥

चपला द्वादशे मासे कासः श्वासश्च चेष्टितम् ।
गुल्मासापूपदध्यन्नतिलचूर्णैर्विधानवित् ॥ २२७ ॥

महेन्द्रदिशि मध्याह्ने सप्तरात्रं बलिं हरेत् ।
एता स्युर्मासिका ग्रहाः पूतनापदपूर्विकाः ॥ २२८ ॥

इति मासाधिकारः ।

---

द्वितीये वत्सरे बालं ग्रही गृह्णाति यातना ।
यातनं रोदनं दाहो निराहारोऽक्षिमीलनम् ॥ २२९ ॥
मत्स्यं मांसं तिलं मद्यं गुल्माषं पोळिका दधि ।
गुल्माषलाजगन्धादिस्तैः प्राच्यां बलिमाहरेत् ॥ २३० ॥
स्नानं पञ्चदलैर्धूपः केशगोदन्तगोखुरैः ।
तृतीये वत्सरे बालं ग्रही गृह्णाति रोदिनी ॥ २३१ ॥
विण्मूत्रं रक्तसम्मिश्रं ज्वरो हस्तस्य कम्पनम् ।
प्ररोदनं मुहुर्गात्रं पद्मकेसरसन्निभम् ॥ २३२ ॥
गुळोदनन्तिलं पूपं गुल्मासं स्विन्नपल्गुषम् ।
दधि सक्तु फलं लाजः प्रतिमाशालि पिष्टकम् (?) ॥ २३३ ॥
एभिस्सुगन्धपुष्पाद्यैः प्राच्यां दिशि बलिं हरेत् ।
स्नापयेत्कुष्ठपत्रैस्तं धूपो राजिफणित्वचाम् ॥ २३४ ॥
चतुर्थे चटका शोषो ज्वरस्सर्वाङ्गसादनम् ।
अनीक्षणमनाहारो वामपादस्य कम्पनम् ॥ २३५ ॥
तिललाजान्नगुल्मासं मत्स्यं मांसं सुरां दधि ।
प्रतिमां फलकस्थाञ्च कौबेर्यां दिशि दापयेत् ॥ २३६ ॥
स्नानं पञ्चदलैर्धूपः पिञ्छेणखुररोमभिः ।
चञ्चला पञ्चमे वर्षे ज्वरस्सर्वाङ्गसादनम् ॥ २३७ ॥
बलिभिस्तिलकृष्णान्नैः कालानुक्तौ बलिं निशि ।
धूपयेन्मेषशृङ्गेण स्नानं स्यात्पञ्चपत्रयुक् ॥ २३८ ॥
पलाशोदुम्बराश्वत्थवटबिल्वदळं हितम् ।
पावनी वत्सरे षष्ठे वैवर्ण्यं मुखशोषणम् ॥ २३९ ॥
उद्वेजनं मुहुर्मूत्रस्रावणं गात्रसादनम् ।
मूलन्तिलास्सुरा मत्स्यं मांसं पक्षः पयो दधि ॥ २४० ॥
कृसरं पायसं चैभिस्सप्तरात्रं बलिं हरेत् ।
स्नानं पञ्चदलैर्धूपो लशुनैः केशराजिभिः ॥ २४१ ॥
सप्तमे यमुना छर्दिररुचिः हासरोदनम् ।
मत्स्यं मांसं सुरा सक्तुः कृसरं पायसं दधि ॥ २४२ ॥

सपोलिकापूपालिकैस्त्रिरात्रं चत्वरे बलिः।
स्नानं पञ्चदलैर्धूपो गोशृङ्गखुररोमभिः ॥ २४३ ॥
जातवेदाष्टमे वर्षे निराहारः प्रकोपनम्।
मत्स्यं मांसं दधि क्षौद्रं घृताक्तं पायसं पयः ॥ २४४ ॥
एतैस्सकृसरापूपैर्बलिं हृत्वार्द्धरात्रके।
चत्वरस्थे तिलैः कुण्डे पश्चाहममुना हुनेत् ॥ २४५ ॥

चामुण्डिनि भगवति भीषणि समुद्दितो ज्ञापय मुञ्च मुञ्च दह दह सर सर बालकात् गच्छ गच्छ।

राजिनिम्बदलैर्धूपः, कालिनी नवमे ग्रही।
तच्चेष्टा गर्जनं त्रासो बाह्वोरास्फोटनं मुहुः॥
बलिः स्यात्कृसरापूपसक्तुगुल्मासपायसैः ॥ २४६ ॥

ओं मुञ्च मुञ्च कपर कपर जय जय।

अनेन पूर्ववद्धुत्वा कुर्यात् स्नानं सधूपकम्।
दशवर्षे कलाहंसी दाहोऽङ्गकृशता ज्वरः ॥ २४७ ॥
बोलिकापूपदध्यन्नैः पञ्चरात्रं बलिं हरेत्।
लेपयेत्तं वचाकुष्ठलशुनैः सर्षपान्वितैः।
धूपं निम्बदलैः कुर्यात्सगोरोमगजद्विजैः ॥ २४८ ॥

नमस्सर्वमातृभ्यः हृदयं मोहय भञ्जय स्फोटय स्फुर गृह्ण कण्ठं स्फोटय एवं सिद्धिः ज्ञापयति हर निर्दोषं कुरु बालकम्। बालो वा स्त्री पुरुषो वा सर्वग्रहाणामुपक्रम्यतु। ओं चामुण्डे नमो दिव्ये भ्रूं ह्रां ह्रीं अपसरन्तु दुष्टग्रहाः भ्रूं हूं तद्यथा गच्छन्तु गुह्यका अन्यस्थाने ओं रुद्रो ज्ञापयति ठ ठ। सर्वबालेषु स्यान्मन्त्रोयम्। सार्वकामिकं कोमुण्डे या वेषि कण्डिपो भगवति। भ्रूं हूं मुञ्च रक्षां कुरु बलिं गृह्ण। ठ ठ। बालग्रहेषु बलिदानेष्वयं मन्त्रः।

ब्रह्मा विष्णुश्च स्कन्दो वैश्रवणस्तथा।
रक्षन्तु त्वरितं बालं मुञ्चन्तु च कुमारकम् ॥ २४९ ॥

ठ ठ । हर । सन्ध्ययोरस्तमये चापि । व्यावर्तयति गोमूत्रे वा ।
(नारायणीयम् )

विहगा वायसानाञ्च खगैर्वा पक्षिसङ्कुलम् (?) ।
अशुचिं मातरञ्चापि अपथ्याहारसेविनीम् ॥ २५१ ॥
एककाले तु निष्क्रान्ता माता सा बालवेश्मनः ।
पक्षिग्रहेण यो ग्रस्तः तेन बालः प्रबाध्यते ॥ २५२ ॥
एवं पक्षिगृहीतस्य पक्षिग्रहमिहोच्यते ।
तस्य लिङ्गं प्रविज्ञेयं छर्दतीसारपीडनम् ॥ २५३ ॥
पिपासा ज्वरशोषश्च स्तनञ्चापि न गृह्णति ।
कम्पते स्वप्ननाशश्च आहूते पक्षिणा शिशौ ॥ २५४ ॥
पक्षिणस्त्वथ चत्वारो वन्ध्यास्त्रीपुंनपुंसकाः ।
सामान्यलक्षणं तेषां वक्ष्यते च निबोधत ॥ २५५ ॥
छर्दतीसारबाहुल्यं पिपासा ज्वर एव च ।
शोषश्च सर्वगात्रेषु स्तनञ्चापि न गृह्णति ॥ २५६ ॥
कम्पते स्वप्ननाशश्च सर्वाङ्गक्रम एव च ।
स्कन्धे पृष्ठे च निम्नत्वं तथा मूर्ध्नि च निम्नता ॥ २५७ ॥
अथ वन्ध्यागृहीतस्य क्लमता मूर्ध्नि निम्नता ।
छर्दतीसारतृष्णा च परिदाहश्च जायते ॥ २५८ ॥
सर्वाङ्गकम्पसंयुक्तो दाहतृष्णातिसारवान् ।
स्तनञ्चापि न गृह्णाति स्त्रीपक्षिग्रहपीडितः ॥ २५९ ॥
दृष्टेश्च निम्नता गात्रशोषो दाहातिसारवान् ।
तृष्णा जिह्वाप्रलम्बश्च पुंपक्षिग्रहपीडिते ॥ २६० ॥
स्कन्धे पृष्टे च निम्नत्वं कण्ठरूपो (?) रसस्तथा ।
छर्दतीसारतृष्णाश्च क्लीबग्रहनिपीडिते ॥ २६१ ॥
कुर्यात्पक्षिग्रहार्त्तानां दानं होमं प्रतिक्रियाम् ।
औषधानि च मन्त्रांश्च तथा देवद्विजार्चनम् ॥ २६२ ॥
दद्यात्कुक्कुटनिष्पावरसं तैलेन मस्तके ।
पानलेपनयोस्तस्य बीजं युञ्ज्याच्च सर्वदा ॥ २६३ ॥

फणिर्जकं हंसपादीं शिशुर्मूर्ध्ना स धारयेत् ।
तन्मूलजेन बालस्य रक्षां कुर्याच्च भस्मना ॥ २६४ ॥

पिचुमन्दकपुष्पाणि तेकराजं कुक्कुटकम् ।
मत्स्याक्षिमप्यलर्कञ्च क्षोदयित्वा रसं पृथक् ॥ २६५ ॥

समतैलेन तेन स्याच्छिरोभ्यङ्गः खगापहः ।
कुण्डलीं हंसपादीञ्च फणिर्जञ्चार्कपल्लवम् ॥ २६६ ॥

स्तन्यतैलसमायुक्तं सर्वदा च प्रयोजयेत् ।
कुसुमं हपुषायाश्च कोरण्डं हंसपादिकाम् ॥ २६७ ॥

स्फूर्जं करञ्जपत्रार्कं श्वेतपुष्पञ्च पेषयेत् ।
तत्र कल्के पचेत्तैलमभ्यङ्गे योजयेत्तदा ॥ २६८ ॥

बालग्रहातिसारघ्नं सर्वपक्षिविनाशनम् ।
पलाशाश्वत्थबिल्वानान्निम्बकिंशुकयोस्तथा ॥
पत्रैस्सिद्धः कषायोयं बालानां ग्रहनाशनः ॥ २६९ ॥

(तन्त्रान्तरे)

इति पक्षिग्रहाधिकारः ॥

कालेनुक्ते निशायां तु देशेनुक्ते चतुष्पथे ।
द्रव्येनुक्तेक्रमात्रेण बलिं दद्याद्विचक्षणः ॥ २७० ॥

गुलान्नं पायसं सर्पिस्सुरा पूपलिका घृतम् ।
गुल्मासं तिलचूर्णञ्च गन्धपुष्पं सचन्दनम् ॥ २७१ ॥

चतुष्पथे बलिं दद्यात्सर्वग्रहविमोक्षणम् ।
निम्बापामार्गवरणवैजयन्तीनृपद्रुमैः ॥ २७२ ॥

क्षीरवृक्षकपित्थार्ककाकजङ्घायवोग्रकैः ।
सिद्धाम्बुना हितं स्नानं बाले च ग्रहपीडिते ॥ २७३ ॥

(सिद्धयोग०)

महामुण्डिनिको दीप्यक्काथस्नानो ग्रहापहः ।
सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ॥ २७४ ॥

(भद्रवर्मणः)

मूर्वा सतिक्ता विषमच्छदत्वक्
प्रोद्वर्त्तनाद्धन्ति शिशुग्रहार्त्तिम् ।
सप्तच्छदाश्वत्थमधूकसेलु-
पत्रक्कथाम्भस्नपनञ्च शीतम् ॥ २७५ ॥

(नारायणीयात्)

दूर्वाबलाश्वगन्धासप्तच्छदमूलचोरकैस्सजलैः ।
उद्वर्तनं प्रपिष्टैश्शिशुगात्रविवर्तनं ग्रहनुत् ॥ २७६ ॥

प्लक्षाश्वत्थोदुम्बरमधुकवटकाण्डदर्भतरुणानाम् ।
आदाय मुष्टिमात्रं विपाच्य सलिलेऽर्धशेषेण ॥ २७७ ॥

तेन शिशूनां स्नानं काले कुर्वीत शीततोयेन ।
त्वग्रक्तकोठमण्डलविस्फोटकशमनमायुष्यम् ॥ २७८ ॥

सर्वग्रहापनोदनमुपचयकामाङ्गसन्धीनाम् ।
एषामेव च कल्कैस्सरक्तकोठापहो लेपः ॥ २७९ ॥

(सिद्धसा)

रसोनानिम्बपत्राणि जतुवंशोपलेखनम् ।
सिद्धार्थारिष्टपत्राणि वंशत्वग्जतुना सह ॥ २८० ॥

सर्पनिर्मोचनं केशा निर्माल्यं गौरसर्षपाः ।
धूपत्रयं ससर्पिष्कमेतत्सर्वग्रहापहम् ॥ २८१ ॥

(सिद्धसा)

वंशत्वग्जतुसंयुतं सलशुनं सारिष्टपत्रं घृतं
निर्माल्यं नरकेशसर्पिरुरगत्वग्गौरराजीयुतम् ।
सिद्धार्थं जतुनिम्बपत्रसहितं वंशत्वगाज्यान्वितं
धूपानां त्रयमेतदाशु सकलान् बालग्रहान्नाशयेत् ॥ २८२ ॥

इति योगरत्नसमुच्चये बालग्रहप्रतिषेधा-
धिकारो द्वाविंशः ॥

---

## अथ भूतोन्मादापस्मारप्रतिषेधाधिकारः त्रयोविंशः ।

देवदानवगन्धर्वास्सयक्षोरगराक्षसाः ।
कूश्माण्डका मौक्किरणा वेताळब्रह्मराक्षसाः ॥ १ ॥

प्रेतकाखोर्दपितरः पिशाचा गुरवस्तथा ।
वृद्धसिद्धर्षयो भूता इत्यष्टादश कीर्तिताः ॥ २ ॥

ते पुनः पृथक्कोटिपरिवारा इति ।

(संग्रहे)

लक्षयेत् ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् ।
पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ ३ ॥

भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः ।
यस्यानुकारं कुरुते तेनाविष्टं तमादिशेत् ॥ ४ ॥

सोष्टादशविधो देवदानवादिविभेदतः ।
हेतुस्तदनुषक्तौ तु सद्यः पूर्वकृतोथवा ॥ ५ ॥

प्रज्ञापराधस्सुतरां तेन कामादिजन्मना ।
लुप्तधर्मव्रताचारः पूज्यानप्यतिवर्त्तते ॥ ६ ॥

तं तथा भिन्नमर्यादं पापमात्मोपघातिनम् ।
देवादयोप्यनुघ्नन्ति ग्रहा श्छिद्रप्रहारिणः ॥ ७ ॥

(वाहटे)

प्रसूतां गर्भिणीं नग्नामृतुस्नातां दुराचरीम् ।
आसन्नपुष्पां कामार्त्तां मत्स्यमद्यप्रकाङ्क्षिणीम् ॥ ८ ॥

गूहमानां विलासाढ्यां रथ्याचत्वरयोः स्थिताम् ।
प्रथमोपभुज्यमानां तैलाभ्यक्तामवस्थितताम् ॥ ९ ॥

मृष्टं क्लिष्टं हतं क्रुद्धं हसितं भीतशोकिनौ ।
शर्वरीस्थितमुच्छिष्टव्याधितं सकुतूहलम् ॥ १० ॥

अलाभमूढं पूर्वाप्तनष्टद्रव्यं वियोगिनम् ।
एकाकिनं कान्ततनुं भूषितं च निरायुधम् ॥ ११ ॥

ग्रहा गृह्णन्ति स्त्रीपुंसानीदृशानीश्वराज्ञया ।
अवमानमृणं वैरं विघ्नो भाग्यविपर्ययः ।
देवताज्ञा च लक्ष्यन्ते कारणं ग्रहपीडिते ॥ १२ ॥
(नाराय-)

व्याहाराहारचेष्टाभिर्यथास्वं तद्ग्रहं वदेत् ।
कुमारवृन्दानुगतं नग्नमुद्धतमूर्धजम् ॥ १३ ॥
अस्वस्थमनसं दैर्घकालिकं तं ग्रहं त्यजेत् ।
ऋते पिशाचात्सर्वेषु प्रातिकूल्यञ्च नाचरेत् ॥ १४ ॥
सवैद्यमातुरं घ्नन्ति क्रुद्धास्ते हि महौजसः ।
भूतं जयेदहिंसेच्छं जपहोमबलिव्रतैः ॥ १५ ॥
तपश्शीलसमाधानदानज्ञानदयादिभिः ।
ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः ॥ १६ ॥
दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः ।
स्नानवस्त्रवसामांसमद्यक्षीरगुडादिषु ॥ १७ ॥
रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा ।
रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषी ।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम् ॥ १८ ॥
(वाहटे)

राजीकरञ्जव्याघातशिरीषार्कनिशाद्वयम् ।
प्रियङ्गु त्रिफला दारु हिङ्गु व्योषं कुचन्दनम् ॥ १९ ॥
मञ्जिष्ठोग्राजमूत्रञ्च गुलिका ग्रहनाशनी ।
पाननस्याञ्जनालेपस्नानोद्वर्त्तनधूपनात् ॥ २० ॥
यष्टीहिङ्गुवचावक्रशिरीपलशुनामयैः ।
नस्याञ्जनादि कुर्वीत साजमूत्रैर्ग्रहापहैः ॥ २१ ॥
निम्बपत्रास्थिलशुनलेपस्सर्वग्रहापहः ।
शर्वर्यां स्कन्दनिर्माल्यं शैवं सर्पिः पुरं वचा ॥ २२ ॥
गोपुच्छरोम रोमाजं पत्रं निम्बाश्ववृक्षयोः ।
हिङ्गुराजी च तैलं स्यात्त्रयो धूपा ग्रहापहाः ॥ २३ ॥
(नाराय-)

कार्पासास्थिमयूरपत्रबृहतीनिर्माल्यपिण्डीतक-
त्वङ्मांसीवृषदंशविट्तुषवचाकेशाहिनिर्मोचकैः ।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः परम् ॥ २३ ॥
(अमृतप्र- वाहटे च)

पाठापथ्यावचाशिग्रुहिङ्गुव्योषैः पृथक् समैः ।
अजाक्षीराढके पक्वं सर्पिस्सर्वग्रहापहम् ॥ २४ ॥
(नारायणीये)

सिद्धार्थको वचा हिङ्गु प्रियङ्गु रजनीद्वयम् ।
मञ्जिष्ठा श्वेतकटभी वरा श्वेताद्रिकर्णिका ॥ २५ ॥
निम्बस्य पत्रं बीजन्तु नक्तमालशिरीषयोः ।
सुराह्वं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ २६ ॥
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान् सर्वान् निहन्त्याशु विशेषादासुरान् ग्रहान् ॥ २७ ॥
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्मनुत् ।
एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः ॥ २८ ॥
पाननस्याञ्जनालेपस्नानोद्वर्षणयोजितः ।
गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ २९ ॥
(वाहटे)

इति भूतचिकित्सा ॥

---

उन्मादाष्षट् पृथग्दोषनिचयाधिविषोद्भवाः ।
उन्मादो नाम मनसो दोषैरुन्मार्गगैर्मदः ॥ ३० ॥
(वाहटे)

विघादास्फोटनाक्रान्तिहास्यनृत्तैर्मरुद्भवम् ।
पित्तात्तु कोपशीतेच्छातर्जनाभिद्रवादिभिः ॥ ३१ ॥
निद्राल्पभाष्यनारीच्छारोचकैः कफजः स्मृतः ।
सर्वलिङ्गान्वितो घोरो विवर्ज्यस्सान्निपातिकः ॥ ३२ ॥
(भिद्वत्रा-)

धनकान्तादिनाशेन दुस्सहेनाभिषङ्गवान् ।
पाण्डुर्दीनो मुहुर्मुह्यन् हा हेति परिदेवते ॥ ३३ ॥

शोऽदित्यकस्मात्स्मयते तद्गुणान् बहुमन्यते ।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते ॥ ३४ ॥

विषेण श्याववदनो नष्टच्छायोऽबलेन्द्रियः ।
वेगान्तरेऽपि सम्भ्रान्तो रक्ताक्षस्तं विवर्जयेत् ॥ ३५ ॥

अथानिलज उन्मादे स्नेहपानं प्रयोजयेत् ।
पूर्वमावृतमार्गे तु सस्नेहं मृदुशोधनम् ॥ ३६ ॥

कफपित्तभवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य वस्तिश्च शिरसश्च विरेचनम् ॥ ३७ ॥

अथास्य शुद्धदेहस्य प्रसादं लभते मनः ।
इत्थमप्यनुवृत्तौ तु तीक्ष्णं नावनमञ्जनम् ॥ ३८ ॥

हर्षणाश्वासनोत्रासभयताडनतर्जनम् ।
अभ्यङ्गोद्वर्तनालेपधूमान् पानञ्च सर्पिषः ।
युञ्ज्यात्तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः ॥ ३९ ॥

(बाहटे)

स्नेहितं स्वेदितं चैव योजयेत्पञ्चकर्मणा ।
दाधिकं वा पिबेत्सर्पिस्तैलं शैरीषमेव वा ॥ ४० ॥

शतपाकं बलातैलं महापैशाचकं घृतम् ।
दाधिकञ्च महाक्षारमुन्मत्तः शीलयेत्सदा ॥ ४१ ॥

(भेळे)

मधूकपुष्पीमृद्वीकाकृष्णाकर्पूरचन्दनाः ।
गोपीजलाभ्रस्तन्येक्षुरसाज्यमधुशर्कराः ।
एतैः नस्यक्रिया कार्या नूतने चित्तविभ्रमे ॥ ४२ ॥

(नाराय०)

विष्णुक्रान्ता सखण्डा स्यात्किञ्चिन्मधुकमिश्रिता ।
स्तन्येन नासिकापीता भ्रान्तिं क्षीरभुजः क्षिपेत् ॥ ४३ ॥

(श्रीधवमुखे)

सर्वोन्मादहितो बन्धः प्रहारो भीषणानि च ।
अञ्जनाद्यवपीडाश्च धूमाः प्रधमनानि च ॥ ४४ ॥
पिप्पल्यो मरिचं बीजमपामार्गशिरीषयोः ।
क्षवको हिङ्गु चाप्येतच्चूर्णं प्रधमनं भवेत् ॥ ४५ ॥
अवपीडश्च तैरेव बस्तमूत्रद्रवीकृतः ।
हन्त्युन्मादमपस्मारं वैचित्त्यं विषमज्वरम् ॥ ४६ ॥
(क्षारपाणीये)

मनोह्वा ताक्ष्यर्जञ्चैव शकृत्पारावतस्य च ।
अञ्जनं हन्त्यपस्मारं सोन्मादञ्च विशेषतः ॥ ४७ ॥
सेल्लुत्वगम्बु सस्तन्यमुन्मादे पाननस्ययोः ॥ ४८ ॥
(सिद्धयो-)

ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गु जटां *पुरम् ।
रास्नां विषघ्नां लशुनं विशल्यां सुरसां वचाम् ॥ ४९ ॥
ज्योतिष्मतीं नागविन्नामनन्तां सहरीतकीम् ।
§कौन्तीं च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता ॥ ५० ॥
वर्त्तिः नस्याञ्जनालेपधूपैरुन्मादनाशनी ॥ ५१ ॥
(बाहटे)

चक्रतैलं सधुत्तूरमूलचूर्णं भुवि न्यसेत् ।
सप्तरात्रं तदुद्धृत्य लिम्पेदुन्मादशान्तये ॥ ५२ ॥
(नाराय-)

अवपीडाश्च विविधा सर्षपस्नेहसंयुताः ।
कटुतैलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रजः ॥ ५३ ॥
सहिङ्गुतीक्ष्णधूमश्च सूत्रस्थानोदितो हितः ।
वातश्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते ॥ ५४ ॥
तिक्तकञ्जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ।
शीतानि चान्नपानानि मधुराणि लघूनि च ॥ ५५ ॥
विध्येत् सिरां यथोक्तां च तृप्तं मेद्यामिषस्य वा ॥ ५६ ॥
(बाहटे)

---

* 'मुराम्', § 'काच्छी' इति मुद्रिताष्टाङ्गहृदयपाठः,

कृष्णाकशेरुखर्जूरविदारी मधुकं वरी ।
शर्करा मधु सर्पिश्च सर्वोन्मादे पिबेदिदम् ॥ ५७ ॥
(नारायणीये सिद्धसारे च)

पिप्पलीकतकास्थीनि नारीक्षीरेण पेषयेत् ।
तत्पिबेत्प्रातरुत्थाय पित्तोन्मादविनाशनम् ॥ ५८ ॥
(तन्त्रान्तरे)

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् ।
सिद्धं सगूत्रमुन्मादभूतापस्मारनुत्परम् ॥ ५९ ॥
द्वौ प्रस्थौ स्वरसाद् ब्राह्मया घृतप्रस्थं च साधितम् ।
व्योषश्यामात्रिवृद्दन्तीशङ्खपुष्पी नृपद्रुमैः ॥ ६० ॥
ससप्तलाक्रमिहरैः कल्कितैरक्षसम्मितैः ।
पलवृद्धया प्रयुञ्जीत परं मात्रा चतुष्पलम् ॥ ६१ ॥
उन्मादकुष्ठापस्मारहरं वन्ध्यासुतप्रदम् ।
वाक्स्मृतिस्वरमेधाकृद्धन्यं ब्राह्मीघृतं स्मृतम् ॥ ६२ ॥
वराविशालावद्वैलादेवदार्वेलवालुकैः ।
द्विशारिवाद्विरजनीद्विस्थिराफलिनीनतैः ॥ ६३ ॥
बृहतीकुष्ठमंजिष्ठानागकेसरडाडिमैः ।
वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः ॥ ६४ ॥
सदन्तीपद्मकाहिमैः कर्षांशैस्सर्पिषः पचेत् ।
प्रस्थं भूतग्रहोन्मादकासापस्मारपाप्मसु ॥ ६५ ॥
पाण्डुकण्डूविषे शोषे मोहे मेहे ज्वरे गरे ।
अरेतस्यल्परजसि दैवोपहतचेतसि ॥ ६६ ॥
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ।
बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम् ॥ ६७ ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ।
एभ्यो द्विशारिवादीनि जले पक्त्वैकाविंशतिम् ॥ ६८ ॥
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणम् ।
वीरर्द्धिमेदाकाकोलीकपिकच्छूविषाणिभिः ॥ ६९ ॥

सूप्यपर्णियुतैरेतन्महाकल्याणकं परम् ।
बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः ॥ ७० ॥

जटिला पूतना केशी चारटी मर्कटी वचा ।
त्रायमाणा जया वीरा चोरा कटुकरोहिणी ॥ ७१ ॥

कायस्था सूकरी छत्रा सातिच्छत्रा पलङ्कषा ।
महापुरुषदन्ता च वयस्था नाकुलीद्वयम् ॥ ७२ ॥

कटंभराद्वश्चिकाळीस्थिराश्चाहृत्य तैर्घृतम् ।
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ॥ ७३ ॥

महापैशाचकं नाम घृतमेतद्यथामृतम् ।
स्मृतिबुद्धिकरं चैव बालानामङ्गवर्धनम् ॥ ७४ ॥

(वाहटे भेळे च)

स्नेहकाले च वातोत्थे तैलं शैरीषमिष्यते ।
महाकल्याणकं पैत्ते पंचगव्यं कफोद्भवे ॥ ७५ ॥

अश्वगन्धाजगन्धोग्रगन्धालशुनसर्षपैः ।
रास्नाकायस्थगोलोमीयुक्तैः तैलं विपाचितम् ॥ ७६ ॥

गोमूत्रसदृशं पाननस्याभ्यङ्गानुवासनैः ।
सर्वोन्मादग्रहालक्ष्मीपाप्मापस्मारनाशनम् ॥ ७७ ॥

(सङ्ग्रहे)

प्राक्षिप्याऽसलिले कूपे शोषयेद्वा बुभुक्षया ।
आश्वासयेत्सुहृत्तं वा वाक्यैर्द्धर्मार्थसंहितैः ॥ ७८ ॥

ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि च ।
बद्धं सर्षपतैलाक्तं न्यस्तं चोत्तानमातपे ॥ ७९ ॥

कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैः स्पृशेत् ।
कशाभिस्ताडयित्वा वा बद्धं श्वभ्रे विनिक्षिपेत् ॥ ८० ॥

अथवा वीतशस्त्राश्मजने सन्तमसे गृहे ।
सर्पेणोद्धृतदंष्ट्रेण दान्तैस्सिंहैर्गजैश्च तम् ॥ ८१ ॥

अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ।
भापयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ८२ ॥

देहदुःखभयेभ्यो हि परं प्राणभयं मतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ ८३ ॥

इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तिः सान्त्वाश्वासैः प्रसादयेत् ॥ ८४ ॥

कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ८५ ॥

भूतानुबन्धमीक्षेत प्रोक्तलिङ्गाधिकाकृतिम् ।
यद्युन्मादे ततः कुर्याद्भूतनिर्दिष्टमौषधम् ॥ ८६ ॥

(वाहटे)

कोले प्राश्य च सक्षौद्रं धात्रीचूर्णं सकांचनम् ।
उन्मादशान्तये दद्यात्पूजयेद्वृषभध्वजम् ॥ ८७ ॥

(तन्त्रान्तरम्)

बलिं च दद्यात् पललं यावकं सक्तुपिण्डिकाम् ।
स्निग्धं मधुरमाहारं तण्डुलान् रुधिरोक्षितान् ॥ ८८ ॥

पक्वामकानि मांसानि सुरामैरेयमासवम् ।
अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ॥ ८९ ॥

चतुष्पथे गवां तीर्थे नदीनां सङ्गमेषु च ।
निवृत्तामिषमद्यो यो हिताशी प्रयतश्शुचिः ॥ ९० ॥

निजागन्तुभिरुन्मादैः सत्ववान्न स युज्यते ।
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ९१ ॥

(बाहटे)

इत्युन्मादचिकित्सा ।

---

स्मृत्यपायो ह्यपस्मारः स धीसत्त्वादिसंप्लवात् ।
जायतेऽभिहिते चित्ते चिन्ताशोकभयादिभिः ॥ ९२ ॥

उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः ।
हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ ९३ ॥

---

१ कोलं प्राश्यं सक्षौद्रमिति पाठान्तरम् ।

तमो विशन्मूढमतिर्बीभत्साः कुरुते क्रियाः ।
दन्तान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन् ॥ ९४ ॥

पश्यन्नसन्ति रूपाणि प्रस्खलन् पतति क्षितौ ।
विजिह्माक्षिभ्रुवो दोषवेगेऽतीते प्रबुद्ध्यते ॥ ९५ ॥

कालान्तरेण स पुनश्चैवमेव विचेष्टते ।
अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन च ॥ ९६ ॥

(बाहटे)

कृष्णपीतसिताभासो वातपित्तकफैः क्रमात् ।
दृश्यन्ते तद्विकाराश्च तत्र वर्ज्यस्त्रिदोषजः ॥ ९७ ॥

पञ्च कर्माणि तत्रादौ यथादोषं प्रयोजयेत् ।
सर्वतश्शुद्धदेहस्य स्यादुन्मादहरी क्रिया ॥ ९८ ॥

(सिद्धसारे)

अथावृतानां धीचित्तहृत्खानां प्राक् प्रबोधनम् ।
तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः ॥ ९९ ॥

वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ १०० ॥

सर्वतस्सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनाञ्छृणु ॥ १०१ ॥

(बाहटे)

कूश्माण्डकसमुत्थेन रसेन परिपेषितम् ।
अपस्मारविनाशाय यष्ट्याह्वं संपिबेत् त्र्यहम् ॥ १०२ ॥

(चन्द्रटे)

शीलयेत्तैललशुनं पयसा वा शतावरीम् ।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥ १०३ ॥

(बाहटे)

त्रिकटु त्रिफला दारु हिङ्गु सौवर्चलं वचा ।
कषायं क्षौद्रसंयुक्तमपस्मारविनाशनम् ॥ १०४ ॥

(योगसारसमुच्चये)

गोमयस्वरसक्षीरदधिमूत्रैश्शृतं हविः ।
अपस्मारज्वरोन्मादकामलान्तकरं पिबेत् ॥ १०५ ॥

द्विपञ्चमूलत्रिफलाद्विनिशाकुटजत्वचः ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥ १०६ ॥
शम्याकपुष्करजटाफल्गुमूलदुरालभाः ।
द्विपलाः सलिलद्रोणे पक्त्वा पादावशेषिते ॥ १०७ ॥
भार्ङ्गीपाठाढकीकुम्भनिकुम्भव्योषरोहिषैः ।
मूर्वाभूनिम्बभूतीकश्रेयसीशारिबाद्वयैः ॥ १०८ ॥
मदयन्त्यग्निनिचुलैरक्षांशैस्सर्पिषः पचेत् ।
प्रस्थं तद्वद्रसैः पूर्वैः पञ्चगव्यमिदं महत् ॥ १०९ ॥
ज्वरापस्मारजठरभगन्दरहरं परम् ।
शोफार्शःकामिलापाण्डुगुल्मकासग्रहापहम् ॥ ११० ॥
कंसे क्षीरेक्षुरसयोः कार्ष्मर्येऽष्टगुणे रसे ।
कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ॥ १११ ॥
वातपित्तोद्भवं क्षिप्रमपस्मारं निहन्ति तत् ।
तद्वत्काशविदारीक्षुकुशक्वाथशृतं पयः ॥ ११२ ॥
कूष्माण्डस्वरसे सर्पिरष्टादशगुणे शृतम् ।
यष्टिकल्कमपस्मारहरं धीवाक्स्वरप्रदम् ॥ ११३ ॥

(वाहटे)

शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्राह्मीरसे घृतम् ।
पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमम् ॥ ११४ ॥

(सिद्धसारे)

धात्रीद्रोणरसे द्विमुष्टिमधुके यत् सिद्धमाज्यं तथा
ब्राह्मीकास्वरसे च यद्वदवचाशङ्खप्रसूतीयुते ।
मूत्रे पुङ्गवबस्तयोर्यदपि वा सिन्धूत्थहिङ्गुप्लुते
तत्सर्पिस्त्रितयं ग्रहैः सह हरेत् पानादिनापस्मृतिम् ॥ ११५ ॥
शतपलकशङ्खपुष्पीक्काथे तैलान्विते स्वकल्काढ्ये ।
पक्वं सर्पिः पानात् सर्वापस्मारनाशाय ॥ ११६ ॥

(नारायणीयात्)

तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।
क्षीरद्रोणे पचेत्सिद्धमपस्मारविमोक्षणम् ॥ ११७ ॥

(वाहटे)

शिरीषफलपत्रत्वक्सारमूलतुलाद्वयम् ।
वरणैरण्डशम्याकदशमूलाटरूषकम् ॥ ११८ ॥

शतावरीबलारास्नासुषवीपारिभद्रकम् ।
मुरुङ्गीं वञ्जुलं दन्तीं ककुभं सपुनर्नवम् ॥ ११९ ॥

रोहिषस्य जटां पुष्पं करघाटं मयूरकम् ।
शताद्धांशं पृथक् द्राक्षालाक्षानिंबवरायवान् ॥ १२० ॥

सकोलान् सकुलत्थांश्च पृथगर्धाढकोन्मितान् ।
द्विशतं पिशितात् गव्यात् छागाद्वा तत्पचेदपाम् ॥ १२१ ॥

द्रोणैः द्वात्रिंशताष्टांशशेषेण च विपाचयेत् ।
तैलद्रोणं दधिवहे श्लक्ष्णपिष्टैश्च पालिकैः ॥ १२२ ॥

पाठासमङ्गासुषवीद्विनिशाचन्दनद्वयैः ।
एलाजलोत्पलबलाश्वदंष्ट्राशारिबाघनैः ॥ १२३ ॥

मञ्जिष्ठाकुष्ठमधुकलोध्ररास्नाकुटन्नटैः ।
षडीशिरीषकुसुमनतनागामराह्वयैः ॥ १२४ ॥

वराङ्गजोङ्गपत्तङ्गविळङ्गैस्सप्रियङ्गुभिः ।
मुरुङ्गीपत्रनळदसैन्यकुन्दनखद्वयैः ॥ १२५ ॥

तिलपर्ण्या च तत्पानवस्त्यभ्यञ्जननावनैः ।
अपस्मारग्रहोन्मादान् सशोषविषमज्वरान् ॥ १२६ ॥

योनिशुक्रामयान्गुल्मं प्रमेहं पाण्डुतां मदम् ।
वातशोणितवीसर्पपक्षाघातार्दितादिकान् ॥ १२७ ॥

सर्वान् मारुतजान् रोगान् विशेषाद्विषवातजान् ।
निहन्ति कार्मणं कृत्यां मूलदंष्ट्राविषं गरम् ॥
रसायनानां प्रवरं मेध्यं वाजीकरं परम् ॥ १२८ ॥

वृश्चिकालीबलाकुष्ठभार्ङ्गीलवणपञ्चकम् ।
कायस्थां शारिबां मुद्गमुशीरं जलदं यवान् ॥ १२९ ॥

---

१. 'शिरीषपुष्पपत्रत्वक्' इति मुद्रितसङ्ग्रहे । २. 'मिसिवरायवान्' इति सङ्ग्रहे ।

व्योषञ्च बस्तमूत्रेण पिष्ट्वा वर्त्तिं प्रकल्पयेत् ।
अपस्मारगरोन्मादसर्पदष्टविषाशिते ॥ १३० ॥

(सङ्ग्रहे)

शिग्रुकुष्ठशिलाजाजिलशुनव्योषहिङ्गुभिः ।
बस्तमूत्रे श्रृतं तैलं नावनं स्यादपस्मृतौ ॥ १३१ ॥

(सिद्ध-)

त्रिफला व्योषपीतद्रुयवक्षारफणिर्जकैः ।
श्यामापामार्गकारञ्जफलैर्मूत्रेथ बस्तजे ॥ १३२ ॥
साधितं नावनं तैलमपस्मारविनाशनम् ॥ १३३ ॥

(चरके)

फणिर्जकं सक्षवकं देवदारुमयूरकम् ।
त्रिफला त्र्यूषणं बीजं नक्तमालशिरीषयोः ॥ १३४ ॥
बस्तमूत्रेण विपचेत्तैलमेभिः सहौषधैः ।
नावनं तदपस्मारमुन्मादञ्च नियच्छति ॥ १३५ ॥

आर्द्रकस्वरसे नस्यं वृकगूथाद्यपस्मृतिम् ।
हन्ति तन्मलधूपोपि तन्मलस्वरसोपि वा ॥ १३६ ॥

कृष्णं श्वानं स्थितमनशनं स्थापयित्वा हरेत्तं
पश्चाद्दध्ना सिततिलयुतं भोजनं भोजयित्वा ।
तद्गूथोत्थासिततिलजदीपाञ्जनं लोचने द्राक्
सापस्मारं हरति लगितं नैम्बसारे शरावे ॥ १३७ ॥

वक्ररसोनवचारुक्छिरीषयष्टीभिरञ्जनं नस्यम् ।
उन्मादापस्मारे शस्तमजामूत्रपिष्टाभिः ॥ १३८ ॥

(काल्वी)

त्र्यूषणं हिङ्गु लशुनं वचा कटुकरोहिणी ।
शिरीषनक्तमालाभ्यां बीजं श्वेताश्च सर्षपाः ॥ १३९ ॥
गोमूत्रपिष्टैरेतैश्च वर्त्तिः नेत्राञ्जने हिता ।
चातुर्थिकमपस्मारमुन्मादञ्च नियच्छति ॥ १४० ॥

(अत्रे)

सद्यःप्रसूतकृष्णशुनीजरायुर्मातृघातकश्वेतनखं खरमञ्जरीञ्च मानुषमूत्रेण पिष्ट्वा वर्त्तिं कृत्वा विशोष्य बस्तमूत्रेणाञ्जयेत् । एतदपस्मारोन्मादहृदयशूलविषूचिकानाशनम् ।

(वृद्ध-)

नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपमस्य प्रयोजयेत् ॥ १४१ ॥

(वाहटे)

उद्वर्त्य शकृता मूत्रैरभिषिञ्चेदपस्मृतौ ॥ १४२ ॥

(नारायणीये)

समं क्रुद्धैरपस्मारो दोषैश्शारीरमानसैः ।
सञ्जायते यतश्चैष महामर्मसमाश्रयः ॥ १४३ ॥
तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत् ।
तदार्त्तं चाग्नितोयादेर्विषमात् पालयेत्सदा ॥ १४४ ॥
मुक्तं मनोविकारेण त्वमित्थं कृतवानिति ।
न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥ १४५ ॥

(वाहटे)

इति योगरत्नसमुच्चये भूतोन्मादापस्मारप्रतिषेधाधिकारः त्रयोविंशः ॥

---

## अथ नेत्ररोगादिचिकित्साधिकारः चतुर्विंशः ॥

सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम् ।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिवर्हणम् ॥ १ ॥
उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः ।
दश द्वादश वा बिन्दून्द्व्यङ्गुलादवसेचयेत् ॥ २ ॥
अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ।
अतिशीतन्तु कुरुते निस्तोदस्तम्भवेदनाः ॥ ३ ॥

कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ४ ॥
(वाहटे)

आश्च्योतनमभिष्यन्दे युञ्जीतोर्ध्वं दिनत्रयात् । ॥ ५ ॥
(सङ्ग्रहे)

अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ।
पक्वलिङ्गेल्पशोफातिकण्डूपैच्छिल्यलक्षिते ॥ ६ ॥
मन्दघर्षाश्रुरागेक्षिण प्रयोज्यं घनदूषिके ।
लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ॥ ७ ॥
अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः ।
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ॥ ८ ॥
तीक्ष्णाञ्जनाभिसन्तप्ते नयने यत्प्रसादनम् ।
प्रयुज्यमानं लभते प्रत्यञ्जनसमाह्वयम् ॥ ९ ॥
दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ।
प्रशस्ता लेखने ताम्री रोपणे काललोहजा ॥ १० ॥
अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने ।
पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ॥ ११ ॥
गुरौ मध्ये लघौ दोषे तान् क्रमेण प्रयोजयेत् ।
पिण्डस्यारेणुमात्रं स्याद्द्विगुणं तन्मृदौ वदेत् ॥ १२ ॥
रसक्रियायास्तीक्ष्णाया विळङ्गं द्विगुणं मृदौ ।
चूर्णे च द्विशलाके तु तीक्ष्णे तत्त्रिगुणं मृदौ ॥ १३ ॥
प्रातः सायं च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत् सदा ।
वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम् ॥ १४ ॥
विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ।
अत्युद्रिक्ते बलासे तु लेखनीयेथवा गदे ॥ १५ ॥
काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ।
न रात्रावतिशीतेपि नेत्रे तीक्ष्णाञ्जनं हितम् ॥ १६ ॥

दोषमस्रावयत् स्तब्धं कण्डूजाड्यादिकारि तत् ।
नाञ्जयेत् भीतवमितविरिक्ताशितवेगिते ॥ १७ ॥
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्छोकजागरे ।
अदृष्टेर्के शिरःस्नाते पीतयोर्धूममद्ययोः ॥ १८ ॥
अजीर्णेऽग्न्यर्कसन्तप्ते दिवासुप्ते पिपासिते ।
अतितीक्ष्णमृदुस्तोकबहुच्छवनकर्कशम् ॥ १९ ॥
अत्यर्थशीतलं तप्तमञ्जनं नावचारयेत् ॥ २० ॥

अथ समसुखोपविष्टस्योपविष्टो वामाङ्गुष्ठेन वर्त्मोत्तरमुत्क्षिप्य कृष्णभागस्याधः कनीनकादपाङ्गं यावदञ्जनं नयेत् ।

अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः ।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २१ ॥
नेत्रं व्याप्नोति सहसा न चोन्मेषनिमेषणम् ।
निष्पीडनं वा वर्त्मभ्यां क्षाळनं वा समाचरेत् ॥ २२ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षाळयेत्तदा ॥ २३ ॥
वर्त्मप्राप्ताञ्जनादोषो रोगान् कुर्यात्ततोन्यथा ।
नयने ताम्यति स्तब्धे शुष्के रूक्षेभिघातिते ॥ २४ ॥
वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलक्षणे ।
कृच्छ्रोन्मीलसिराहर्षसिरोत्पाततमोर्जुनैः ॥ २५ ॥
स्यन्दमन्थान्यतोवातवातपर्यायशुक्रकैः ।
आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ॥ २६ ॥
निवाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः ।
काले साधारणे प्रातस्सायं चोत्तानशायिनः ॥ २७ ॥
यवमाषमयीं पाळीं नेत्रकोशाद् बहिःसमाम् ।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ।
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ॥ २८ ॥

आपक्ष्माग्राद्थोन्मेषं शनकैस्तस्य कुर्वतः ।
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते ॥ २९ ॥
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥ ३० ॥

शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश ।
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ३१ ॥

कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।
पिबेच्च धूमं नेक्षेत व्योम रूपं च भासुरम् ॥ ३२ ॥

इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ।
स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ ३३ ॥

प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मतो रुजाः ॥ ३४ ॥

(वाग्भट)

आदित्यमग्निमादर्शमाकाशं मारुतं रजः ।
प्रतिभागश्च चन्द्रस्य धूमं च कृततर्पणः ॥ ३५ ॥

न पश्येद् दशरात्रं तु मैथुनं परिवर्जयेत् ।
व्यायाममुच्चैर्भाष्यं च दिवास्वप्नं तथैव च ॥ ३६ ॥

तर्पणं तर्पयत्यक्षि निम्नमुन्नमयेच्च तत् ।
दृष्टिप्रसादं स्थैर्यं च जनयेन्नात्र संशयः ॥ ३७ ॥

(राजवैदेहीये)

ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च ।
पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत् ॥ ३८ ॥

यथादोषोपयुक्तं तु नातिप्रबलमोजसा ।
रोगमाश्च्योतनं हन्ति सेकस्तु बलवत्तमं ॥ ३९ ॥

सेकस्य कालो द्विगुणः पुटपाकात् क्रमान्मतः ।
अथवा कार्यनिर्वृत्तिरुपयोगाद्यथा भवेत् ॥ ४० ॥

योगायोगौ स्नेहसेके तर्पणोक्तौ प्रचक्षते ।
सर्पिषैव सुखोष्णेन योज्यस्सेको हिमेन वा ॥ ४१ ॥

(सहापा०)

विद्याद्*द्व्यङ्गुलविस्तारं स्वाङ्गुष्ठोदरमायतम् ।
अङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदम् ॥ ४२ ॥
नेत्रायामत्रिभागं तु कृष्णमण्डलमुच्यते ।
कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥ ४३ ॥
मण्डलानि च सन्धींश्च पटलानि च लोचने ।
यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥ ४४ ॥
पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि च ।
पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतः परः ॥ ४५ ॥
कृष्णशुक्लगतस्त्वन्यः कृष्णदृष्टिगतः परः ।
एकः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः ॥ ४६ ॥
द्वे वर्त्मपटले विद्याच्चत्वार्यन्यानि चक्षुषि ।
जायते तिमिरं येषु व्याधिः परमदारुणः ॥ ४७ ॥
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥ ४८ ॥

विदाह्यसात्म्यातिविरुद्धशीत-
क्षाराम्लतीक्ष्णोष्णगुरुद्रवान्नैः ।
तीक्ष्णोच्चगन्धादतिहास्यभाष्य-
क्रोधादिशोकैः प्रततेक्षणाद्वा ॥ ४९ ॥

मद्याङ्गना||नामतिसेवनेन
मूर्द्धाभिघाताम्बुनिमज्जनाभ्यास् ।
अवाक्छिरस्कोच्छ्रितशायिनश्च
ज्वरोपतापादृतुपर्ययाच्च ॥ ५० ॥

उष्णाभितप्तस्य जलप्रवेशाद्
दूरेक्षणात् स्वप्नविपर्ययाच्च ।
शुक्तारनालाम्लकुलत्थमाष-
निषेवणाद्वेगविनिग्रहाच्च ॥ ५१ ॥

* विद्याद्द्व्यंगुलबाहुल्यं स्वांगुष्ठोदरसम्मितं (विस्तृतम्) इति मुद्रितसुश्रुतपाठः
|| ध्वादिनिषेवणेन इति पाठान्तरम् ।

स्वेदाद्रजोधूमनिषेवणाच्च
छर्देर्विघाताद्वमनातियोगात् ।
बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च
नेत्रे विकारान् जनयन्ति दोषाः ॥ ५२ ॥

संक्षेपतः क्रियायोगो निदानपरिवर्जनम् ॥ ५३ ॥

(पाठ-)

सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ।
अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः ॥ ५४ ॥
सिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः ।
वर्त्म सन्धिं सितं कृष्णं दृष्टिं वा सर्वमक्षि वा ॥ ५५ ॥
रोगान् कुर्युः

(वाह-)

कृच्छ्रोन्मीलनिमेषवातहतकुम्भिकापित्तोत्क्लिष्टपक्ष्मशातपोथकीकफोत्क्लिष्टलगणोत्सङ्गरक्तोत्क्लिष्टार्शोञ्जननामिकाबिसवर्त्मोत्क्लिष्टवर्त्मश्याववर्त्माश्लिष्टवर्त्मासिकतावर्त्मकर्दमबहळकुकूणकपक्ष्मोपरोधालज्यर्बुदा इति चतुर्विंशतिः वर्त्मसंश्रया रोगाः । तत्र वायुर्वर्त्मसिराऽऽस्थस्सवेदनं साश्रु सकृच्छ्रोन्मीलनं विमर्दनेन शान्तियुतं वर्त्मस्तम्भं कुरुते स कृच्छ्रोन्मीलः । वायुर्वर्त्मनी चालयन् नीरुजं निमेषोन्मेषणं करोति स निमेषः । वर्त्म यत्तु विमुक्तसन्धि निश्चेष्टं निमील्यते तद्वातहतं सरुजमरुजं वा । पित्तेनान्तर्वर्त्मजाः पिटकाः कृष्णा बह्व्यः कुम्भीकबीजप्रतिमा भिन्नाश्च पुनराध्मायन्ते ताः कुम्भीकसंज्ञिताः । पित्तेन रक्ताभं स्पर्शनाक्षमं सदाहक्लेदतोदं वर्त्म पित्तोत्क्लिष्टम् । पक्ष्मान्तःस्थं पित्तं सकण्डूदाहं पक्ष्मशातनं कुर्यात् । स पक्ष्मशातनः । कफेन पिटकाः सर्षपाभाः श्वेतास्सशोफरुक्कण्डूपिच्छिलास्रस्रावाः पोथक्यः । स्तम्भक्लेदोपदेहयुतं वर्त्म कफोत्क्लिष्टं नाम । कफाद् ग्रन्थिः कोलमात्रः कण्डूमानपाको नीरुजः पाण्डुर्लगणो नाम । रक्तेन रक्ता तत्तुल्यपिळकाचिता उत्सङ्गाख्या । राजीमत्स्पर्शनाक्षमं वर्त्म रक्तोत्क्लिष्टं नाम । रक्तेन मृदवो मांसाङ्कुरा वर्त्मस्थास्सदाहकण्डूरुजा रक्तस्रावाः छिन्नाः छिन्ना विवर्द्धन्ते तेऽर्शो नाम । रक्ताच्चाम्रा मुद्गमात्रा कण्डूम-

हृग्वती पिळका स्यादञ्जननामिका । यत्तु वर्त्म सन्निपाताद् बहिः शून्य-मन्तः सूक्ष्मच्छिद्राश्रितं सास्रावमन्तरुदकं तद् बिसवर्त्म । सरक्तैर्दोषै-रकस्मात् मुहुरुत्सेधं म्लानवदुत्क्लिष्टवर्त्माख्यम् । सरक्तैर्मलैर्बाह्यान्तः-श्यावं शूनं सकण्डूपाकक्लेदं वर्त्म श्याववर्त्माख्यम् । श्लिष्टाख्य वर्त्मनी श्लिष्टे कण्डूश्वयथुरागिणी । अन्तर्वर्त्म खररूक्षसिकतोपमपिट-काचितं सिकतावर्त्म । यदा सपित्तं रक्तं वर्त्म विदहेत् तदा कृष्णं कर्दमोपमं कर्दममुच्यते । बहळैस्सवर्णैस्समैर्मांसैश्चितं बहळवर्त्म । कुकू-णको नाम शिशोर्दन्तोत्पत्तिनिमित्तजः । तेन बालः उच्छूनताम्राक्षः तीक्ष्णाक्षमः सवर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्दनः स्यात् । दोषैः पक्ष्माशयस्थैः तीक्ष्णाग्राणि कण्टकाभानि खराणि भवन्त्यन्त-र्मुखानि रोमाणि । तैर्घृष्टमक्षि शूयते । सदाहवर्त्मसङ्कोचं च । तैरु-द्धृतैरल्पाहं शान्तिः । स पक्ष्मोपरोधाख्यः । बहिर्वर्त्म कनीनके कठिनो ग्रन्थिरस्रपूयस्राव्यलजीनामा मुहुराध्मायते । सरक्तैर्दोषैरन्त-र्वर्त्म मांसपिण्डाभश्वयथुरर्बुदो नाम ।

(वाहटे· पाठ-)

आद्योऽत्र भेषजैस्साध्यो द्वौ ततोऽत्र वर्जयेत् ।
पक्ष्मोपरोधो याप्यः स्याच्छेषाञ्छस्त्रौषधैर्जयेत् ॥ ५६ ॥

कुट्टयेत् पक्ष्मशतनं छिन्द्यात्तेष्वपि चार्बुदम् ।
भिन्द्याल्लगणकुम्भीकाबिसोत्सङ्गाञ्जनालजीः ॥ ५७ ॥

पोथकीसिकताश्यावश्लिष्टोक्लिष्टचतुष्टयम् ।
सकर्दमं सबहळं विलिखेत् सकुकूणकम् ॥ ५८ ॥
कृच्छ्रोन्मीले पुराणाज्यं द्राक्षाकल्काम्बुसाधितम् ।
ससितं योजयेत्स्निग्धं नस्यधूमाञ्जनादि च ॥ ५९ ॥

कुम्भीकावर्त्मलिखितं सैन्धवप्रतिसारितम् ।
यष्टिधात्रीपटोलीनां क्वाथेन परिषेचयेत् ॥ ६० ॥

निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ।
बहिः कोष्णाम्बुतप्तेन स्वेदितं वर्त्म वाससा ॥ ६१ ॥

निर्भुज्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुलीधृतम् ।
न स्रंसते चलति वा वर्त्मैवं सर्वतस्ततः ॥ ६२ ॥

मण्डलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदाङ्कितम् ।
लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥ ६३ ॥

फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक् ।
स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥ ६४ ॥

यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ।
घृतेनासिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ॥ ६५ ॥

ऊर्ध्वाधःकर्णयोर्दत्त्वा पिण्डीञ्च यवसक्तुभिः ।
तृतीयेऽहनि मुक्तस्य परिषेकं यथायथम् ॥ ६६ ॥

कुर्याच्चतुर्थे नस्यादीन्मुञ्चेद्देवाह्नि पञ्चमे ।
समं नखनिभं शोफकण्डूघर्षाद्यपीडितम् ॥ ६७ ॥

विद्यात्सुलिखितं वर्त्म लिखेद् भूयो विपर्यये ।
रुक्पक्षवर्त्मशातनस्रंसनान्यतिलेखनात् ॥ ६८ ॥

स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः ।
पिटकां व्रीहिवक्त्रेण भित्त्वा तु कठिनोन्नताः ॥ ६९ ॥

निष्पीडयेदनु विधिः परिशेषस्तु पूर्ववत् ।
लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ॥ ७० ॥

पित्तास्रोक्लिष्टयोस्स्वादुस्कन्धसिद्धेन सर्पिषा ।
सिराविमोक्षस्निग्धस्य त्रिवृच्छ्रेष्टं विरेचने ॥ ७१ ॥

पक्ष्मणां शतने सूच्या रोमकूपान् विकुट्टयेत् ।
ग्राहयेद्वा जलूकाभिः पयसेक्षुरसेन वा ॥ ७२ ॥

वमनं नावनं सर्पिः शृतं मधुरशीतलैः ।
संचूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः ॥ ७३ ॥

ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम् ॥ ७४ ॥

(वाहटे)

पोथकीर्विलिख्य शुण्ठीसैन्धवमागधिकाचूर्णैः प्रतिसार्य प्रक्षाल्य चोष्णांभसा खदिरसाराढकीशिग्रुपत्रकषायेण सेचयेत् । ततश्चाम्रजम्बूप्रवालक्काथेनाऽऽश्च्योतनं त्रिफलाखदिरसारोदकेन वा मधुसंयुक्तेन । विलङ्गलाक्षादार्वीत्वग्गैरिकालमनोह्वाचूर्णः क्षौद्रान्वितोऽञ्जनम् ।

(सङ्ग्रहे)

कफोत्कृष्टे विलिखिते सक्षौद्रैः प्रतिसारयेत् ।
सूक्ष्मैः सैन्धवकासीसमनोह्वाकणतार्क्ष्यजैः ॥ ७५ ॥

वमनाञ्जननस्यादि सर्वं च कफजिद्धितम् ।
कर्तव्यं लगणेऽप्येतदशान्तौ वह्निना दहेत् ॥ ७६ ॥

कुकूणे लिखितं वर्त्म सुतासृग्वाम्बुजन्मभिः ।
धात्र्यश्मन्तकजम्बूत्थपत्रक्काथेन सेचयेत् ॥ ७७ ॥

द्विनिशालोध्रयष्ट्याह्वरोहिणीनिम्बपल्लवैः ।
कुकूणके हिता वर्तिः पिष्टैस्ताम्ररजोन्वितैः ॥ ७८ ॥

(वाहटे)

मरिचविलङ्गहरिद्राकल्कसिद्धं तैलं प्रतिमर्शः । मूर्वाताम्ररजसी स्तन्यपिष्टे पिण्डाञ्जनम् । शङ्खमनःशिलासैन्धवरसाञ्जनक्षौद्रैर्वा रसक्रिया । लोहशिवाटिकामृदः कपाले नैकशः प्रतप्ताः स्तन्येन निर्वापिताः श्लक्ष्णचूर्णमञ्जनम् । लाक्षावेल्लमनःशिलालगैरिकदार्वीत्वग्भिर्वा । पुनःपुनश्च धात्रीं वमनविरेचनैरुपपादयेत् ।

(सङ्ग्रहे)

वृक्षाम्लदध्याज्यगुळं च तैलं
सक्षौद्रसिन्धुस्वरसं लवण्याः ।
ताम्रेण कंसे बहुशोऽवघृष्टं
कुकूणकं तत् सकृदेव हन्ति (?) ॥ ७९ ॥

(योगामृते)

कुकूणकहरं श्रेष्ठं मधुना सह सैन्धवम् ।
पिल्लाक्षं विनिहन्त्याशु शुक्लनाशनमुत्तमम् ॥ ८० ॥

पक्ष्मोपरोधे समुपचितं वर्त्म लेखनेनोत्क्रिष्टं रक्तं विस्रावणेन सशोफं शिरोविरेककवळवमनैर्यापयेत् ।

(सङ्ग्रहे)

पक्ष्मरोधे प्रवृद्धेषु शुद्धदेहस्य रोमसु ।
उत्सृज्य द्वौ भ्रुवोधस्तात् भागौ भागश्च पक्ष्मतः ॥ ८१ ॥
यवमात्रं यवाकारं तिर्यक् छित्वार्द्रवाससा ।
अपनेयमसृक् तस्मिन्नल्पीभवति शोणिते ॥ ८२ ॥
सीव्येत् कुटिलया सूच्या मुद्गमात्रान्तरैः पदैः ।
बद्ध्वा ललाटे पट्टश्च तत्र सीवनसूत्रकम् ॥ ८३ ॥
नातिगाढश्लथं सूच्या निक्षिपेदथ योजयेत् ।
मधुसर्पिःकबळिकां नचास्मिन् बन्धमाचरेत् ॥ ८४ ॥
न्यग्रोधादिकषायैश्च सक्षीरैस्सेचयेद्रुजि ॥ ८५ ॥

(वाहटे)

व्रणवेदनायां वस्त्रबद्धेन यष्टीमधुकचूर्णेन संस्कृतं सर्पिः परिषेकः । वटादिकषायाश्च सक्षीराः ।

(लङ्कटे)

पञ्चमे दिवसे सूत्रमपनीयावचूर्णयेत् ।
गैरिकेण व्रणं युञ्ज्यात्तीक्ष्णं नस्याञ्जनादि च ॥ ८६ ॥
दहेदशान्तौ निर्भुज्य वर्त्मदोषाश्रयां बलिम् ।
सन्दंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ८७ ॥
सूच्यग्रेणाग्निवर्णेन दाहो बाह्यालजे पुनः ।
भिन्नस्य क्षारवह्निभ्यां सुच्छिन्नस्यार्बुदस्य च ॥ ८८ ॥

(वाहटे)

चिञ्चागृष्टीमयूरीखुरसलवणिकाभृङ्गमौर्वीक्षुराणां
पत्रात्सारं समांशं सदधिमधुघृतैराज्यसिन्धूत्थतैलैः ।
युक्तं कारञ्जघृष्टं स्फटिकयुतमिदं चाञ्जनं वर्त्मरोगं
पिल्लाक्षं चार्मरोगं शमयति निमिना प्रोक्तमेतद्यथैव ॥

अलं दारु वचा पिष्टा सुरसापत्रवारिणा ।
छायाविशुष्का गुळिका क्लिन्नवर्त्मनिवारिणी ॥ ९० ॥

(सिद्धसारे)

इति वर्त्मरोगचिकित्सा ॥

जलास्रावः कफास्राव उपनाहः रक्तास्रावः पर्वणी, पूयास्रावः पूयालसोऽलजी क्रिमिग्रन्थिः इति नव रोगा वर्त्मशुक्लमण्डलसन्धिजाः। तत्र वायुर्जलवाहिसिरास्थः कनीनकादश्रु स्रावयते रुग्रागशोफादिना स जलास्रावो नाम । कफात् श्वेतं सान्द्रं पिच्छिलमश्रु स्रवेत् । स कफास्रावः। दृष्टिसन्धौ महानपाको नीरुजः कण्डूमान् मृदुपिच्छिलो ग्रन्थिरुपनाहः । रक्तेन ताम्रो नातिसान्द्रो बहूष्णश्च स्रावो रक्तास्रावः । शुक्ले वर्त्मसन्धिमूला मुद्गमात्रा सदाहशूला ताम्रा पिटका पर्वणी । सा च भिन्ना रक्तमेव स्रवति । दोषास्सरक्ता वर्त्मसन्धेः कनीनकात्त्वङ्मांसपाकतः साश्रुपूयं स्रावयन्ति स पूयास्रावः । कनीनकसन्धिजश्शोफसंरम्भपूर्वकः पक्वस्सान्द्रपूतिपूयास्रावस्सवेदनः सूक्ष्मो व्रणः पूयालसो नाम । कनीनस्यान्तस्सतोददाहश्शोफः स्याद् साऽलजी । अपाङ्गे वा कनीने वा सन्धिगाः क्रिमयः सकण्डूपातोदं सपूयास्रावं ग्रन्थिं कुर्युः । स क्रिमिग्रन्थिः ।

(वाह्टे पाठ-)

उपनाहक्रिमिग्रन्थिपूयालसकपर्वणीः ।
शस्त्रेण साधयेत् पञ्च सालजीनास्रवांस्त्यजेत् ॥ ९१ ॥

(वाहटे)

रसाञ्जनञ्च तुत्थं च यष्टीमधुकमेव च ।
अञ्जनेन समं पिष्टं जलास्रावविनाशनम् ॥ ९२ ॥

(तन्त्रान्तरे)

उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन च ।
लेखयेन्मण्डलाग्रेण ततश्च प्रतिसारयेत् ॥ ९३ ॥

पिप्पलीक्षौद्रसिन्धूत्थैर्बध्नीयात्पूर्ववत्ततः ।
पटोलपत्रामलककाथेनाऽऽश्च्योतयेच्च तम् ॥ ९४ ॥

पर्वणीं बडिशेनात्ता बाह्यसन्धित्रिभागतः ।
वृद्धिपत्रेण वर्ध्यार्धे स्यादसृग्गतिरन्यथा ॥ ९५ ॥

चिकित्सा चार्मवत् क्षौद्रसैन्धवप्रतिसारिता ।
पूयालसे सिरां विद्ध्येत्ततस्तमुपनाहयेत् ॥ ९६ ॥

कुर्वीत चाक्षिपाकोक्तं कर्म सर्वं यथाविधि ।
सैन्धवार्द्रककासीसलोहताम्रैः सुचूर्णितैः ॥ ९७ ॥

चूर्णाञ्जनं प्रयुञ्जीत सक्षौद्रैर्वा रसक्रियाम् ।
पूयालसे त्वशान्तेऽन्तर्दाहः सूक्ष्मशलाकया ॥ ९८ ॥

क्रिमिग्रन्थिं करीषेण स्विन्नं भित्त्वा विलिख्य च ।
त्रिफलाक्षौद्रकासीससैन्धवैः प्रतिसारयेत् ॥ ९९ ॥

(वाहटे)

शुक्तिकाशुक्लार्मबलासग्रथितपिष्टकासिरोत्पातसिराहर्षसिराजालशोणितार्मार्जुनप्रस्तार्यर्मस्नावार्माधिमांसार्मसिरापिटका इति त्रयोदश रोगा शुक्लभागजाः । पित्तं वृद्धं शुक्ले श्यावकृष्णपीतान् पिशितनिभान् बिन्दून् वा सर्वं शुक्लमण्डलं मलाक्तादर्शतुल्यं वा कुर्यात् । स रोगस्सशकृद्भेदतृड्ज्वरः शुक्तिकाख्यः । कफाच्छुक्ले समं सितं चिरवृद्ध्याधिमांसं शुक्लार्माख्यम् । कफाच्छुक्ले नीरुजः सवर्णो बहळो जलबिन्दुनिभो मृदुश्शोफो बलासग्रथिताख्यः । शुक्ले शालिपिष्टधवळस्सोत्सेधो बिन्दुः पिष्टकाख्यः । रक्तेन रक्तराजीततं सवेदनमशोफाश्रु शुक्लं यदुष्यते स सिरोत्पातः । उपेक्षितस्स एव ता एव राजीर्वर्धयन् सास्रमक्षि वीक्षणाक्षमञ्च कुर्यात् । स सिराहर्षः । शुक्ले रक्तं घनमुन्नतं सिराजालं सिराजालाख्यम् । शुक्ले समं पद्मनिभमधिमांसं शोणितार्माख्यम् । शुक्ले शशरुधिरनिभो नीरुगेको बिन्दुरर्जुनाख्यः । सरक्तैर्दोषैर्नीरुजमाशुवृद्धि श्यावलोहितं विस्तृतं मांसं प्रस्तार्यर्मसंज्ञम् । स्नावसन्निभमधिमांसं स्नावार्मसंज्ञम् । शुष्कासृक्पिण्डवच्छ्यावं पृथु घनं मांसमधिमांसार्म । सरुग्दाहघर्षास्सर्षपोपमाः कृष्णमण्डलासन्नास्सिरावृताः पिटकास्सिरापिटकाख्याः ।

(वाहटे-पाठ-)

शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनम् ।
साधयेदौषधैष्षट्कं शेषं शस्त्रेण सप्तकम् ॥ १०० ॥

नवोत्थं तदपि द्रव्यैरर्मोक्तं यत्तु पञ्चधा ।
तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतम् ॥ १०१ ॥

चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं च वर्जयेत् ।
पित्ताभिष्यन्दवच्छुक्तिं बलासाह्वयपिष्टकौ ॥ १०२ ॥

कफाभिष्यन्दवन्मुक्त्वा सिराव्यधमुपाचरेत् ।
जातीमुकुलसिन्धूत्थदेवदारुमहौषधैः ॥ १०३ ॥

पिष्टैः प्रसन्नया वर्तिश्शोफकण्डूघ्नमञ्जनम् ॥ १०४ ॥
(वाहटे)

सैन्धवमरिचकट्फलशङ्खसमुद्रफेनैर्वर्तिः पिष्टकेऽञ्जनम् ॥

शुण्ठीशिग्रुफलपिप्पलीसैन्धवचूर्णो बीजपूररसाप्लुतोऽञ्जने पिष्टकमपहरति । तद्वत्त्रिकटुकटुककट्फलचूर्णोवलासग्रथितं च ।
(संग्रहे)

रक्तस्यन्दवदुत्पातहर्षजालार्जुने क्रिया ।
सिरोत्पाते विशेषेण घृतमाक्षिकमञ्जनम् ॥ १०५ ॥

सिराहर्षे तु मधुना श्लक्ष्णपिष्टं रसाञ्जनम् ।
अर्जुने शर्करामस्तुक्षौद्रैराश्च्योतनं हितम् ॥ १०६ ॥

स्फटिकः कुङ्कुमं शङ्खो मधुकं मधुनाञ्जनम् ।
मधुना वाञ्जनं शङ्खः फेनो वा सितया सह ॥ १०७ ॥
(वाहटे)

मातुलुङ्गरसेन सशर्करेण आश्च्योतनं मस्तुना वा ।
(संग्रहे)

अर्मोक्तं पञ्चधा तत्तु तनु धूमाविलञ्च यत् ।
रक्तं दधिनिभं यच्च शुक्लवत्तस्य भेषजम् ॥ १०८ ॥

उत्तानस्येतरत् स्विन्नं स सिन्धूत्थेन चाञ्जितम् ।
रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ १०९ ॥

इत्थं संरोषिताक्षस्य प्रचलेर्माधिमांसके ।
घृतस्य निश्चलं मूर्ध्नि वर्त्मनोश्च विशेषतः ॥ ११० ॥

अपाङ्गमीक्षमाणस्य वृद्धेर्मणि कनीनकात् ।
वली स्याद्यत्र तत्रार्मबलिशेनावलंबितम् ॥ १११ ॥

नात्यायतं मुचुण्ड्या वा सूच्या सूत्रेण वा ततः ।
समन्तान्मण्डलाग्रेण मोचयेदथ मोक्षितम् ॥ ११२ ॥

कनीनकमुपानीय चतुर्भागावशेषितम् ।
छिन्द्यात्कनीनकं रक्षेद्वाहिनीश्चाऽश्रुवाहिनीः ॥ ११३ ॥

कनीनकवधादश्रुनाली चाक्ष्णि प्रवर्तते ।
वृद्धेऽर्मणि तथापाङ्गात् पश्यतोऽस्य कनीनकम् ॥ ११४ ॥
सम्यक् छिन्नं मधुव्योषसैन्धवप्रतिसारितम् ।
उष्णेन सर्पिषा सिक्तमभ्यक्तं मधुसर्पिषा ॥ ११५ ॥
बध्नीयात् सेचयेन्मुक्त्वा तृतीयादिदिनेषु च ।
करञ्जबीजसिद्धेन क्षीरेण क्वथितैस्तथा ॥ ११६ ॥
सक्षौद्रैर्द्विनिशालोध्रपटोलीयष्टिकिंशुकैः ।
कोरण्डमुकुलोपेतैर्मुश्चेदेवाह्नि सप्तमे ॥ ११७ ॥
सम्यक् छिन्ने भवेत् स्वास्थ्यं हीनातिच्छेदजान् गदान् ।
सेकाञ्जनप्रभृतिभिर्जयेल्लेखनबृंहणैः ॥ ११८ ॥

(बाहटे)

मूर्ध्नि पादयोश्चास्मै शतधौतघृतं शीतांश्च प्रदेहान्दद्यात् । स्नेहोक्तं चाचारमादिशेत् । द्वितीये चाह्नि सायं प्रातर्मधुकसर्पिषा कोष्णेन शिरस्तथावबद्धमेव चाक्षि सिञ्चेत् । पश्चाहं चोष्णोदकानुपानं सर्पिः पीत्वा जीर्णे पथ्यमश्नीयात् । तृतीये दिवसे विमुच्य करंजबीजसिद्धेन क्षीरेणाक्षि स्वेदयेत् । लोध्रमधुकर्किशुकपटोलद्विहरिद्राकोरण्डमुकुलक्काथेन मधुमिश्रेणोऽश्च्योतयेत् । सप्तमेऽहनि सर्वथा मुञ्चेत् । आतपाकाशदर्शनं च परिहरेत् । सशोफे तु नेत्रे धूमशिरोविरेचनञ्च । अनुपशान्तरागे सिराविस्रावणम् । सास्रावे नस्यम् । तिलान्सुलिखितान् मधुककाकोलीसुनिषण्णकपञ्चमूलशर्कराशृतशीते पयसि सप्ताहं भावितान् तेनैव पयसा पीडयेत् । मधुकशताह्वाशारिवानन्तागरुकाकोलीहरेणुकैलावालुकचूर्णं च पीड्यमानेषु षोडशभागेन प्रक्षिपेत् । तत्तैलमेभिरेवौषधैः पयसा चाऽष्टगुणेन सिद्धं नावनादश्रुरागघ्नं दृष्टिप्रसादनं च । कृष्णगते तु व्रणे व्रणशुक्लवत् क्रिया । अर्मशेषे च लेखनाञ्जनानि । तत्र सम्यक्छिन्ने वर्णविशुद्धिः स्वस्थता च । हीनच्छेदात्पुनर्वृद्धीरागाश्रुपातप्रकाशादर्शनाक्षमत्वादि च । अतिच्छेदादक्षिपाकस्तम्भस्फुरणास्रस्रुतितिमिरसंरम्भविबद्धवर्त्मानि । तेषु यथास्वं दोषोद्रेकाद् प्रतिकुर्यात् ।

(संग्रहे)

सितामनःशिलैलाललवणोत्तमनागरम् ।
अर्द्धकर्षोन्मितं तार्क्ष्यं पलार्द्धञ्च मधुद्रुतम् ॥ ११९ ॥
अञ्जनं श्लेष्मतिमिरपिल्लशुक्लार्मशेषजित् ।
त्रिफलैकतमद्रव्यत्वचं पानीयकल्किताम् ॥ १२० ॥
शरावपिहितां दग्ध्वा कपाले चूर्णयेत्ततः ।
पृथक् शेषौषधरसैः पृथगेव च भाविता ॥ १२१ ॥
सा मषी शोषिता पेष्या भूयो द्विलवणान्विता ।
त्रीण्येतान्यञ्जनान्याह लेखनानि परं निमिः ॥ १२२ ॥

(वाहटे)

शङ्खं च मधुना घृष्टं लोहितार्मविनाशनम् ॥ १२३ ॥

(तन्त्रा-)

कर्पूरं स्फटिकं वराटमरिचं दार्वी कणा सैन्धवं
तुत्थं पीतकरोहिणी जलधिजं फेनं तथा गैरिकम् ।
तार्क्ष्यं शङ्खमथाञ्जनं च मधुकं संचूर्ण्य सम्यक्कृता
क्षौद्रेणैव रसक्रियेयमखिलानक्ष्यामयान्नाशयेत् ॥ १२४ ॥

(क्षार-)

कर्पूरसैन्धवपुराणघृतोपकुल्याः
धात्रीफलोषणकपीतकरोहिणीश्च ।
पिष्ट्वाञ्जनं नयनयोर्मधुनैव दद्यात्
सर्वाक्षिवर्त्मविकृतिप्रशमाय वैद्यः ॥ १२५ ॥

कर्पूराब्दवराटिका त्रिफलिका सिन्धूत्थतुत्थाञ्जनं
तार्क्ष्यं पीतकरोहिणी हिमनिशे पुण्ड्राह्वयष्टयाह्वयम् ।
फेनः केशमषी कटुत्रयगदौ लोध्रं च लौहं रजः
पिष्ट्वैतानि च मातुलुङ्गरसतस्सर्पिर्मधुभ्यां युतम् ॥ १२६ ॥
एतद्धन्ति कुकूणकं सतिमिरं काचं च शुक्रव्रणं
नक्तान्धं क्षतजं च भृङ्गनिहितं नाम्ना तु चन्द्रोदयम् ॥ १२७ ॥

(तन्त्रा-)

कर्पूरत्रिफलारसाञ्जनशिलापालाशनिर्यासकं
तिक्तातार्क्ष्यजपाण्डुकृष्णवलयव्योषानवद्येष्टकम् ।

यष्टीसैन्धवशंखफेनगिरिमृत्कन्याप्रपुण्ड्राह्वयं
लोध्रांभोनिधिफेनकं च मधुना दार्वीरसेनाञ्जयेत् ॥ १२८ ॥
(तन्त्रा)-

कर्पूरं स्फटिकं वरा त्रिकटुकं तुत्थं निशाशुक्‌ तुटी
यष्टी लोध्रसुवर्णटङ्कणशिला मुक्ताप्रवाळं मणिः ।
शंखं पीतकरोहिणी वरहिमं कारञ्जबीजं पयः
पिष्टं माक्षिकघृष्टमञ्जनमिदं नेत्रामयान् नाशयेत् ॥ १२९ ॥

कर्पूराञ्जनसीसपारदकणातीक्ष्णानि पिष्ट्वासकृत्
नन्द्यावर्त्तरसे विशोष्य मधुना पिष्ट्वा पुनर्भाजने ।
शार्ङ्गे स्फाटिक एव वा विनिहितं शुक्लार्मकाचापहं
तैमिर्यं च निराकरोति सहसा नेत्रेऽञ्जितं सर्वदा ॥ १०३ ॥

यन्माणिमन्थशशिपीतकरोहिणीनां
कृष्णारसाञ्जनयुजां क्रमवृद्धचूर्णम् ।
तन्नन्दिवर्तकुसुमस्वरसेन पिष्टं
क्षौद्रद्रुतं हरति वर्त्मगदार्मकाचान् ॥ १३१ ॥

गोदन्तं चन्दनं शङ्खं स्फटिकं सैन्धवं तथा ।
मनःशिलां च रजनीं मरिचञ्च प्रपेषयेत् ॥ १३२ ॥

अर्मे च तिमिरे शुक्ले गोदन्तादि प्रशस्यते ॥ १३३ ॥

गोदन्तं कुक्कुटाण्डं करिवरदशनं कूर्मपृष्ठं वराटं
सारंगोद्भूतशृङ्गं जलधिमलमलं* ताम्रशंखं सतुत्थम् ।
कर्परं †शीतफेनं स्फटिकमपि मधूच्छिष्टमक्ष्णोर्निषिञ्चेत्
शुक्लाख्यार्माधिमांसक्षतजभवसिरोत्पातहर्षान्निहन्ति ॥ १३४ ॥
(राजवैदेहीये)

सिराजाले सिरा यास्तु कठिना लेखनौषधैः ।
न सिध्यन्त्यर्मवच्चासां पिळकानां च साधनम् ॥ १३५ ॥
(वाहटे)

* ताम्रचूर्णमिति पाठान्तरम् । † गर्दभास्थि इति—पा.

क्षतशुक्लशुद्धशुक्लाजकासिराशुक्लपाकात्ययशुक्लानीति पञ्च कृष्णभागगतरोगाः ।

पित्तं कृष्णेऽथवा दृष्टौ शुक्लं तोदाश्रुरागवत् ।
छित्वा त्वचं जनयति तेन स्यात् कृष्णमण्डलम् ॥ १३६ ॥
पक्वजम्बूनिभं किञ्चिन्निम्नं च क्षतशुक्लकम् ।
तत्कृच्छ्रसाध्यं याप्यन्तु द्वितीयपटलव्यधात् ॥ १३७ ॥
तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता ।
तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ॥ १३८ ॥

(वाहटे)

निमग्नरूपं तु भवेत्तु कृष्णे
सूच्येव विद्धं प्रतिभाति यद्वै ।
स्रावं स्रवेदुष्णमतीव यच्च
तत् सव्रणं शुक्लमुदाहरन्ति ॥ १३९ ॥
सितं यदाभात्यसितप्रदेशे
स्यन्दात्मकं नातिरुगस्रयुक्तम् ।
विहायसीवाभ्रदलानुकारि
तदव्रणं साध्यतमं वदन्ति ॥ १४० ॥

(पाठ-)

शंखशुक्लं कफात् साध्यं
नातिरुक् शुद्धशुक्लकम् ।
आताम्रपिच्छिलास्रस्रु-
दाताम्रपिटकातिरुक् ॥ १४१ ॥
अजाविट्सदृशोच्छ्राय-
कार्ष्ण्या वर्ज्यासृजाजका ॥ १४२ ॥

(वाहटे)

अजापुरीषप्रतिमो रुजावान्
सलोहितो लोहितपिच्छिलास्रः ।
विदार्य कृष्णं प्रचयोऽभ्युपैति
तच्चाजकं जातमिति व्यवस्येत् ॥ १४३ ॥

(सौश्रुते)

सिराशुक्लं मलैस्सास्रैस्तञ्जुष्टं कृष्णमण्डलम् ।
सशोददाहताम्राभिस्सिराभिरवतन्यते ॥ १४४ ॥

अनिमित्तोष्णशीताच्छघनास्रस्रुच्च तत्त्यजेत् ।
दोषैस्सास्रैस्सर्वकृष्णं[1] नीयते शुक्लरूपताम् ॥ १४५ ॥

धवलाभ्रोपलिप्ताभं निष्पावार्द्धदलाकृति ।
अतितीव्ररुजारागदाहश्वयथुपीडितम् ॥ १४६ ॥

पाकात्ययेन तच्छुक्लं वर्जयेत्तीव्रवेदनम् ।
यस्य वा लिङ्गनाशोन्तः श्यावं यद्वा सलोहितम् ॥ १४७ ॥

अत्युत्सेधावगाढं वा सास्रनाडीव्रणावृतम् ।
पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्लकम् ॥ १४८ ॥

(वाहटे)

दृष्टेः समीपे तु भवेत्तु यच्च
न चावगाढं न च संस्रवेद्धि ।
अवेदनावच्च युग्मशुक्लं
तत्सिद्धिमाप्नोति कदाचिदेव ॥ १४९ ॥

(पाड)

अजका शुद्धशुक्लं च व्रणशुक्लं त्रयं तथा ।
एतच्छिन्नं स्मृतं साध्यं द्विच्छिन्नं याप्यमुच्यते ॥ १५० ॥

(तन्त्रा-)

शुक्लकेषु यथास्वं दोषानुसारेण त्रिफलाघृतपानरक्तमोक्षणविरेचनाश्च्योतनमुखालेपनस्यतर्पणपुटपाकान् प्रयुञ्जीत । तत्र व्रणशुक्ले त्रिवृन्निर्यूहेण त्रिर्विपक्कं सर्पिः पाययेत् सिराश्च विध्येत् । दुष्टशेषञ्च पिण्डितमक्षिगमसृग्जलौकाभिरपहरेत् । मधुककाकोलीमृद्वीकोत्पलविदारीक्काथेन मञ्जिष्ठाक्षीरकाकोलीमधुकक्काथिताजक्षीरेण वा सशर्करेणाश्च्योतयेत् । शीतैश्चास्य शिरोवक्त्रं दिह्यात् सिञ्चेच ।

(संग्रहे)

दोषानुरोधात् शुक्लेषु स्निग्धा रूक्षा वरा घृतम् ।
तिक्तमूर्ध्वमसृक्स्रावो रेकस्सेकादि चेष्यते ॥ १५१ ॥

---

१· सकृत् कृष्णमिति मुद्रिताष्टाङ्गहृदयपाठः ।

त्रिफलावृद्धदारिणा पक्कं क्षतशुक्ले घृतं पिबेत् ।
सिद्धेनोत्पलकाकोलीद्राक्षायष्टिविदारिभिः ।
ससितेनाजपयसा सेचनं सलिलेन वा ॥ १५२ ॥

(वाग्भटे)

स्निग्धं तु शुक्लं सरुजमुपशमयेत् स्नेहपाननस्यजांगलरसैः । नीरुजं तर्पणपुटपाकाभ्याम् । तत्र तर्पणं मृगविष्किरपिशितं काश्मर्यसुनिषण्णकोत्पलमृणालशृङ्गाटककशेरुद्राक्षाक्षीरविदारीजीवनीयांश्च क्षीरेण पाचयेत् । तस्मान्नवनीतमुद्धृत्य चन्दनमधुशर्करानन्तानीलोत्पलकल्कैरष्टगुणेन पयसा विपक्वं पूर्ववद्योजयेत् । पुटपाकं च कुक्कुटमुद्धृतान्त्रं वेशवारीकृत्य चन्दनशारिवामधुकशर्करानन्तानीलोत्पलप्रपौण्डरीकजीवनीयकल्कैः समधुघृतैस्संसृज्य प्रागिव कल्पयेत् । द्वित्वक्छिन्नमेवं यापयेत् ।

((सङ्ग्रहे)

क्षीरेण यष्टीमधुकं क्वथितं शर्करायुतम् ।
अक्षिरोगेषु सर्वेषु परिषेकः प्रशस्यते ॥ १५३ ॥

तण्डुलीयकमूलेन क्षीरे सर्पिर्विपाचितम् ।
अक्षिरोगेषु सर्वेषु प्रशस्तं तर्पणं भवेत् ॥ १५४ ॥

(हारीते)

घननादशिफायष्टीमृणालोत्पलचन्दनैः ।
ससितैः कल्कितैः पक्कं सर्पिः क्षीरे चतुर्गुणे ॥ १५५ ॥

अभिष्यन्दमधीमन्थमक्षिपाकं निहन्ति तत् ।
अजकां व्रणशुक्लं च सेकाश्च्योतनतर्पणैः ॥ १५६ ॥

तण्डुलीयकपत्तूरनन्द्यावर्तं च तालजम् ।
हंसपादी च शुक्तिश्च दार्वी चिंचाप्रसूनकम् ॥ १५७ ॥

एतेषां स्वरसप्रस्थं यक्षदृग्गञ्जनात्तथा ।
स्तन्यं गोक्षीरसंयुक्तं घृतप्रस्थं विपाचयेत् ॥ १५८ ॥

सारिवां चन्दनं यष्टी मृणालोत्पलसैन्धवम् ।
कशेरुघननादं च तुल्यं स्यात् शर्करान्वितम् ॥ १५९ ॥

तर्पणाश्च्योतने कुर्यात् रागस्रावरुजापहम् ।
अजकं व्रणशुक्लं च अभिष्यन्दं च नाशयेत् ॥ १६० ॥

मत्स्याक्षीस्वरसे सिद्धं घृतं क्षीरचतुर्गुणम् ।
चन्दनोत्पलयष्ट्याह्वपत्तूरं तण्डुलीयकम् ॥ १६१ ॥
कल्कीकृत्य ततो योऽयं तर्पणाद्यैर्व्रणेषु च ।
अभिष्यन्देऽधिमन्थे च रागशोफाजकासु च ॥ १६२ ॥

(योग.)

तटाकशुक्तिसारश्च स्तन्यदुग्धं च तालजम् ।
नन्द्यावर्तप्रसूनाच्च शिग्रुपल्लवतो रसम् ॥ १६३ ॥
क्षीरोत्थितं च सर्पिश्च पृथक् कुडुबमावपेत् ।
दार्वीचन्दनयष्टीभिः कर्षांशैर्विपचेत् घृतम् ॥ १६४ ॥
व्रणशुक्लमभिष्यन्दमास्रावं रक्तसंभवम् ।
तर्पणेन जयेत् सर्वान् नेत्ररोगान् न संशयः ॥
विदेहाधिपतिप्रोक्तं पञ्चामृतमिदं घृतम् ॥ १६५ ॥

(वृद्ध-)

अनन्तया चन्दनेन सितया मधुकेन च ।
उत्पलैश्च मृणालैश्च विदार्याथ कशेरुकैः ॥ १६६ ॥
आजेन पयसा पिष्ट्वा सर्पिराजं विपाचयेत् ।
नस्येऽक्ष्णि तर्पणे देयं परिषेके विशेषतः ॥ १६७ ॥
तिमिरे काचरोगे च नेत्रशूले तथैव च ।
अभिष्यन्देऽधिमन्थे च व्रणशुक्रे च पूजितम् ॥ १६८ ॥
अनन्ताद्यमिदं सर्पिः सर्वनेत्रामयापहम् ॥ १६९ ॥

(तन्त्रान्तरे)

नीलोत्पलं समधुकं चन्दनं जीवकावुभौ ।
प्रपुण्डरीकं लोध्रं च मृणालं रक्तमुत्पलम् ॥ ॥ १७० ॥
कशेरुकं च कुमुदं बलामूलं सुगन्धिका ।
इन्दीवरं च तत्सर्वं पिष्ट्वा क्षीरे पचेद् घृतम् ॥ १७१ ॥
दुग्धादुन्मथ्य सञ्जातं तत्सिद्धं तर्पणादिभिः ।
व्रणशुक्राजकास्यन्दरक्तस्रावार्मशूलजित् ॥ १७२ ॥
नीलोत्पलादिकमिदं विदेहाधिपनिर्मितम् ।

मधुना तालवृन्तस्य स्वरसश्शुक्लनुत् परम् ॥ १७३ ॥
यक्षाक्षिपत्रस्वरसश्शिग्रुपत्ररसः पृथक् ।
नन्द्यावर्तप्रसूनस्य स्वरसो मधुना हितः ॥ १७४ ॥
(योग-)

अस्ररागरुजाशान्तिं यदा यस्योपलक्षयेत् ।
तदा तदञ्जनैश्शुक्लं लेखनीयैरुपाचरेत् ॥ १७५ ॥

वैडूर्यस्फटिकशंखमुक्ताविद्रुमरूप्यायस्त्रपुताम्रसीसालमनश्शिला कुक्कुटाण्डत्वक्समुद्रफेनरसाञ्जनसैन्धवैरजापयःपिष्टैर्वर्तयश्छायाशुष्काः क्षौद्रघृष्टाः प्रातस्सायं च प्रयुक्ता व्रणशुक्लनुदः ।
(सङ्ग्रहे)

वर्तयो जातिमुकुललाक्षागैरिकचन्दनैः ।
प्रसादयन्ति पित्तास्रं घ्नन्ति च क्षतशुक्लकम् ॥ १७६ ॥
दन्तैर्दन्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः ।
सशङ्खमौक्तिकाम्भोधिफेनैर्मरिचपादिकैः ॥ १७७ ॥
क्षतशुक्लमपि व्यापि दन्तवर्तिर्निरस्यति ।
तमालपत्रं गोदन्तं शंखं फेनोऽस्थि गार्दभम् ॥ १७८ ॥
ताम्रञ्च वर्तिर्मूत्रेण सर्वशुक्लविनाशनी ।
रत्नानि दन्ताः शृङ्गाणि धातवस्त्र्यूषणं त्रुटी ॥ १७९ ॥
करञ्जबीजं लशुनो व्रणसादि च भेषजम् ।
सव्रणाव्रणगम्भीरत्वक्स्थशुक्लघ्नमञ्जनम् ॥ १८० ॥
शुद्धशुक्ले निशायष्टीशारिवाशाबराम्भसा ।
सेचयेल्लोध्रपोट्टल्या कोष्णाम्भोमग्नयाथवा ॥ १८१ ॥
बृहतीमूलयष्ट्याह्वताम्रसैन्धवनागरैः ।
धात्रीफलाम्बुना पिष्टैर्लेपितं ताम्रभाजनम् ॥ १८२ ॥
यवाज्यामलकीपत्रैर्बहुशो धूपयेत्ततः ।
तत्र कुर्वीत गुळिकास्ता जलक्षौद्रपेषिताः ॥ १८३ ॥
महानीला इति ख्याताः शुद्धशुक्लहराः परम् ॥ १८४ ॥
(वाहटे)

अशाम्यति तु शुक्ले सर्वत्र पुनः पुनर्यथोक्तमेव पर्यायेण

योजयेत् । अन्तरान्तरा च रक्तं विस्रावयेत् । अभिष्यन्दप्रतिषेधश्चेक्षेत ।

(संग्रहे)

स्थिरे शुक्ले घने चास्य बहुशोपहरेदसृक् ।
शिरःकायविरेकांश्च पुटपाकांश्च भूरिशः ॥ १८५ ॥
कुर्यान्मरिचवैदेहीशिरीषफलसैन्धवैः ।
घर्षणं त्रिफलाक्वाथपीतेन लवणेन वा ॥ १८६ ॥
कुर्याद‍ञ्जनयोगौ वा श्लोकार्धगदिताविमौ ।
शंखकोलास्थिकतकद्राक्षामधुकमाक्षिकैः ॥ १८७ ॥
सुरादन्तार्णवमलैः शिरीषकुसुमान्वितैः ।
धात्रीफणिर्ज्जकरसे क्षारो लांगलिकोद्भवः ॥ १८८ ॥
त्रुषितः शोषितश्चूर्णः शुक्लहर्षणमंजनम् ।
मुद्गा वा निस्तुषाः पिष्टाः शंखक्षौद्रसमायुताः ॥ १८९ ॥
सारो मधूकान्मधुमान् मज्जा वाऽक्षात् समाक्षिका ।
गोखराश्वोष्ट्रदशनाः शंखः फेनः समुद्रजः ॥ १९० ॥
वर्तिरर्जुनतोयेन पिष्टा शुक्लविनाशिनी ।

(वाहटे)

उत्तानं चावगाढं वा कर्कशं वापि सव्रणम् ॥ १९१ ॥
शिरीषबीजमरिचापिप्पलीसैन्धवैरपि ।
शुक्लमवर्षणं कार्यं सक्षौद्रं सैन्धवेन तु ॥ १९२ ॥

(महा-)

अथोत्सादनार्थं शुद्धशुक्ले संप्रहर्षणानि विदध्यात् । त्रिफलारसेन त्र्यहं भावितेन सैन्धवेनाञ्जयेत् । तद्वत्पिप्पलीभिर्वा मरिचपिप्पलीशिरीषबीजसैन्धवैर्वा कोलास्थिकतकफलशंखद्राक्षामधुकैर्वा बलासग्रथितोक्तक्षाराञ्जनैर्वा । संप्रहर्षणाद्रागाश्रुवेदनासु सन्धावाञ्जनानि युञ्ज्यात् । शंखं ताम्रे स्तन्येन घृष्टं सघृतैर्यवैश्शमीपत्रैश्च धूपयेत् । अनेन सन्धावांजनेनांजयेत् । तद्वत्सुवर्णं रूप्यमयो वा घृष्टं सघृतैर्बदरीपत्रैः धूपितमञ्जनम् । मसूरा निस्तुषाः स्तन्यपिष्टाः । तरुणदर्भांकुरा घृतभाजं गोक्षीरं शरश्चाऽऽयसे ताम्रेण घृष्टं प्रत्यंजनं वेदनाघ्नम् । यवगोधूमजीवनीयमांसीचूर्णेन सघृतशर्करोत्कारिका

स्वेदोपनाहे प्रणीता वेदनामपनयति शुक्लञ्चोत्सादयति । तद्वदानूप-मांसवेशवारो वसापयःसर्पिर्भिर्मिश्रः सिद्धः । अथैवमुपनाहप्रचलित-स्याञ्जनम् ।

(संग्रहे)

उत्सन्नं वा सशल्यं वा शुक्लं वालादिभिर्लिखेत् ॥ १९३ ॥

(वाहटे)

ताम्रं मधुकसारो वा बीजं वाऽक्षस्य सैन्धवम् ।
मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्लशान्तये ॥ १९४ ॥
स्फटिकोपणयष्ट्याह्वशंखगोदन्तसैन्धवैः ।
सशिलाचन्दनैर्वर्तिः शुक्लघ्नी शिग्रुवारिणा ॥ १९५ ॥
समुद्रफेनदक्षांडत्वक्सिन्धूत्थैः सशंखकैः ।
शिग्रुबीजयुतैर्वर्त्तिः शुक्लादीनस्त्रवल्लिखेत् ॥ १९६ ॥
दक्षाण्डत्वक्शिलाशंखकाचसैन्धवचन्दनैः ।
तुल्यैरञ्जनयोगोयं पुष्पार्मादिविनाशनः ॥ १९७ ॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
क्रमवृद्धमिदं चूर्णं शुक्लार्मादिविलेखनम् ॥ १९८ ॥
तुरङ्गपृथुकामूलं ताम्रं च परिपेचयेत् ।
धान्याम्लेन कृता वर्त्तिर्व्रणशुक्लविनाशनी ॥ १९९ ॥

(सिद्ध-)

गुलिकारनालकलितपश्चमशुल्बांशहंसपादिकृता ।
षण्णवतिं नेत्ररुजां प्रणुदत्यचिरेण सिद्धार्था ॥ २०० ॥
श्वेतपूलासतुलसी दुर्गन्धी हंसपादिका ।
पादप्रमाणताम्राः स्युः सर्वनेत्ररुजापहाः ॥ २०१ ॥
तत्पश्चश्वेतकांबोजमूलं च समभागिकम् ।
चिञ्चापुष्परसैः पिष्टा वर्तिः स्यात्सव्रणार्मजित् ॥ २०२ ॥
ताम्राहितारसपीतकरोहिणीन्दु-
शौण्डीररसांजननदीजपुराणकांस्यैः ।
वर्तिः कृता सकलसंमितहंसपादी-
मूलैर्निहन्ति नयनामयजालमाशु ॥ २०३ ॥

त्रिनिष्कं श्वेतपूलासमूलं तुत्थञ्च निष्ककम् ।
अलाचिञ्चाफलं निष्कं निष्कं हंसपदीजटा ॥ २०४ ॥
तिन्त्रिणीपुष्पसारेण पिष्ट्वा सप्तदिनं ततः ।
वर्तिः कृताञ्जिता स्तन्यैः स्यन्दार्मव्रणशुक्लजित् ॥ २०५ ॥

श्वेतपूलासमूलत्वक्त्रिभागं तुत्थमेककम् ॥
तिन्त्रिणीपुष्पसारेण पिष्टं सप्तदिनं ततः ।
स्तन्येन घृष्टा गुळिका सर्वनेत्रामयापहा ॥ २०६ ॥

(तन्त्रान्तरे)

विपचेत् षट्पलं दार्व्या ह्याढके काञ्जिकस्य तु ।
तेन चाऽर्धावशिष्टेन श्वेतदुर्गन्धिकाजटा ॥ २०७ ॥
दशनिष्कमितं निष्कद्वयं ताम्रं च पेषयेत् ।
यावत्काञ्जिकमेष्टं(?) स्याद्वर्तिः सर्वाक्षिरोगजित् ॥ २०८ ॥
तनूनि ताम्रपत्राणि चाङ्गेरीस्वरसे क्षिपेत् ।
सप्तरात्रं धान्यराशौ स्थापयेत्तत उद्धृतात् ॥ २०९ ॥
तस्मादेकस्त्रयो यष्ट्या भागा ग्राह्यास्त्रयस्तथा ।
पृथ्वीकामूलतः पिष्ट्वा काञ्जिकेनाथ तन्मुहुः ।
छायाविशुष्का गुलिका स्यन्दार्मव्रणशुक्लजित् ॥ २१० ॥

स्फटिकगैरिकताम्ररजोञ्जनै-
रनबकं सरजश्च रथेष्टकम् (?) ।
मुनिदिनं वनितापयसा समं
जयति पिष्टमुदुम्बरलेपितम् ॥ २११ ॥
छायाविशुष्कं गुलिकीकृतं त-
दक्ष्यामयान्घोरतरानशेषान् ।
सदाहरक्तव्रणशुक्लशूलं
पिल्लाजकाम्बुस्रुतिमक्षिशूलम् ॥ २१२ ॥

(सिद्धयोगे)

सिराशुक्ले त्वदृष्टिघ्ने चिकित्सा व्रणशुक्लवत् ॥ २१३ ॥

(वाहटे)

अप्रशान्तमेवमर्मवत्साधयेत् । सप्ताक्षिकं तु रसाञ्जनं प्रतिसारणम् । सप्तमे दिवसे कुक्कुटाण्डकपालस्फटिकचन्दनमनःशिलालैरश्ववराहदशनैश्च वर्तिं कृत्वाऽञ्जयेत् । उदधिकफशंखचन्दनैः अजापयःपिष्टैर्वर्तिर्मधुघृष्टा प्रत्यञ्जनं सिराशुक्लजित् । अनुपशमे पश्यति चातुरे किञ्चिदिदमेवासकृत् कुर्वीत ।

अजकामदृष्ट्युपघातिनीं कृष्णान्तजामस्रविस्रावणैर्मधुरविरेचनैः क्षीरवस्तिभिश्च साधयेत् । सिराशुक्लवच्च शस्त्रकर्मादिविधिनेति ।

(संग्रहे)

अशान्तावर्मवच्छस्त्रमजकाख्ये च योजयेत् ॥ २१४ ॥

(वाहटे)

व्रणशुक्लाक्षिपाकाभ्यां कृष्णं भित्त्वा तु याऽजका ।
जायते दृष्टिदूरस्था तस्यास्त्वेषा क्रिया हिता ॥ २१५ ॥

(कृष्णा-)

तटाकशुक्तिमाहृत्य स्थापयेदेकवासरम् ।
रिक्ते पात्रे ततस्तस्या मांससारं मधुप्लुतम् ।
आश्च्योतयेत्ततो नश्येदजकाव्रणशुक्लकम् ॥ २१६ ॥

(तन्त्रा-)

तटाकशुक्तिजं मांसं स्तन्येन परिषेचयेत् ।
सघृतं लेपितं नेत्रे व्रणशुक्लाजकापहम् ॥ २१७ ॥

तटाकशुक्तिजे सारे सक्षीरं विपचेद् घृतम् ।
कल्कितैर्यष्टिमधुकतण्डुलीयकचन्दनैः ॥ २१८ ॥

तर्पणात् परिषेकाच्च व्रणशुक्लाजकापहम् ।
कुक्कुटाण्डकपालं च फेनकं शिग्रुबीजकम् ॥ २१९ ॥

समुद्रजिह्वा वैदेही सैन्धवं मरिचं तथा ।
जातीपुष्पञ्च तत्सर्वं पेषयेच्छिग्रुवारिणा ॥

छायाशुष्का कृता वर्तिरजकां नाशयेद् ध्रुवम् ॥ २२० ॥

तटाकशुक्तिं घननादमूलं विपाचयेत्पंचपलं पृथक् तु ।
क्षीरस्य कंसे तु तदर्धशिष्टे निर्मथ्य जातं नवनीतमत्र ॥२२१॥

संगृह्य चाक्ष्णोरुपरि प्रलिंपेत् सिद्धं घृतं वा पयसैव ताभ्याम् ।
निहन्ति दाहाश्रुविमोक्षणाक्षिसिराजकादिव्रणशुक्लपीडाः ॥ २२२ ॥

(तन्त्रान्तरे)

समधुकसितकेतकाभ्रस्वरस इहासाध्यमजकादिम् ॥ २२३ ॥

(काञ्ची-)

अजकायामसाध्यायां शुक्लेऽन्यत्र च तद्विधैः ।
वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः ॥ २२४ ॥

कुर्यात् बीभत्सतां जेतुं शुक्लस्योत्सेधसाधनम् ।
नालिकेरास्थिभल्लाततालवंशकरीरजम् ॥ २२५ ॥

भस्माद्भिः स्रावयेत्ताभिर्भावयेत्करभास्थिजम् ।
चूर्णं शुक्लेष्वसाध्येषु तद्वैवर्ण्यघ्नमञ्जनम् ॥ २२६ ॥

साध्येषु साधनायालमिदमेव च शीलितम् ।
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ॥ २२७ ॥

समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानुपूरयेत् ।
व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च ॥ २२८ ॥

सप्तरात्राद्व्रणे रूढे कृष्णभागे समे स्थिरे ।
स्नेहाञ्जनञ्च कर्तव्यं नस्यं च क्षीरसर्पिषा ॥ २२९ ॥

तथापि पुनराध्माते भेदच्छेदादिकां क्रियाम् ।
युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम् ॥ २३० ॥

(वाहटे)

ताम्रस्य षोडशांशाः स्युर्मधुकस्य चतुर्दश ।
कुष्ठस्य द्वादशांशाः स्युर्वचायाश्च दशैव तु ॥ २३१ ॥

सैन्धवस्याष्टभागास्तु पिप्पल्याश्च षडेव तु ।
रजतस्य तु चत्वारो द्वौ भागौ कनकस्य च ॥ २३२ ॥

अजाक्षीरेण सप्ताहं पिष्ट्वा ताम्रे प्रलेपयेत् ।
बदरास्थिप्रमाणेन गुळिकां कारयेद् भिषक् ॥ २३३ ॥

अभिष्यन्दमधीमन्थं व्रणशुक्लं कुकूणकम् ॥ २३४ ॥

तिमिरं पटलं काचं हन्ति कण्डूं विशेषतः ।
द्विरष्टौ ताम्ररजसो मधुकस्य चतुर्दश ॥ २३५ ॥

कुष्ठस्य द्वादशांशाः स्युः वचायाश्च दशैव तु ।
सैन्धवस्याष्टभागाश्च पिप्पल्याश्च षडेव तु ॥ २३६ ॥
अजाक्षीरेण संपिष्य ताम्रपात्रे प्रलेपयेत् ।
ताम्रादिगुलिका नाम्ना विदेहाधिपकीर्तिता ॥ २३७ ॥
अभिष्यन्दमधीमन्थं व्रणशुल्कं कुकूणकम् ।
तिमिरं पटलं काचं हन्ति पिल्लं विशेषतः ॥ २३८ ॥
चन्दनगैरिकलाक्षाजातीमुकुलानि चाम्बुपिष्टानि ।
व्रणशुक्लघ्नी वर्तिः प्रसादनी सर्वतिमिरघ्नी ॥ २३९ ॥

दार्वी वरा मधुकमम्भसि नाळिकेरे
पक्त्वाऽष्टभागपरिशिष्टरसं पुनस्तत् ।
सान्द्रं विपाच्य शशिसैन्धवमाक्षिकाढ्यं
युञ्ज्याद् व्रणार्मतिमिरादिषु पित्तजेषु ॥ २४० ॥
(वृद्धहारीते)

फलत्रयं दारुनिशां पलांशं पाचयेज्जले ।
प्रस्थे तु नाळिकेरस्य अष्टभागावशेषिते ॥ २४१ ॥
पेषयित्वा क्षिपेत्तत्र तार्क्ष्यं पीतकरोहिणीम् ।
रसाञ्जनं गैरिकञ्च कर्पूरं चन्दनं तथा ॥ २४२ ॥
कतकं पिप्पलीश्चैव अर्द्धकर्षन्तु पेषयेत् ।
मधुना सह संयोज्य सर्वनेत्रामयापहम् ॥ २४३ ॥
अर्मञ्च पित्तकोपञ्च रागकण्डूं च नाशयेत् ॥ २४४ ॥
(तन्त्रान्तरे)

इति संध्यादिरोगचिकित्सा ।

---

वातपित्तकफैस्संसर्गेण सन्निपातेन रक्तेन च जातानि षट् तिमिराणि । काचाष्षट् । षट् च लिङ्गनाशाः तथा गम्भीरहस्वाख्यपित्तविदग्धाख्यास्तथा नकुलान्धो नक्तान्ध उष्णविदग्धा अम्लविदग्धा धूमरः औपसर्गिकलिङ्गनाश इति दृष्टौ रोगाः सप्तत्रिंशतिः ॥

सिरानुसारिणि मले प्रथमं पटलं श्रिते ।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ २४५ ॥

प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।
भूतन्तु यत्नादासन्नं दूरे सूक्ष्मं च नेक्षते ॥ २४६ ॥
दूरान्तिकस्थं रूपञ्च विपर्यासेन मन्यते ।
दोषे मण्डलसंस्थाने मण्डलानीव पश्यति ॥ २४७ ॥
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते ।
दृष्टेरभ्यन्तरगते ह्रस्ववद्वृविपर्ययम् ॥ २४८ ॥
नान्तिकस्थमधस्संस्थे दूरगं नोपरिस्थिते ।
पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः ॥ २४९ ॥
प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।
तेनोर्ध्वं वीक्षते नाधस्तनुचेलावृतोपमम् ॥ २५० ॥
यथावर्णं च रज्येत दृष्टिर्हीयेत च क्रमात् ।
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ २५१ ॥
लिङ्गनाशं मलः कुर्वञ्छादयेद् दृष्टिमण्डलम् ॥ २५२ ॥
(वाहटे)

तत्र वातजे तिमिरे चलाविलारुणाभासं प्रसन्नं च मुहुरीक्षते । जालमशकादींश्च पश्यति । तस्मिन् काचीभूते दृष्टिररुणा स्यात् । स आस्यमनासिकं पश्यति । चन्द्रदीपाद्यनेकत्वं च । तस्मिन् प्रवृद्धे लिङ्गनाशभूते रजोधूमावृते च दृष्टिः स्फटिकारुणाभा हतदर्शना च । तत्रैव लिङ्गनाशे वातेन दृक्सिरासङ्कोचात् दृङ्मण्डलमन्तर्विशत्यसौ गम्भीरा नाम । पित्तजे तिमिरे विद्युत्खद्योतादिदीपितं नीलं च पश्यति । काचे तु काचनीलाभा दृष्टिरर्कपरिवेषादि ह्यसद्रूपं च पश्यति । लिङ्गनाशे भृङ्गनीला निरालोका च दृक् स्यात् । तत्रैव पित्ताद् ह्रस्वदर्शिनी ह्रस्वा च दृष्टिर्ह्रस्वाख्या । तत्रैव पीतापीताभदर्शना दृष्टिः पित्तविदग्धाख्या । कफेन तिमिरे स्निग्धं श्वेतं शङ्खकुमुदाद्याचितमिव रूपं पश्यति । काचे तु सिताभा दृष्टिः निष्प्रभेन्द्वर्काचितमिव पश्यति । तस्मिन् लिङ्गनाशभूते मूर्तो दृष्टिगतः कफः स्निग्धो दर्शननाशनः पद्मपत्रस्थजलबिन्दुरिव चलो लक्ष्यते । स उष्णे संकुचितः छायायां विसर्पी च शङ्खकुन्दाद्याभशुक्लिमा च स्यात् । रक्तजे तिमिरे रक्ताभमीक्षते । काचे तु रक्ता कृष्णा वा दृक् स्यात् ।

तादृगेव च पश्यति । लिङ्गनाशेऽपि तथैव दृष्टिः स्यात् निष्प्रभा हतदर्शना च । संसर्गसन्निपातेषु संसृष्टलिङ्गान् तिमिरादीन् विद्यात् ।

द्योतते नकुलस्येव यस्य दृङ् निचिता मलैः ।
नकुलान्धः स तत्राह्नि चित्रं पश्यति नो निशि ॥ २५३ ॥

दोषा दृशं स्थगयन्ति । दिवार्ककरस्पृष्टा विलीना लीनाः स्युः । तेनाऽह्नि सुखमीक्षते । रात्रावन्धः । स रोगो नक्तान्धः । उष्णतप्तस्य सद्यश्शीत-जलावगाहादूष्मा त्रिदोषरक्तसंयुक्तो नेत्रे याति । तेन शुक्लभागमालिन्य-महत्त्याविलदर्शनं रात्रावान्ध्यं दाहश्च स्यात् । सा दृष्टिरुष्णविदग्धाख्या । अम्लाशनात् सास्रैर्दोषैस्सकण्डूक्लेदा दृगम्लविदग्धाख्या । शोकज्वराति-तप्तस्य वाताद्यो धूमाविलां धूमदर्शिनीं दृशं कुर्युस्स धूमराख्यः । योल्पसत्वः सहसा रूपमद्भुतं भास्वरं वा पश्यति तस्य क्रुद्धा वाताद्या नयनं गतास्तेजस्संशोष्य दृष्टिं नष्टदर्शनां वैडूर्यवर्णामन्यथां कुर्युः । स लिङ्गनाशः औपसर्गिकाख्यः । तत्र वर्जयेत् विना कफाल्लिङ्गनाशात् गम्भीरां ह्रस्वजामपि । षट् काचा नकुलान्धश्च याप्याः । शेषांस्तु साधयेत् ।

द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥
तिमिरं काचतां याति काचोप्यान्ध्यमुपेक्षया ।
नेत्ररोगेष्वतो घोरं तिमिरं साधयेद्द्रुतम् ॥ २५४ ॥
(वाहटे)

चित्रकमूलत्रिफलापटोलयवसाधितं पिबेदम्बु ।
सघृतं निशि चक्षुष्यं तिमिरं च विशेषतो हन्ति ॥ २५५ ॥
(भिषङ्मुष्टौ)

सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ २५६ ॥
(वाहटे)

सदावलिह्यात्त्रिफलां विचूर्णितां
घृतप्रगाढां तिमिरेथ पित्तजे ।
समीरजे तैलयुतां कफात्मके
मधुप्रगाढां विदधीत युक्तितः ॥ २५७ ॥
(सुश्रुतात्)

गवां शकृत्क्वाथविपक्वमुत्तमं
हितं तु तैलं तिमिरेषु नावनम् ।
हितं घृतं केवलमेव पैत्तिके
ह्यजाविकं यन्मधुरैर्विपाचितम् ॥ २५८ ॥

(पाठश्रु-)

शुक्रैरण्डान्मूलमथोग्रां शतपुष्पां
पुष्पोद्भूतं यच्च बृहत्यास्तगरश्च ।
पक्वं तैलं तैस्सपयस्कैस्तिमिरघ्नं
नस्यश्रेष्ठं व्याधिषु चोर्ध्वेष्वपरेषु ॥ २५९ ॥

(योगशतके वाहटे च)

तिलतैलमक्षतैलं भृंगस्वरसोऽसनाच्च निर्यूहः ।
आयसपात्रविपक्वं करोति दृष्टेर्बलं नस्यम् ॥ २६० ॥

(वाहटे सङ्ग्रहे श्र)

तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषितै ।
तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ २६१ ॥
प्रपौण्डरीककाकोळीपिप्पलीलोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ २६२ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।
द्राक्षाचन्दनमञ्जिष्ठाकाकोळीद्वयसैन्धवैः ॥ २६३ ॥
सिताशतावरीमेदापुण्ड्राह्वमधुकोत्पलैः ।
पचेज्जीर्णघृतप्रस्थं समक्षीरं पिचून्मितैः ॥ २६४ ॥
हन्ति तच्छुक्रतिमिररक्तराजीशिरोरुजः ।
पटोलनिम्बकटुकादार्वीसेव्यवरावृषम् ॥ २६५ ॥
सधन्वयासत्रायन्तीपर्पटं पालिकं पृथक् ।
प्रस्थमामलकानां च क्वाथयेदर्मणेऽम्भसः ॥ २६६ ॥
तदाढकेर्द्धपलिकैः पिष्टैः प्रस्थं घृतात्पचेत् ।
मुस्ताभूनिम्बयष्ट्याह्वकुटचोदीच्यचन्दनैः ॥ २६७ ॥

सव्योषचव्यैस्तत्सर्पिर्घ्राणकर्णाक्षिरोगजित् ।
विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठजित् ॥ २६८ ॥
विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णविदाहजित् ।
त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ॥ २६९ ॥
तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ।
अर्द्धप्रस्थो घृतात् सिद्धः सितया माक्षिकेण वा ॥ २७० ॥
युक्तं पिबेत्तत् तिमिरी तद्युक्तं वा वरारसम् ।
यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ २७१ ॥
पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत् समैः ।
अजाक्षीरवराधात्रीमार्कवस्वरसैः पृथक् ॥ २७२ ॥
महात्रैफलमित्येतत् परं दृष्टिविकारजित् ॥ २७३ ॥

(वाहटे)

त्रिफलाक्काथकल्केन सपयस्कं भृतं घृतम् ।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ २७४ ॥

(सिद्धसारे-)

त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ।
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम् ॥ २७५ ॥
मासमेकं हिताहारः पिबन्नामलकोदकम् ।
सौपर्णं लभते चक्षुरित्याह भगवान्निमिः ॥ २७६ ॥
प्रातर्भक्तस्य वा पूर्वमद्यात् पथ्यां पृथक् पृथक् ।
मृद्वीकाशर्कराक्षौद्रैस्सततं तिमिरातुरः ॥ २७७ ॥
मांसीत्रिजातकायःकुङ्कुमनीलोत्पलाभयातुत्थैः
सितकाचशङ्खफेनकमरिचाञ्जनपिप्पलीमधुकैः ॥ २७८ ॥
चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद्युगळमक्ष्णोः ।
तिमिरार्मरक्तराजीकण्डूकाचादिशममिच्छन् ॥ २७९ ॥
मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम् ।
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित् ॥ २८० ॥
निर्दग्धं बदराङ्गारैस्तुत्थं चेत्थं निषेचितम् ॥ २८१ ॥

क्रमादजापयःसर्पिःक्षौद्रं तस्मात्पलद्वयम् ।
कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ॥ २८२ ॥
पट्टुलोध्रनिशापथ्याकणैलाञ्जनफेनकैः ।
युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम् ॥ २८३ ॥
हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः ।
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ॥ २८४ ॥

गोमूत्रे छगणरसेऽम्लकाञ्चिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तद् कुर्याद् गरुडसमं नरस्य चक्षुः ॥ २८५ ॥

श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः ।
यष्टीरसं च यत् सीसं सप्तकृत्वः पृथक् पृथक् ॥ २८६ ॥

तप्तं तप्तं पायितं तच्छलाका
नेत्रे युक्ता साञ्जनानञ्जना वा ।
तैमिर्यार्मस्रावपैच्छिल्यपैल्लं
कण्डूं जाड्यं रक्तराजीं च हन्ति ॥ २८७ ॥

रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् ।
ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥ २८८ ॥

मरिचानि दशार्धपिचु-
स्ताप्यात्तुत्थात्पलं पिचुर्यष्ट्याः ।
क्षीरार्द्रदग्धमञ्जन-
मतिसाराख्यमुत्तमं तिमिरे ॥ २८९ ॥

अक्षबीजमरिचामलकत्वक्-
तुत्थयाष्टिमधुकैः जलपिष्टैः ।
छाययैव गुलिकाः परिशुष्का
नाशयन्ति तिमिराण्यचिरेण ॥ २९० ॥

मरिचामलकजलोद्भवतुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः ।
षण्माक्षिक इति योगस्तिमिरार्मक्लेदकाचकण्डूहन्ता ॥ २९१ ॥

कृष्णं सर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान् ।
क्षीरकुम्भे त्रिसप्ताहं क्लेदयित्वा प्रमन्थयेत् ॥ २९२ ॥

तत्र यन्नवनीतं स्यात् पुष्णीयात्तेन कुक्कुटम् ।
अन्धस्तस्य पुरीषेण प्रेक्षते ध्रुवमञ्जनात् ॥ २९३ ॥

कृष्णसर्पवसा शङ्खः कतकात्फलमञ्जनम् ।
रसक्रियेयमचिरादन्धानां दर्शनप्रदा ॥ २९४ ॥

(२३१७)

मनोह्वा सैन्धवं व्योषं शङ्खनाभीरसाञ्जनम् ।
कतकं चन्दनं फेनो विळङ्गानि सितोपला ॥ २९५ ॥

कुक्कुटाण्डकपालं च जलपिष्टा सुखावती ।
हन्त्येषा मधुना घृष्टा काचतैमिर्यशुक्लकान् ॥ २९६ ॥

(सङ्ग्रहे)

मधुकमरिचपिप्पली सलोध्रा
तरुरजनी त्रिफला हिमाम्बुपिष्टा ।
तिमिरपटलकाचकण्डुहन्त्री
विमलकरी विमलेति विश्रुता सा ॥ २९७ ॥

(शर्वत्रातः)

ऊषणमेकं पिष्ट्वा दशाद्रिकन्याश्च पुष्पाणि ।
तिमिरेञ्जयेदथैकं मरिचाढ्यं द्रोणपुष्पि पुष्पशतम्(?)॥२९८॥

(सिद्धयोगे)

मरिचामलकैः करञ्जबीजैः
क्रमवृद्धोत्तरभृङ्गतोयपिष्टैः ।
तिमिरं पटलं निहन्ति काचं
सुकृतं कर्म यथाकृतं कृतघ्ने ॥ २९९ ॥

(तन्त्रान्तरे)

लिकुचपक्वफलोदकसंस्थितं
मरिचमर्ककरैरथ शोषितम् ।
दृषदि वारिनिघृष्टमिदं नृणां
तिमिरकाचनिशान्ध्यजिदञ्जनात् ॥ ३०० ॥

(कुत्रचित्

नीलोत्पलपत्रशतं मुद्गशतं यवशतं च निस्तुषकम् ।
मालत्याः कुसुमशतं पिप्पल्याः तण्डुलशतं च पञ्चशती ॥३०१॥
एषा वर्त्तिर्लिखिता यवनैः (कुहचन) शिलास्तम्भे ।
अन्धमनन्धं कुरुते यस्य च नोत्पाटिते नेत्रे ॥ ३०२ ॥
शतमुत्पलपत्राणां मुद्गानां तावदेव च ।
पिप्पलीतण्डुलशतमेभिः सौवीरकं समम् ॥ ३०३ ॥
एतच्छ्लक्ष्णीकृतं चूर्णं वृद्धानां तिमिरापहम् ।
अशीतितिलपुष्पाणि मरिचानि च षोडश ॥ ३०४ ॥
पञ्चाशज्जातिपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
इयं चन्द्रप्रभा नाम वर्त्तिस्तिमिरनाशिनी ।
क्लेदकण्डूप्रशमनी मलकाचविनाशिनी ॥ ३०५ ॥

(एतत् त्रयं चन्द्रटात्)

चिञ्चादलस्वरसपिष्टमुरुञ्जिबीजं
कंसे प्रलिप्य परिशोष्य तदातपेन ।
तैलं ततः स्रुतमिदं शशिपादभागं
योज्यं दृढार्मतिमिरे तिलमात्रमाक्ष्णि ॥ ३०६ ॥

शशिटङ्कणलवणोषण-
कणालिकास्तूर्ध्ववृद्धमलिसलिले ।
पिष्टं कांस्यनिघृष्टं
तिमिरार्ज्जुनकाचपटलघ्नम् ॥ ३०७ ॥

नागपारदधात्रीन्दुमत्नाज्यकणसैन्धवैः ।
रसाञ्जनसिताक्षौद्रैर्योगो नेत्रामयापहः ॥ ३०८ ॥

(काश्वी-)

पुष्पाख्यतार्क्ष्यजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैश्च माक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्ज्जुनवर्त्मरोगान् ॥ ३०९ ॥

शशिकणमरिचकपालं
पिष्ट्वा भृङ्गासवेन सक्षौद्रम् ।
मुनिदिनकांस्यनिघृष्टं
तिमिरार्जुनपटलकाचघ्नम् ॥ ३१० ॥

वेदाग्निभूतवसुधातुरसाश्च सिन्धु-
कृष्णोग्रताम्रमधुकाह्वयकुष्ठभागाः ।
शुल्बोषिताजपयसा मुनिवारपिष्टाः
स्यन्दाधिमन्थतिमिरादिहरा च वर्त्तिः ॥ ३११ ॥

वारणसारथिविष्णोर्मातुलगोसर्पकचभसितैः ।
पिष्टैस्तरुपोटरसे वर्त्तिर्नयनामयघ्नी द्राक् ॥ ३१२ ॥

(तन्त्रा-)

भूभुजगमष्टनिष्कं तुत्थं निष्कद्वयं भसितशुक्लम् ।
निष्कं च मरिचमेतत् तिमिरघ्नं निम्बतैलपरिपिष्टम् ॥ ३१३ ॥

(वृद्ध-)

फलत्रयं चापि कटुत्रयं च
ज्योतिष्ककारञ्जविलङ्गबीजम् ।
प्रपौण्डरीकं मधुकं सताम्रं
सिन्धूद्भवं च स्फटिकं सशङ्खम् ॥ ३१४ ॥

वचाञ्जनं गैरिकचन्दनं च
द्राक्षा निशा शाबरलोध्रकं च ।
तुत्थं च पीताह्वयरोहिणी च
पेष्यं करञ्जस्वरसेन सर्वम् ॥ ३१५ ॥

तुत्थादिभागाद् द्विगुणो वचादिः
प्रपुण्डरीकादिगणस्त्रिभागः ।
शेषश्चतुर्भाग इयं निहन्या-
द्वर्त्तिः सुनेत्री सकलाक्षिरोगान् ॥ ३२६ ॥

काचं सपुष्पं पटलं व्रणं च
कोथं च कण्डूं तिमिरं कुकूणम् ।

स्रावं च दाहं च निशान्धतां च
तथाधिमांसं च निहन्ति शीघ्रम् ॥ ३१७ ॥

कतकसैन्धवतुत्थकटुत्रिक-
स्फटिकताम्रमयो हिमरोहिणी ।
उरगपारदटङ्कणमञ्जनं
त्रिफलया मधुकेन च संयुतम् ।
करजवल्करसेन सुपेषितं
गरुडदृष्टिसमां कुरुते दृशम् ॥ ३१८ ॥

त्रिफला त्रिकटूनि विलङ्गवचा-
हरितालरसाञ्जनसल्लवणम् ।
शबराह्वयताम्ररजः स्फटिकं
रजनीद्वयरोचनवारिचरम् ॥ ३१९ ॥

तुटिचन्दनताप्यतरुक्षतजं
कतकं मधुकोदधिफेनयुतम् ।
शशिपीतकरोहिणिसीसरुजा-
गिरिशृङ्गगवाक्षिकगोदशनम् ॥ ३२० ॥

क्षुररेण्वणुमौक्तिकतुत्थवरी-
परिकूर्मवराटककान्तमुखम् ।
अमृताक्ष्यळिनिम्बकरञ्जरसैः
सुरसाञ्जनजातिमुरुङ्गिरसैः ॥ ३२१ ॥

सुनिषण्णकबीजकपूररसैः
सुरया पयसा च गवां विहिता ।
दिनषट्कद्वयतो मधुतैलघृतै-
र्द्रववर्तिरियं नळमध्यगता ॥ ३२२ ॥

तिमिरे पटलेर्मणि काचगदे
व्रणशुक्लगदेऽध्यजके महति ।
निमिना विहिता किल संयमिना
नयनामयसप्ततिनाशकरी ॥ ३२३ ॥

त्रिफला त्रिकटूनि विलङ्गवचा-
हरितालरसाञ्जनसल्लवणम् ।
शबराह्वयताम्ररजःस्फटिकं
सुरसाञ्जनिकानवजातिरसैः ॥ ३२४ ॥
अथ मार्कवबीजकपूररसैः
सुरया पयसा च गवां मधुना ।
घृततोऽपि च सप्तदिनानि कृता
द्रववर्त्तिरियं नळमध्यगता ॥ ३२५ ॥

तिमिरे पटल इत्यादि पूर्ववत् ।

(तन्त्रा-)

दोषानुरोधेन च नैकशस्तं
स्नेहास्रविस्रावणरेकनस्यैः ।
उपाचरेदञ्जनमूर्धवस्ति-
वस्तिक्रियातर्पणलेपसेकैः ॥ ३२६ ॥

सामान्यं साधनमिदं प्रतिदोषमतःशृणु ।
वातजे तिमिरे तत्र दशमूलाम्भसा घृतम् ॥ ३२७ ॥
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ।
त्रिफलापञ्चमूलानां कषायं क्षीरसंयुतम् ॥ ३२८ ॥
एरण्डतैलसंयुक्तं योजयेत विरेचनम् ।
समूलजालजीवन्तीतुलां द्रोणेम्भसः पचेत् ॥ ३२९ ॥
अष्टभागस्थिते तस्मिन् तैलप्रस्थं पयःसमम् ।
बलात्रितयजीवन्तीवरीमूलैः पलोन्मितैः ॥ ३३० ॥
यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ।
लोह एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ॥ ३३१ ॥
वातपित्तामयान् हन्ति तद्विशेषादृगाशयान् ।
केशास्यकन्धरास्कन्धपुष्टिलावण्यकान्तिकृत् ॥ ३३२ ॥
सितैरण्डजडासिंहीफलदारुवचानतैः ।
शताह्वाबिल्वमूलैश्च तैलं पक्वं पयोन्वितम् ॥ ३३३ ॥

नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्त्तिजित् ।
वातपीनसवच्चात्र निरूहं सानुवासनम् ॥ ३३४ ॥
पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ।
विपाचितं पाययित्वा स्निग्धस्य व्यधयेत् सिराम् ॥ ३३५ ॥
शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचनम् ॥ ३३६ ॥

(वाहटे)

स्तन्यं वा पद्मकोशीरक्षीरवृक्षाङ्कुरैः शृतम् ।
नस्यं चाज्यं शृतं क्षीरं जीवनीयसितोत्पलैः ॥ ३३७ ॥

(सङ्कहे)

सौवीराञ्जनतुत्थक-
भृङ्गीधात्रीफलस्फटिककर्पूरम् ।
पञ्चांशं पञ्चांशं
त्र्यंशमथैकांशमञ्जनं तिमिरघ्नम् ॥ ३३८ ॥

श्लेष्मोद्भवेऽमृताक्वाथवराकणशृतं घृतम् ।
विध्येत् सिरां पीतवतो दद्याच्चानुविरेचनम् ॥ ३३९ ॥
क्वाथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम् ।

(वाहटे)

मनोह्वाशङ्खसिन्धूत्थमरिचैस्तिमिरं जयेत् ।
वर्त्तिःप्रगाढमप्याशु शुक्रपिल्लामयार्म च ॥ ३४० ॥

(सङ्ग्रहे)

रक्तजे पित्तवत्सिद्धिः शीतैश्चास्रं प्रसादयेत् ॥ ३४१ ॥

*लाक्षयानळदलोध्रयष्टिका-
शङ्खताम्रहिमपद्मपद्मकैः ।
सोत्पलैश्छगलदुग्धवर्त्तितै-
रस्रजं तिमिरमाशु नश्यति ॥ ३४२ ॥

संसर्गसन्निपातोत्थे यथादोषोदयं क्रिया ।
नतनीलोत्पलानन्तायष्ट्याह्वसुनिषण्णकैः ॥ ३४३ ॥
साधितं नावने तैलं शिरोवस्तौ च शस्यते ।
दद्यादुशीरनिर्यूहे चूर्णितं कणसैन्धवम् ॥ ३४४ ॥

---

* द्राक्षया इति मुद्रिताष्टाङ्गहृदयपाठः तथा यष्टिभिः इत्यपि ।

तच्छ्रुतं सघृतं भूयः पचेत् क्षौद्रं क्षिपेद्घने ।
शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥ ३४५ ॥

काचेष्वेषा क्रिया मुक्त्वा सिरां यन्त्रनिपीडनात् ।
आन्ध्याय स्युर्मला दद्यात् स्राव्ये त्वस्रे जलौकसः ॥ ३४६ ॥

गुळः फेनोऽञ्जनं कृष्णा मरिचं कुङ्कुमाद्रजः ।
रसक्रियेयं सक्षौद्रा काचयापनमञ्जनम् ॥ ३४७ ॥

शिलासैन्धवकासीसशङ्खव्योपरसाञ्जनैः ।
रसक्रियेयं सक्षौद्रा काचयापनमञ्जनम् ॥ ३४८ ॥

नकुलान्धे त्रिदोषोत्थतैमिर्यविहितो विधिः ।
रसक्रिया घृतक्षौद्रगोमयस्वरसद्रुतैः ॥ ३४९ ॥

तार्क्ष्यगैरिकतालीसैर्निशान्धे हितमञ्जनम् ।
दध्ना विघृष्टं मरिचं रात्र्यन्धेऽञ्जनमुत्तमम् ॥ ३५० ॥

संनिवेश्य यकृन्मध्ये पिप्पलीरदहन् पचेत् ।
ताः शुष्का मधुना घृष्टा निशान्धे श्रेष्ठमञ्जनम् ॥ ३५१ ॥

घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत् ।
सिद्धं घृतं कुम्भयोनेः पत्रैः पाने च पूजितम् ॥ ३५२ ॥
(वाग्भटे)

क्षौद्रजातीरसाभ्यां वा द्विहरिद्रारसाञ्जनैः ।
अजामूत्रेण वा कौन्तीकृष्णास्रोतोजसैन्धवैः ॥ ३५३ ॥

गोशकृद्रसपिष्टैर्वा द्विनिशापिप्पलीयुतैः ।
कालानुसारीतालीसपत्रयष्ट्याह्वनागरैः ॥ ३५४ ॥
(सङ्ग्रहे)

सिन्धूत्थतैलं स्तनजोषणं च
शार्ङ्गेष्टपत्रस्वरसेन घृष्टम् ।
ताम्रेण नक्तान्ध्यमिदं निहन्या-
न्निम्बस्य बीजं मधुनाञ्जनं वा ॥ ३५५ ॥
(योगामृते)

सतैलं द्रोणपुष्पाम्बु कृष्णा वा सशकृद्रसा ।
कर्णविड्वाथ सक्षौद्रमञ्जनात् क्षणदान्ध्यनुत् ॥ ३५६ ॥

(नारायणीये)

मुनितरुदळरसयुक्तं
दिनकरकरशोषितं मरिचम् ।
पुनरपि तेन विघृष्टं
प्रणुदति दोषान्ध्यमञ्जनं तीव्रम् ॥ ३५७ ॥

तद्वच्छकृद्रसाढ्या वैदेही पित्तमाजं वा ।
आजौ यकृत्प्लिहानौ खादेज्जम्ब्वथसा दग्ध्वा ॥ ३५८ ॥

(सिद्धयोगे)

खादेद्यकृत्प्लिहानौ च माहिषौ तैलसर्पिषा ॥ ३५९ ॥

(वाहटे)

गोदन्तमथ पिप्पल्यः सैन्धवं गैरिकं तथा ।
एतैः कृत्वानु गुळिका नक्तमान्ध्यस्य भेषजम् ॥ ३६० ॥

(वृद्ध-)

कृष्णा वा गोशकृद्रसेति ।

(सिद्धसारे)

धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।
स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ॥ ३६१ ॥
गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽञ्जनम् ।
स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ ३६२ ॥
तर्पणं क्षीरसर्पिः स्यादशाम्यति सिराव्यधः ॥ ३६३ ॥

सूर्योपरागानलविद्युदादि-
विलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादि योज्यं
तथाञ्जनं हेमघृतेन घृष्टम् ॥ ३६४ ॥

चिन्ताभिघातभीशोकरौक्ष्यात्सोत्कुटकासनात् ॥ ३६५ ॥

विरेकनस्यवमथुपुटपाकादिविभ्रमात् ।
विदग्धाहारवमनात् क्षुत्तृष्णादिविधारणात् ॥ ३६६ ॥
अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत् ।
यथास्वं तत्र युञ्जीत दोषादीन् वीक्ष्य भेषजम् ॥ ३६७ ॥
(वाग्भटे)

तमालतुटिकुङ्कुमान्यसितमुत्पलं पिप्पली-
सिताञ्जनमयोरजो मरिचकाकमाचीत्वचः ।
सयष्टिमधुकाञ्जनान्युदधिफेनमक्ष्यामये-
ष्वनुत्तममतोऽञ्जनं विमलमाशु तैमिर्यहृत् ॥ ३६८ ॥

लिङ्गनाशे नीलिका पटलमान्ध्यमिति पर्यायाः ।
(सङ्ग्रहे)

विध्येत् सुजातं निष्प्रेक्ष्यं लिङ्गनाशं कफोद्भवम् ।
आवर्तक्यादिभिष्षड्भिर्विवर्जितमुपद्रवैः ॥ ३६९ ॥
सोऽसञ्जातो हि विषमो दधिमस्तुनिभस्तनुः ।
शलाकयावकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ ३७० ॥
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत् पुनः ।
श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवैश्चिरात् ॥ ३७१ ॥
श्लैष्मिको लिङ्गनाशो हि सितत्वाच्छ्लेष्मणः सितः ।
तस्यान्यदोषाभिभवात् भवत्यानीलता गदे ॥ ३७२ ॥
(वाग्भटे)

तत्र श्वेतारुणावर्तवदनवस्थिता दृष्टिरावर्तकी । अर्कक्षीरलेशेनेव कूर्चिकापिण्डेनेव चाऽऽचिता शर्करा । शालिशूकाभराज्यावृता राजीमती । छिन्नविषमदग्धाभा सरुक् छिन्नांशुका । कांस्यसमच्छाया चन्द्रकसंस्थाना चन्द्रकी । नैकवर्णा छत्रनिभा छत्रकी । ता न विध्येत् ।

न विध्येदसिराहाणां न तृट्पीनसकासिनाम् ।
नाजीर्णभीरुवमितशिरःकर्णाक्षिशूलिनाम् ।
नात्युष्णशीतवाताभ्रे नासंपूर्णां च नीलिकाम् ॥ ३७३ ॥
(संग्रहे)

अथ साधारणे काले शुद्धसम्भोजितात्मनः ।
देशे प्रकाशे पूर्वाह्ने भिषग् जानूच्चपीठगः ॥ ३७४ ॥

यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।
अङ्गुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ ३७५ ॥

स्वां नासां प्रेक्षमाणस्य निष्कम्पं मूर्ध्नि धारिते ।
कृष्णादर्धाङ्गुलं मुक्त्वा तदर्धार्द्धमपाङ्गतः ॥ ३७६ ॥

तर्जनीमध्यमाङ्गुष्ठैः शलाकां निश्चलां धृताम् ।
दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमामन्थयन्निव ॥ ३७७ ॥

सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।
विध्येत् सुविद्धे शब्दः स्यादरुक् चाम्बुलवस्रुतिः ॥ ३७८ ॥

सान्त्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।
शलाकायास्ततोऽग्रेण निर्लिखेद्दृष्टिमण्डलम् ॥ ३७९ ॥

अबाधमानः शनकैर्नासां प्रतिनुदंस्ततः ।
उच्छिङ्घनाच्चापहरेद् दृष्टिमण्डलगं कफम् ॥ ३८० ॥

स्थिरे दोषे चले वापि स्वेदयेदाक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ।
घृताप्लुतं पिचुं दत्त्वा बद्धाक्षं शाययेत्ततः ॥ ३८१ ॥

विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ।
निवाते शयनेऽभ्यक्तशिरःपादं हिते रतम् ॥ ३८२ ॥

(वाग्भटे)

यथाशक्ति चैनमुपवासयेत् । उद्गारक्षवथुकासनिष्ठीवनोत्क्षेपणानि त्र्यहं परिहरेत् । स्नानाम्बुपानदन्तधावनाधोमुखावस्थानानि सप्ताहम् । स्नेहविधिं चेक्षेत ।

(संग्रहे)

शक्तितो लङ्घयेत्सेको रुजि कोष्णेन सर्पिषा ।
सव्योषामलकं वाद्यमश्नीयाद् सघृतं द्रवम् ॥
विलेपीं वा त्र्यहाच्चास्य काथैर्मुक्ताक्षि सेचयेत् ॥ ३८३ ॥

वातघ्नैस्सप्तमे त्वह्नि सर्वथैवाक्षि मोचयेत् ॥ ३८४ ॥

(वाहटे)

तृतीये चाह्नि मुक्त्वाक्षि परिषेचयेदेरण्डपल्लवशृतेन दुग्धोष्णेन दुग्धेन । जीवनीयैर्वा सिद्धेन पयसा हविषा वा । तद्वल्लघुना पञ्चमूलेन । ततः पूर्ववद् बध्नीयात् । ततः प्रभृत्येवमेव प्रत्यहमासप्ताहम् । सप्तमे तु दिवसे सर्वथा मोक्षयेत् । दशमे वा भोजयेच्चैनं व्योषामलकयुक्तं द्रवमीषत्स्नेहलवणं वाव्यमुष्णोदकद्वितीयं विलेपीं वा । एवमाचरतो रुजारागादयो नानुवर्तन्ते ॥

(संग्रहे

यन्त्रणामनुरुध्येत दृष्टेरास्थैर्यलाभतः ।
रूपाणि सूक्ष्मदीप्ताणि सहसा नावलोकयेत् ॥ ३८५ ॥
शोफरागरुजादीनामधिमन्थस्य चोद्भवः ।
अहितैर्बेधदोषाच्च यथास्वं तानुपाचरेत् ॥ ३८६ ॥
कल्किताः सघृता दूर्वायवगैरिकशारिबाः ।
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये ॥ ३८७ ॥
लोध्रसैन्धवमृद्वीकामधुकैश्छागलं पयः ।
श्रुतमाश्च्योतनं योज्यं रुजारागविनाशनम् ॥ ३८८ ॥
सिरां तथानुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ।
मन्थोक्तां च क्रियां कुर्याद् व्यधे रूढेऽञ्जनं मृदु ॥ ३८९ ॥

(वाहटे)

वेध्येक्षिण कार्ये स्वेदादौ नियमोऽयं विधीयते ।
स्वेददाहप्रतीमर्शान् सद्यो विद्धे तु सेचनम् ॥ ३९० ॥
अवपीडं तृतीयेह्नि युञ्ज्यात्तद्वज्जलौकसः ।
सप्ताहान्ते सिरामोक्षं विरेकं बस्तिकर्म च ॥ ३९१ ॥

(सङ्ग्रहे)

आढकीमूलमरिचहरितालरसाञ्जनैः ।
विद्धेक्षिण सगुला वर्तिर्योज्या दिव्याम्बुपेषिता ॥ ३९२ ॥

(वाहटे)

व्रणवच्चाक्षिरोगेषु भोज्याभोज्यानि निर्दिशेत् ।

अविधारितवेगस्य भजतोऽञ्जननावनम् ।
त्यजतः क्रोधशोकौ च तिमिरं नाश्नुतेऽन्तरम् ॥ ३९३ ॥

त्रिफलामश्नतो रात्रौ संस्कृतं पिबतो घृतम् ।
भुक्त्वा चापिबतस्तोयं तिमिरं लघु शाम्यति ॥ ३९४ ॥

सुष्टु भव्यं सुकन्यां च स्कन्दं च्यवनमश्विनौ ।
षडेतान् यः स्मरेन्नित्यं तस्य चक्षुर्न हीयते ॥ ३९५ ॥
(तन्त्रा०)

इति दृष्टिरोगचिकित्सा ।

## अथ सर्वाक्षिरोगचिकित्सा ।

वातपित्तश्लेष्मरक्तैश्चत्वारोभिष्यन्दाश्चत्वारोधिमन्थाः, तथा हताधिमन्थान्यतोवातवातपर्यायाः शुष्काक्षिपाकसशोफाल्पशोफाक्षिपाकात्ययाम्लोषिता इति षोडश सर्वाक्षिगताः । तत्र वातजेभिष्यन्देऽल्पशोफता शङ्खादितोदः शुष्काल्पदूषिकता शीताच्छस्रुतिः स्निग्धोष्णोपशयश्च भवन्ति । स चोपेक्षितः सन् अधिमन्थो भवेदतितीव्रवेदनः सकर्णनादभ्रमः । सोऽप्यपचाराद्धताधिमन्थो भवेत् । तत्रानेकरूपा वेदना दृष्टिहा व्रणश्च स्यात् । यदा वायुर्मन्यादिषु तीव्रवेदनां कुर्वन् शोफरागरहितमक्षि साश्रु सङ्कोचयति , स रोगोऽन्यतोवाताख्यः । अस्य तोदरुजादिकं कुर्वन् वातो जिह्मसूत्रं वाक्षि कुर्यात् । स वातपर्ययः । पित्तजोभिष्यन्दः सदाहधूमायनं सशोफरागः पीतोष्णाश्रुः क्षारोक्षितव्रणसमाक्षश्च स्यात् । तज्जेधिमन्थे ज्वलदङ्गारकीर्णाभं यकृत्पिण्डाभमक्षि स्यात् । कफाभिष्यन्दे तु जाड्यातिशोफकण्डूनिद्रानन्नश्रद्धाः सान्द्रसितबहुदूषिकाश्रुता च भवति । तज्जेधिमन्थे कृष्णापनतिः शुक्लभावोन्नतिः प्रसेकः पांसुपूर्णाभाक्षता च । रक्तस्यन्दे रक्ताश्रुदूषिका शुक्लभागरक्तता पित्तस्यन्दलिङ्गं च । तज्जेधिमन्थे नेत्रं बन्धूकाभं स्पर्शासहमसृक्प्रभारिष्टफलाभकृष्णभागमग्न्याभदर्शनमुत्पाटनसमानरुक् च स्यात् ।

अधिमन्था यथास्वं च सर्वे स्यन्दाधिकव्यथाः ।
शङ्खदन्तकपोलेषु कपाले चातिरुक्कराः ॥ ३९६ ॥

वातपित्ताभ्यां घर्षतोदकृच्छ्रोन्मीलनिमीलनशीतेच्छाशूलपाकयुक्तमक्षि स्यात्। स शुष्काक्षिपाकाख्यः।

सान्नैर्दोषैः सशोफोऽक्षिपाकः स्यात्। तत्र शोफः सरुग्दाहः पक्वोदुम्बराभशुक्लभागत्वमनवस्थितशीतोष्णपिच्छिलविशदाच्छघनं बहु चाश्रु स्यात्। तल्लिङ्गोऽल्पशोफाक्षिपाकस्तत्र शोफस्याल्पता स्यात्। अक्षिपाकात्यये शोफदाहकलुषाश्रुता कफदिग्धकृष्णभागता सक्लेदरागशुक्लतानवस्थितवेदना च। पित्तरक्तोल्बणैर्दोषैरम्लतां नीतोन्नसारो नेत्रं प्राप्य श्यावलोहितं सतोददाहपाकमाविलदर्शनं च कुर्यात् अयमम्लोषितः। इत्युक्ता गदाः षोडश सर्वगाः॥

हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत्।<br>
वातोद्भूतः पञ्चरात्रेण दृष्टिं<br>
सप्ताहेन श्लेष्मजातोधिमन्थः।<br>
रक्तोत्पन्नो हन्ति तद्वात्रिरात्रा<br>
न्मिथ्याचारात् पैत्तिकः सद्य एव॥ ३९७॥

प्राग्रूप एव स्यन्देषु तीक्ष्णगण्डूषनावनम्।<br>
कारयेदुपवासं च कोपादन्यत्र वातजात्॥ ३९८॥<br>
दाहोपदेहरागाश्रुशोफशान्त्यै बिडालकम्।

कुर्यात् सर्वत्र पत्रैलामरिचस्वर्णगैरिकैः।<br>
सरसाञ्जनयष्ट्याह्वनतचन्दनसैन्धवैः॥ ३९९॥

(धाइटे)

रसाञ्जनाभयादार्वीगैरिकैः सैन्धवान्वितैः।<br>
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः॥ ४००॥

(सिद्धसारे)

हरीतकीसैन्धवताक्ष्र्यशैलैः<br>
सगैरिकैः स्वच्छजलप्रपिष्टैः।<br>
बहिः प्रलेपं नयनस्य कुर्यात्<br>
सर्वाक्षिरोगोपशमाय मर्त्यः॥ ४०१॥

(वररुचेः अमितप्रभीये)

ताम्बूलशिग्रुकरवीरशिरीषदन्ती-
श्यामादधित्थसुरसासुमनार्जकानाम् ।
प्रत्येकशो मधुयुतः स्वरसोऽञ्जनेन
कोपं नवं नयनयोः सहसैव हन्ति ॥ ४०२ ॥
(चन्द्र-)

ताम्बूलपत्रं लवणेन मिश्रं
किञ्चिच्च तैलेन तु सम्प्रदिग्धम् ।
दीपप्रतप्तं च करेण घृष्ट्वा
तस्माद्रसो हन्ति नवाक्षिरोगान् ॥ ४०३ ॥
(वृद्ध-)

मुस्तायवामृताव्याघ्रीपटोलत्रिफलाजलैः ।
क्वथितं पाययेद्वारि सर्वाभिष्यन्दनाशनम् ॥ ४०४ ॥
(चन्द्रटे)

ससैन्धवं लोध्रमथाज्यभृष्टं
सौवीरपिष्टं सितवस्त्रबद्धम् ।
आश्च्योतनं तन्नयनस्य कण्डूं
दाहं च रागं च रुजां च हन्ति ॥ ४०५ ॥
(असितप्रमीथे)

एरण्डेन भृतं क्षीरं साज्यमाश्च्योतनं हितम् ।
शूलघ्नं वरणोदीच्ययष्टीसैन्धवसाधितम् ।
आयसे ताम्रपात्रे वा सैन्धवं दधिमर्दितम् ॥ ४०६॥
(सिद्धसारे)

षोडशभिः सलिलपलैः
पलं तथैकं कटंकटेर्याः सिद्धम् ।
सेकोष्टभागशिष्टः
क्षौद्रयुतः सर्वदोषकुपिते नेत्रे ॥ ४०७ ॥
(वाहटे)

क्षीरेण यष्टिमधुकं क्वथितं शर्करान्वितम् ।
चाक्षिरोगेषु सर्वेषु परिषेकः प्रशस्यते ॥ ४०८ ॥

घृतेन दार्वीत्रिफलाक्वाथसेकोऽक्षिशूलनुत् ।
दार्व्याः क्षीरकषायश्च सर्वाभिष्यन्दसेचनम् ॥ ४०९ ॥
(हारी)

व्योषाभयातुत्थकयष्टिलोध्रै-
मूर्तिः सुसूक्ष्मैः श्लथवस्त्रबद्धैः ।
ताम्रस्थधान्याम्लनिमग्नमूर्त्ति-
रार्त्तिं जयत्यक्षणि नैकरूपाम् ॥ ४१० ॥
वातपित्तकफसन्निपातजां
नेत्रयोर्बहुविधामपि व्यथाम् ।
शीघ्रमेव जयति प्रयोजितः
शिग्रुपल्लवरसः समाक्षिकः ॥ ४११ ॥
आरण्याश्छगणरसे पटावबद्धाः
सुस्विन्ना नखवितुषीकृताः कुलत्थाः ।
तच्चूर्णं सकृदवचूर्णनान्निशीथे
नेत्राणां विधमति सद्य एव कोपम् ॥ ४१२ ॥
(वाह)

श्वेतलोध्रत्वचं बहिर्विलिखितां निम्बपत्रकल्केन प्रदिग्धां पुटपाकविपक्वामर्द्धपलोन्मितां मरिचचतुष्टययुक्तां श्लक्ष्णरजीकृतां वस्त्रबद्धामक्षण्यवकिरेत् । एतदवगुण्ठनं शूलरोगदाहाश्रुश्वयथुकण्डूषापाकक्लेदोपदेहहरम् । तथैव च पोट्टलिकयाऽऽश्च्योतनकालेऽवन्तिसोमाप्लुतयाऽऽश्च्योतयेत् ।
(सङ्ग्रहे)

काञ्जिककल्कितफञ्जीपत्रमभिष्यन्दमाशु नाशयति ।
कंसे मस्तुनिघृष्टो दन्त इवौष्ट्रो बहिर्लेपात् ॥ ४१३ ॥
उत्तमकन्याक्षीरं पादनिषिक्तं नवाक्षिरोगहरम् ।
किंशुकपल्लवतोयं सपदु यथा पूरितं श्रोत्रे ॥ ४१४ ॥
मर्द्दितपन्नगवल्लीमयूरहरिगन्धिकादलं स्तन्ये ।
चेलनिषिक्तं जिघ्रन् नवाक्षिरोगं नरो जयति ॥ ४१५ ॥

१. घोषा इति मुद्रिताष्टाङ्गहृदयपाठ ।

नवनवनीतसनाथं कांस्ये विनिघृष्य मूलमैलकजम् ।
नेत्रनिषिक्तं सुखयति जित्वा घर्षाश्रुणी सहसा ॥ ४१६ ॥

अतिमसृणं सितमसितं कांस्ये विनिघृष्य मूलमैलकजम् ।
नेत्रनिषिक्तं सुखयति जित्वा घर्षाश्रुणी सहसा ॥ ४१७ ॥

चिञ्चापल्लवपूरितचित्रकुमारीं विदह्य सम्पुटिताम् ।
तत्स्वरसे कतकफलैर्घृष्टं मरिचं जयत्यभिष्यन्दम् ॥ ४१८ ॥

कंसे कृशोदरीदुग्धं नवनीतेन घट्टितम् ।
माहिषेण बहिर्लेपादञ्जनाद्वाक्षिरोगनुत् ॥ ४१९ ॥

लिकुचरसेनायःपत्रे घृष्टं मधुकं अलं वाक्षण्यक्तं लिप्तं बहुशः घर्षाश्रुणी विजित्य प्रसादयति ।

मूलेन हंसपद्याः काञ्जिकपिष्टेन नयनमालिम्पेत् ।
जिघ्रन्वा जयति नरो मयूरमूलं नवाक्षिरुजम् ॥ ४२० ॥

दरसरिचतैलयुक्तं पद्ममूलं विघृष्य लिकुचरसे ।
आयसपात्रे हन्यात् नेत्रविकारं बहिर्लेपात् ॥ ४२१ ॥

(काञ्चीपुर-)

सलवणदधितक्रं मत्स्यचक्षुः समूलं
स्तनजातिलजयुक्तं कंसताम्रेण घृष्टम् ।
नवनयनविकारं क्षिप्रमेतन्निहन्या-
त्तम इव सितभानोर्भानुजालं मयूखैः ॥ ४२२ ॥

(तन्त्रा-)

वर्षाभूमूलसिन्धूत्थं नारीक्षीरेण संयुतम् ।
नस्यं कुर्यादभिष्यन्दे सशूले तिमिरेऽर्मणि ॥ ४२३ ॥

कुङ्कुमं मधुकं शुण्ठी सैन्धवं च सशर्करम् ।
तैर्विपक्वं घृतं नस्यान्नेत्रशूलविनाशनम् ॥ ४२४ ॥

(योगसारसमुच्चये)

नासि निहितैर्निर्गुण्डी-
पत्रोत्थस्वरसबिन्दुभिर्द्वित्रैः ।

नश्यति नेत्ररुजां द्रा-
ग्गुर्वी लज्जेव मदनशरैः ॥ ४२५ ॥

(काञ्ची)

अङ्गनास्तनपयोभिरेकं
कंसताम्रपरिघट्टितं रजः ।
निम्बपत्रतिलमुद्गसर्षपै-
र्धूपितं हरति नेत्रवेदनाम् ॥ ४२६ ॥

(वृद्ध-)

तुत्थं ताम्रे मस्तुघृष्टं तु जाला-
भिष्यन्दार्मस्रावशुक्रेऽञ्जनं स्यात् ।
शुल्बे घृष्टं धूपितं सर्पिषाम्बु
शिग्रोः पत्रान्नेत्रघर्षाम्ररुग्घ्नम् ४२७ ॥

(योगामृ)

तुत्थाक्षधात्रीफलमध्यबीजै-
स्त्रिद्व्येकभागैर्विदधीत वर्तिम् ।
तयाञ्जयेदश्रमतिप्रवृद्ध-
मक्ष्णोर्हरेत् कष्टमपि प्रकोपम् ॥ ४२८ ॥

(वररुचेः

रसाञ्जनं शृङ्गिबेरमभया तुत्थकं शुभम् ।
यथोत्तरं द्विगुणितैस्तैर्वर्त्तिरपराजिता ॥ ४२९ ॥

ऋते वातादभिष्यन्दतिमिराणि कुकूणकम् ।
पोथकीः पिटकाः पिल्लानर्माणि च नियच्छति ॥ ४३० ॥

निषिक्तं तुत्थकं वारान् गोजले पञ्चविंशतिम् ।
स्तन्ये वा छागदुग्धे वा सद्यःकोपे तदञ्जनम् ॥ ४३१ ॥

(सङ्ग्रहे)

तत्रैव ।

पथ्यातुत्थे तुल्ये तुल्यो मरिचस्तयोरियं गुलिका ।
कौमारीति पृथिव्यां प्रथिता नवरोगनाशाय ॥ ४३२ ॥

गोसर्पिषि निष्पक्वा क्षीरनिपिष्टा च सारिमेददला ।
उपरि दृशोः परिलिप्ता हरीतकी शोफयत्यश्रु ॥ ४३३ ॥

(अमृताञ्जलौ)

श्वेतधूलासमूलत्वक्तुत्थे चिञ्चाप्रसूनजैः ।
रसैः पिष्ट्वा कृता वर्तिरभिष्यन्दशूलनुत् ॥ ४३४ ॥

(वृद्ध-)

तरुणगुरुपूगपत्रं मूलं च विभिद्य सिद्धमाजे क्षीरे ।
वाताभिष्यन्दरुजां सद्यो विनिहन्ति सक्तुपिण्डिकाचोष्णा ॥ ४३५ ॥

(वाहटे)

वाताभिष्यन्दिनमादावेव जाङ्गलरसैर्भोजयित्वा दशमूलरास्नात्रिफलाक्वाथेन जीवनीयकल्केन च पयोयुक्तं सिद्धमितरद्वा पुराणसर्पिः पाययेत् । रास्नाभीरुदशमूलबलाकोलकुलत्थयवानामजाक्षीरस्विन्नानां बाष्पेण ललाटगण्डादिषु स्वेदः । रास्नादिभिरेव सिद्धं तैलं सर्पिर्नावनम् । एवंविधैरेव च नाळीस्वेदं कुर्यात् । एवमप्यनुपशान्तरुजः सिरां मोक्षयेत् । स्नेहस्वेदविष्यन्दं हि वातदुष्टमसृङ् निह्रियमाणं नानिलप्रकोपाय । पुनश्च स्निग्धाय विरेचनं दद्यात् । शुद्धं च वातप्रतिश्यायवदास्थापयेदनुवासयेच्च । उद्धृतसरेण गव्येन दध्नाम्लेन *ताम्रभाजनमालिम्पेत् । नीलीभूतं च विशुष्कं मस्तुना वर्त्तयः कृता छायाविशोषिता वाताक्षिरोगं जयन्ति ॥

बृहत्येरण्डमूलत्वक्शिग्रुमूलैः ससैन्धवैः ।
वर्त्तिराजपयःपिष्टैः सर्ववाताक्षिरोगजित् ॥ ४३६ ॥

अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते ।
अशान्ते सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ ४३७ ॥

(वाहटे)

अनुपशमे पूर्वोक्तमेव च व्यत्यासेन कुर्यादिति ।

(संग्रहे)

पुराणं पवने सर्पिः पित्ते शर्करयान्वितम् ।
व्योषसिद्धं कफे पीत्वा यवक्षारावचूर्णितम् ॥ ४३८ ॥

स्रावयेद्रुधिरं भूयस्ततः स्निग्धं विरेचयेत् ।
आनूपवेशवारेण शिरोवदनलेपनम् ॥ ४३९ ॥

* 'राजत' इति मुद्रितसंग्रहे

उष्णेन शूले दाहे च पयःसर्पिर्घृतैर्हिमैः।
तिमिरप्रतिषेधं च युञ्ज्याद्वीक्ष्य यथायथम् ॥ ४४० ॥

(बाहटे)

पित्ताभिष्यन्दाधिमन्थयोः शर्कराचचूर्णितं सर्पिः पानं तिक्तादीनामन्यतमं वा। मधुककटंकटेरीनिर्यूहः सितास्तन्यवा नाश्च्योतनम्।

(संग्रहे)

मञ्जिष्ठारजनीलाक्षाद्राक्षार्द्धिमधुकोत्पलैः।
क्वाथः सशर्करः शीतः सेचनं रक्तपित्तजित् ॥ ४४१ ॥
श्वेतलोध्रं समधुकं घृतभृष्टं सुचूर्णितम्।
वस्त्रस्थं स्तन्यमृदितं पित्तरक्ताभिघातजित् ॥ ४४२ ॥

(बाहटे)

एवमसिद्धौ सिराव्यधः। पुनः स्निग्धस्य त्रिफलाकाश्मर्यक्काथशर्करात्रिवृच्चूर्णैर्विरेकः।

(सङ्ग्रहे)

सुमनःकोरकाः शङ्खास्त्रिफला मधुकं बला।
पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा ॥ ४४३ ॥

(बाहटे)

काश्मर्यस्वरसपिष्टः शारिबाशर्कराकल्को नस्यम्। इक्षुरसपिष्टं वा यष्ट्याह्वम्।

(संग्रहे-)

त्र्यहादूर्ध्वं क्षीरसर्पिश्च नस्यं
पालाशं स्याच्छोणितं चाञ्जनार्थे ॥ ४४४ ॥

(पाठ-)

क्षतशुक्रोक्तं चात्र तर्पणं पुटपाकश्च।

श्लेष्माभिष्यन्देधिमन्थे च त्र्यहमुपवासयेत्। तीक्ष्णानि धूमकवलनावनानि। शिग्रुपल्लवरसो मधुमिश्र आश्च्योतनम्। व्योषविपक्वं यवक्षारावचूर्णितं सर्पिः पाययेत्। ततः सिराव्यधो विरेकश्च। मरिचहरिद्राभयाञ्जनैर्वा जलपिष्टा वर्त्तिः। हरीतकी तुत्थं च समभागं तुत्थादर्द्धांशेन मरिचमेषा वर्त्तिः कुमारी सर्वश्लेष्माक्षिरोगघ्नी। कण्ड्वां मनःशिलासैन्धवश्वेतमरिचैर्मातुलुङ्गरसपिष्टैर्वर्त्तिः।

सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनः शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगजित् ॥ ४४५ ॥

रक्तजं पुनरभिष्यन्दमधिमन्थं च पित्तवदुपक्रमेत । स्तन्येक्षुरसशर्करोदकान्यतमेन वा आश्च्योतयेत् । पुनः पुनश्चास्य रुधिरमवसेचयेत् सिराव्यधेन जलौकोभिश्च । घृतमण्डः शर्करामधुरनीलोत्पलैर्मानुषीदुग्धयुक्तः सिद्धो नस्यमिति ।

(संग्रहे)

शुष्काक्षिपाके हविषः पानमक्ष्णोश्च तर्पणम् ।
घृतेन जीवनीयेन नस्यं तैलेन वाणुना ॥ ४४६ ॥

परिषेको हितश्चात्र पयः कोष्णं ससैन्धवम् ।
सर्पिर्युतं स्तन्यपिष्टमञ्जने च महौषधम् ॥ ४४७ ॥

घृताक्तान् दर्पणे घृष्टान् केशान्सल्लकसम्पुटे ।
दग्ध्वाज्यपिष्टा लोहस्था सा मषी श्रेष्ठमञ्जनम् ॥ ४४८ ॥

सशोफे चाल्पशोफे च स्निग्धस्य व्यधयेत् सिराम् ।
रेकः स्निग्धैः पुनर्द्राक्षापथ्याक्वाथत्रिवृद्घृतैः ॥ ४४९ ॥

श्वेतलोध्रं घृते भृष्टं चूर्णितं तान्तवे स्थितम् ।
उष्णाम्बुना प्रमृदितं सेकः शूलहरः परम् ॥ ४५० ॥

सन्धावांश्च प्रयुञ्जीत घर्षरागाश्रुरुग्घरान् ॥ ४५१ ॥

शङ्खं ताम्रे स्तन्यघृष्टं घृताक्तैः शम्यापत्रैः धूपितं तद्यवैश्च ।
नेत्रे युक्तं हन्ति सन्धावसंज्ञं क्षिप्रं घर्षं वेदनाश्चातितीव्राः ॥ ४५२ ॥

उदुम्बरफलं लोहे घृष्टं स्तन्येन धूपितम् ।
साज्यैः शमीच्छदैर्दाहशूलरागाश्रुघर्षजित् ॥ ४५३ ॥

शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसम्पुटे ।
घृतेन धूपितो हन्ति शोफघर्षाश्रुवेदनाः ॥ ४५४ ॥

सन्धावेनाञ्जिते नेत्रे विगतौषधवेदने ।
स्तन्येनाश्च्योतनं कुर्यात्त्रिः परं नाञ्जयेच्च तैः ॥ ४५५ ॥

(वाग्भटे)

अबद्धास्थि सहकारमांसं विगतत्वचं समताम्रचूर्णमीषत्सैन्धवोपेतं गव्येन दध्ना पिष्ट्वा ताम्रपात्रे लेपयेत् । शुष्कं शुष्कं तथैव पिष्ट्वा पुनर्लेपयेत् । एतत्सप्तभिः सप्ताहैः पिण्डाञ्जनं कृतं सर्वाक्षिपाकाश्रुघर्षशोफरागवर्त्मोपचयघ्नम् । इत्थमपि शोफानुवृत्तौ पुनरस्रावसेकः शिरोविरेकश्च ।

(संग्रहे)

अम्लोषिते प्रयुञ्जीत पित्ताभिष्यन्दसाधनम् ।
उत्क्लिष्टाः कफपित्तास्रनिचयोत्थाः कुकूणकः ॥ ४५६ ॥
पक्ष्मोपरोधः शुष्काक्षिपाकः पूयालसो बिसः ।
पोथक्यम्लोषितोल्पाख्याः स्यन्दमन्थाः विनानिलात् ॥४५७॥
एतेऽष्टादश पिल्लाख्या दीर्घकालानुबन्धिनः ।
चिकित्सा पृथगेतेषां स्वं स्वमुक्ताथ वक्ष्यते ॥ ४५८ ॥
पिल्लीभूतेषु सामान्यादथ पिल्लाक्षिरोगिणः ।
स्निग्धस्य छर्दितवतः सिराव्यधहृतासृजः ॥ ४५९ ॥
विरिक्तस्य च वर्त्मानु निर्लिखेदाविशुद्धितः ।

(वाग्भटे)

सकृल्लेखनादशुद्धौ पुनर्लेखयेत् । जलूकाभिश्च ग्राहयेत् । तुवरिकाफलत्रयरोचनाक्वाथेन मधुमता सायं प्रातः सदा प्रक्षालनं अञ्जनान्ते च कषायवृक्षपल्लवकषायेण ।

(सङ्ग्रहे)

तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥ ४६० ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ।
तत्सेकेनोपदेहाश्रुकण्डूशोफांश्च नाशयेत् ॥ ४६१ ॥
करञ्जबीजं सुरसं सुमनःकोरकाणि च ।
संक्षुद्य साधयेत् क्वाथे पूते तत्र रसक्रिया ॥ ४६२ ॥
अञ्जनं पिल्लभैषज्यं पक्ष्मणां च प्ररोहणम् ।
रसाञ्जनं सर्जरसो रीतिपुष्पं मनःशिला ॥ ४६३ ॥
समुद्रफेनं लशुनं गैरिकं मरिचानि च ।
अञ्जनं मधुना घृष्टं क्लेदकण्डूघ्नमुत्तमम् ॥ ४६४ ॥

अभयारसपिष्टं वा तगरं पिल्लनाशनम् ।
'भावितं वस्तमूत्रेण सस्नेहं देवदारु च ॥ ४६५ ॥
सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभयः ।
सताम्ररजसो वर्त्तिः पिल्लशुक्रकनाशनी ॥ ४६६ ॥
अलं च सौवीरकमञ्जनं च ताभ्यां समं ताम्ररजश्च सूक्ष्मम् ।
पिल्लेषु रोमाणि निषेवितोऽसौ चूर्णः करोत्येकशलाकयापि ॥
(वाहटे)

सुरसारसपिष्टैर्वा वचाकं देवदारुभिः ॥ ४६७ ॥
(संग्रहे)

कुण्डलिकाफलसलिलं द्विकंसघृष्टं समेतगृहधूमम् ।
मधुतैललवणयुक्तं हिनस्ति पिंशिताक्षितामक्ष्णोः ॥ ४६८ ॥
(अमृताञ्जलौ)

चिञ्चानिम्बकरञ्जताललवणीकुण्डल्यर्कोद्भव-
स्तैलव्योषयुतो रसः सलवणः सक्षौद्रकर्पूरकः ।
कारञ्जेन नवेन ताम्रमयके दण्डेन घृष्टोऽञ्जनं
शोफक्लेदविदाहरागाजिदिदं पिल्लापहं शस्यते ॥ ४६९ ॥
(तन्त्रान्तरे)

चिञ्चापत्रस्वरसे परिपिष्टा दृषदि लवणमृत्स्नासौ ।
गुलिकीकृतार्मकण्डूस्यन्दाधिमन्थतिमिरपिल्लघ्नी ॥ ४७० ॥
वृत्तमरिचौ हुताशञ्चंशौ पिष्ट्वातिमसृणमाज्येन ।
पिल्लाविलमक्ष्यक्तं मासात् घनपक्ष्ममालं स्यात् ॥ ४७१ ॥
मधुकररसबहुभावितचेलमषीवृत्तकंसनवनीतम् ।
मूत्रे पिष्टमजाया हन्याद् पिल्लं बहिर्लेपात् ॥ ४७२ ॥
अतिपुरुषायुषमाक्षं मूलं ताम्रे निघृष्टमम्लेन ।
अञ्जनमतुल्यमखिलां पिल्लाद्यां हन्ति नेत्ररुजाम् ॥ ४७३ ॥
सितकुसुमवेगगन्ध्या मूलं ताम्रे निघृष्टमम्लेन ।
अञ्जनमतुल्यमेतत् तिमिरार्जुनवर्त्मरोगपटलेषु ॥ ४७४ ॥
(काञ्चीपुरवासी)

लाक्षानिर्गुण्डीभृङ्गदार्वीरसेन
श्रेष्ठं कार्पासं भावितं सप्तकृत्वः ।

दीपः प्रज्वाल्यः सर्पिषा तत्समुत्था
श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ४७५ ॥

कार्पासमूलजं भस्म योषित्क्षीरेण घर्षयेत् ।
कंसे ताम्रेण पिल्लाक्षे तदञ्जनमनुत्तमम् ॥ ४७६ ॥

षडङ्घ्रितोयेन पिचुं सुभावितं
दग्ध्वा शरावद्वितयेन कज्जलम् ।
आदाय तुल्यामथ कांस्यकिङ्किणीं
पिष्ट्वाजमूत्रेण ततोऽमुनाणुशः ॥ ४७७ ॥

सम्मिलितं तद्द्वितयं महिषीनवनीतसंयुक्तम् ।
कंसनिघृष्टं बहुशः पिल्लामयमाशु नाशयति ॥ ४७८ ॥

मन्दिरधूमं कंसे कुण्डलिकाफलरसेन संघृष्टम् ।
महिषीनवनीतयुतं क्षपयति पिल्लाक्षमक्ष्यक्ता ॥ ४७९ ॥
(तन्त्रान्तरे)

त्रिफलास्थिभवं बीजं निष्कं चालं पृथक् पृथक् ।
पथ्या धात्री हरिद्रा च कुण्डली द्विगुणं पृथक् ॥ ४८० ॥

इष्टकारेणुलवणमृद्ब्रह्मीनिम्बपल्लवम् ।
त्रिगुणं चपलासिन्धुनागसूतं चतुर्गुणम् ॥ ४८१ ॥

पञ्चैव पञ्चलोहं तु गोनागक्षारतीक्ष्णकम् ।
चतुष्पलं स्यात् स्फटिकं षट्पलं च शिलाह्वयम् ॥ ४८२ ॥

पलार्द्धं पलमात्रं वा सर्वं पिष्ट्वा रसैर्भिषक् ।
तिन्त्रिणीलवणीनिम्बगृष्टिमौर्वी च सातला ॥ ४८३ ॥

यक्षाक्षी च तदुद्भूतैः कंसपात्रे प्रलेपयेत् ।
सप्ताहे समतिक्रान्ते तत्रैव परिशोषयेत् ॥ ४८४ ॥

पुनः संचूर्ण्य संयुञ्ज्याच्छिलामात्रं रसाञ्जनम् ।
मर्दयन्नवनीतेन माहिषेण समेन तैः ॥ ४८५ ॥

एतदौदुम्बरे कांस्ये आक्षे वा भाजने स्थितम् ।
पिल्लादीनि निहन्त्याशु वर्त्मरोगान् सुदारुणान् ॥ ४८६ ॥
(सिद्धयोगे)

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।
पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत् ॥ ४८७ ॥

चतुर्णवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ।
परस्परमसंकीर्णाः कात्स्न्येंन गदिता गदाः ॥ ४८८ ॥

सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रियः ।
पुराणयवगोधूमशालिषष्टिककोद्रवान् ॥ ४८९ ॥

मुद्गादीन् कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान् ।
शाकं चैवंविधं मांसं जाङ्गलं डाडिमं सिताम् ॥ ४९० ॥

सैन्धवं त्रिफलां द्राक्षां वारि पाने च नाभसम् ।
आतपत्रं पदत्राणं विधिवद् दोषशोधनम् ॥ ४९१ ॥

वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ।
क्रोधशोकदिवास्वप्नरात्रिजागरणानि च ॥ ४९२ ॥

विदाहि विष्टम्भकरं यच्चेहाहारभेषजम् ।

(वाग्भटे)

ताम्बूलचंक्रमणशाकजलाभिषेक-
पानीयमैथुनपरागबहुप्रलापान् ।
तेजोनिरीक्षणदिवाकरधामधूम-
वार्तानिहाक्षिगदिनः परिवर्जयेयुः ॥ ४९३ ॥

निष्पावानपि मूलकदधिमद्यक्षारशुक्तपिष्टान्नान् ।
पिण्याकतक्रकाञ्जिककुलत्थांश्च वर्जयेन्नेत्रार्थी ॥ ४९४ ॥

ग्राम्यधर्मो रजो धूमः स्वेदो वातातपो हिमः ।
निद्राच्छेदो दिवास्वप्नः सलिले चातिमज्जनम् ॥ ४९५ ॥

क्षुधया सततं पीडा सततं चातिभोजनम् ।
इत्येते द्वादश बाधा विवर्ज्याश्चक्षुरिच्छता ॥ ३९६ ॥

(तन्त्रान्तरे)

लवणानि तथैवाम्लं कटुकं च विवर्जयेत् ।
माषसूपं तिलकृतं पिष्टमौरभ्रमामिषम् ॥ ४९७ ॥

अभिष्यन्दि च यत्किञ्चित् सदा तत्परिवर्जयेत् ।
(चतुष्पष्टौ रोगाधिकरणे)

वल्लूरं माषसूपं च मत्स्यान् सर्वांश्च शुक्तकम् ॥ ४९८ ॥
लकुचं करमर्दं च पक्वं तालफलं तथा।
त्रपुसान्यालुपांश्चैव कर्कारु च विवर्जयेत् ॥ ४९९ ॥
कपित्थं मातुलुङ्गं च बिसमाम्रमरुष्करम् ।
शृङ्गिवेरं करञ्जं च शिग्रुसाषकमूलकम् ॥ ५०० ॥
शुष्कशाकानि सर्वाणि दध्युदश्विच्च वर्जयेत् ।
करीरतुम्बवल्लूरफञ्जीनाळीकळायकम् ॥ ५०१ ॥
सूपिकाश्रावणीसेलुनाळीशाकं च वर्जयेत् ।
आजंमांसं तथा गव्यं तथौरभ्रं तथा भृशम् ॥ ५०२ ॥
दधि तक्रमपि क्षीरं सर्वं शुक्तं विशेषतः ।
सर्वं पिष्टमयं चैव सर्वं च तिलसंस्कृतम् ॥ ५०३ ॥
अभिष्यन्दीनि सर्वाणि गुरूणि च विशेषतः ।
नात्यश्नीयात् सदा प्राज्ञो मधुरे भक्ष्यभोजने ॥ ५०४ ॥
अभिष्यन्देषु सर्वेषु शुक्लेषु तिमिरेषु च ।
पयो विधिशृतं शीतं सदैवानुपिबेत् सुखम् ॥ ५०५ ॥
तथामलकसंघृष्टमम्लार्थमुपकल्पयेत् ।
काममाम्रातकं दद्यात् डाडिमं वाम्लशीलितः ॥ ५०६ ॥
शालयश्च पुराणा ये लघवश्चक्षुषो हिताः ।
व्रीहयो यवगोधूमा नीवाराः कोरदूषकाः ॥ ५०७ ॥
मुद्गान् मसूरान् सूपार्थे तुवरीं चैव योजयेत् ।
कुलत्थयूषं सघृतं सूपवर्जमुपाहरेत् ॥ ५०८ ॥
(तन्त्रान्तरे)

कृष्णायाः कृष्णवत्सायाः गोः पयः सर्पिरेव च ॥ ५०९ ॥
पानेऽक्षितर्पणे नस्ये परमं चक्षुषे हितम् ॥ ५१० ॥
(चन्द्रटे)

चक्षूरक्षायां सर्वकालं मनुष्यै-
र्यत्नः कर्तव्यो जीविते यावदिच्छा ।
व्यर्थो लोकोऽयं तुल्यरात्रिंदिवानां
पुंसामन्धानां विद्यमानेऽपि वित्ते ॥ ५११ ॥

त्रिफला रुधिरस्रुतिर्विशुद्धि-
र्मनसो निर्वृतिरञ्जनं च नस्यम् ।
शकुनाशनता सपादपूजा
घृतपानं च सदैव नेत्ररक्षा ॥ ५१२ ॥

अहितादशनात् सदा निवृत्तिः
भृशभास्वच्चलसूक्ष्मवीक्षणाच्च ।
निमिना मुनिनोपदिष्टमेतत्
परमं रक्षणमीक्षणस्य पुंसाम् ॥ ५१३ ॥

द्वे पादमध्ये पृथुसन्निवेशे सिरे गते ते बहुधा च नेत्रे ।
ता म्रक्षणोद्वर्तनलेपनादीन् पादप्रयुक्तान्नयनं नयन्ति ॥ ५१४ ॥

मलोष्णसंघट्टनपीडनाद्यै स्ता दूषयन्ते नयनानि दुष्टाः ।
भजेत् सदा दृष्टिहितानि तस्मादुपानदभ्यञ्जनधावनानि ॥ ५१५॥

इति नेत्ररोगचिकित्सा ॥

---

दोषैः पृथग्रक्तेन सन्निपातेन च पञ्च कर्णशूलानि । तथा नाद, बाधिर्य, प्रतिनाह, कर्णकण्डू, कर्णशोफ, पूतिकर्ण, कृमिकर्ण, कर्णविद्रधि, क्षतविद्रधि, कर्णार्शः, कर्णार्बुद, कूचिकर्ण, पिप्पली, विदारिका, पालिशोष, तन्त्रिका परिपोटोत्पातोन्मन्थदुःखवर्द्धन-लिह्याख्या इति पञ्चविंशतिः कर्णरोगाः ।

प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत् ।
मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनैः ।
प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवद् ॥ ५१६ ॥

तस्मिन् वातजे कर्णशूलेऽर्धावभेदकस्तम्भश्रोत्रशून्यताश्चिराच्च पाकः । पक्के त्वल्पलसीकास्रावश्च । पित्तजे दाहश्वयथुज्वराः, शीघ्रपाकः । पक्के तु पीतास्रावश्च । कफजे मूर्धादिगौरवकण्डूशोफमन्दरुजा, उष्णेच्छा । पक्के तु श्वेतघनास्रावश्च । रक्तादभिघातादिदूषितात् पित्तलिङ्गं च, किञ्चिद् वातिकलिङ्गं च शूले स्यात् । सन्निपातजे शोफो ज्वरः, तीव्ररुजाः, श्रोत्रजाळ्यं । पक्के घनसितासितरक्तपूयस्रुतिश्च । वायुना कर्णनादः । कफानुगो वायुरुपेक्षितो नादो वा कृच्छ्रादुच्चैः-श्रुतिं क्रमाद् बाधिर्यं च कुर्यात् । तद् बाधिर्यम् । वायुशोषितेन कफेन स्रोतोलेपात् रुजा गौरवं पिधानं च स्यात्, स प्रतिनाहः । कफाच्छ्रोत्रे कण्डूस्तदाख्यः । कफात् कर्णशोफस्तदाख्यः । पित्तविदग्धेन-कफेन सपूतिक्लेदः कर्णः, पूतिकर्णः । वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजाः क्रिमयः, खादन्तस्तीव्ररुजाः कुर्युः, स क्रिमिकर्णकः । कण्डूयनात् कर्णे क्षते जाते पूर्वलिङ्गः क्षतविद्रधिः स्यात् । कर्णजातविद्रध्यर्शोर्बुदाः तदाख्यया स्मृताः । तेषु रुक्, पूतिकर्णत्वं बधिरत्वं च जायते । गर्भे वातसङ्कुचिता शष्कुली कूचिकर्णः । गर्भजः पिप्पली-समो मांसांकुरः पिप्पल्याख्यः । सन्निपातात् सवर्णः सरुजः शोफो विदारिका, सा चोपक्षेया पक्का कटुतैलसमस्रुतिः, कृच्छ्राद्रूढा च संकुचिता कर्णशष्कुली स्यात् । वायुना पालिशोषस्तदाख्यः । वायुना तन्त्रीव कृशा दृढा च पाली तन्त्रिका । चिरं विमुच्य सहसा वर्धिते कर्णे वायुना परिपोटवानरुणः शोफः परिपोटः । गुर्वाभरणभाराद्यैः सरुग्दाहरागस्फोटपाकक्लेदः पित्तरक्तजः शोफो उत्पाताख्यः । वातकफात् सवर्णः कण्डूमान्नीरुजः पालिशोफ उन्मन्थाख्यः । दुर्विद्धकर्णे वर्द्धिते सकण्डूरुग्दाहपाकः सन्निपातश्वयथुर्दुखवर्धनाख्यः । कफासृक्क्रिमिजाः सकण्डूरुक्क्लेदाः पिटकाः, लिह्याख्याः । ताः उपेक्षिताः पालीं लिह्युः ॥

(तन्त्रान्तरे)

पिप्पली सर्वजं शूलं विदारी कूचिकर्णकः ।
एषामसाध्या याप्यैका तन्त्रिकान्यांस्तु साधयेत् ॥ ५१७ ॥

पञ्चविंशतिरित्युक्ताः कर्णरोगा विभागशः ।
कर्णशूले पवनजे पिबेद् रात्रौ रसाशनः ॥ ५१८ ॥

वातघ्नसाधितं सर्पिः कर्णं स्विन्नं च पूरयेत् ।
पत्राणां पृथगश्वत्थविल्वार्कैरण्डजन्मनाम् ॥ ५१९ ॥

तैलसिन्धूत्थदिग्धानां स्विन्नानां पुटपाकतः ।
रसैःकवोष्णैस्तद्वच्च मूलकस्यारलोरपि ॥ ५२० ॥

गणे वातहरेऽम्लेषु मूत्रेषु च विपाचितः ।
महास्नेहो द्रुतं हन्ति सुतीव्रामपि वेदनाम् ॥ ५२१ ॥

महतः पञ्चमूलस्य काष्टात् क्षौमेण वेष्टितात् ।
तैलसिक्तात् प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः ॥ ५२२ ॥

योज्यश्चैवं भद्रकाष्ठात् काष्ठात् कुष्ठाच्च सारलात् ।

(वाहटे)

अश्वत्थपत्रस्वरसवन्महावृक्षस्वरसोऽपि योज्य इति ।श्रेयसीदेवदारु-काकोळीकुष्ठनिचुळबीजैः क्षीरपिष्टैस्तिलयुक्तैः कर्णं बहिर्लेपयेत् । सर्व-धान्यस्नेहगोक्षीरसिद्धामुत्कारिकां एरण्डपत्रान्तच्छादिते कर्णे स्वेदार्थं प्रणयेत् । पुनः पुनश्च नाडीस्वेदान् पिण्डस्वेदांश्च । वातव्याधिप्रति-श्यायार्दितविधानं च सनिरूहानुवासनं कुर्यात् ॥

(संग्रहे)

सपदि तु सर्षपतैलं विजयति कर्णोद्भवं शूलम् ।
सुरतरुसर्षपसिद्धं तिलजं वा सिन्दुवाररसे ॥ ५२३ ॥ ॥

(सिद्ध-)

रसोनं रविपत्रेण पुटपक्वं प्रसाधयेत् ।
कदुष्णस्तद्रसः सद्यः कर्णशूलविनाशनः ॥ ५२४ ॥

(वाहटे)

तीव्रशूलार्दिते कर्णे सशब्दे क्लेदवाहिनि ।
बस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेन समन्वितम् ॥ ५२५ ॥

(सिद्धसारे)

वर्जयेच्च शिरःस्नानं शीताम्भःपानमह्न्यपि ।
पित्तशूले सितायुक्तघृतस्निग्धं विरेचयेत् ॥ ५२६ ॥

द्राक्षायष्टिशृतं स्तन्यं शस्यते कर्णपूरणम् ॥ ५२७ ॥

(वाहटे)

माक्षिकं वा। मधुकपद्मककल्कस्तन्यसिद्धं वा सर्पिः॥

(संग्रहे)

वामयेत् पिप्पलीसिद्धसर्पिःस्निग्धं कफोद्भवे।
लशुनार्द्रकशिग्रूणां सुरंग्या मूलकस्य च ॥ ५२८ ॥

कदल्याश्च रसः श्रेष्ठः कदुष्णः कर्णपूरणे।
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तान् लवणान्वितान् ॥ ५२९ ॥

सन्निधाय स्नुहीकाण्डे कोरिते तच्छदावृतान्।
स्वेदयेत्पुटपाकेन स रसः शूलजित्परम् ॥ ५३० ॥

रसेन बीजपूरस्य कपित्थस्य च पूरयेत्।
शुक्तेन पूरयित्वा वा फेनेनान्ववचूर्णयेत् ॥ ५३१ ॥

अजाविमूत्रवंशत्वक्सिद्धं तैलञ्च पूरणम्।
सिद्धं वा सार्षपं तैलं हिङ्गुतुम्बुरुनागरैः ॥ ५३२ ॥

(वाहटे)

रसाञ्जनमार्कववैजयन्तीशिग्रुलशुनार्द्रकसुरङ्गीमूलकदलीनां वा पृथक्समस्तानां रसेन मधुना वा रक्षोघ्नतैलेन वा कर्णं चास्य पूरयेत्। धान्याम्लक्वथितदश-मूलबाष्पेण नाडीस्वेदमाचरेत्। कफघ्नांश्च गण्डूषान् धारयेत्।

(सङ्ग्रहे)

रक्तजे पित्तवत्कार्यं सिरां वाशु विमोक्षयेत्।
पक्वे पूयवहे कर्णे धूमगण्डूषनावनम् ॥ ५३३ ॥

युंज्यान्नाळीविधानं च दुष्टव्रणहरं च यत्।
स्रोतः प्रमृज्य दिग्धं च द्वौ कालौ पिचुवर्तिभिः ॥ ५३४ ॥

पुरेण धूपयित्वा तु माक्षिकेण प्रपूरयेत्।
शूलक्लेदगुरुत्वानां विधिरेष निवर्तकः ॥ ५३५ ॥

नादबाधिर्ययोः कुर्यात् वातशूलोक्तमौषधम्।
श्लेष्मानुबन्धे श्लेष्माणं प्राग्जयेद्वमनादिभिः ॥ ५३६ ॥

(वाहटे)

बाधिर्यं च बालवृद्धक्षीणकासशोषिणां चिरोत्थितं वर्जयेत् । इतरत् तु स्नेहस्वेदनस्यशिरोवस्तिवस्तिकर्मप्रभृतिभिर्दोषानुबन्धमवेक्ष्य साधयेत् । तत्र प्रागेव पुराणसर्पिषा वातहरतैलेन वा स्निग्धं स्नेहेनैव विरेचयेत् । कृतसंसर्जनस्य पुनः स्निग्धस्य शोणितमपहरेत् । कर्णासन्नं जलौकोभिः । ततो वस्तिकर्ममूर्धतैलनस्यधूमान् कर्णपूरणं च शीलयेत् । तरुणबिल्वफलानि गोमूत्रेण क्राथयेत् । तेन क्राथेन सितामधुकबीजकबीजल्केन च पयोयुक्तं तैलं विपाचयेत् । तत्तैलमुष्णं शीते बिल्वक्राथे प्रक्षिप्य मन्थयेत् । यावत् पिण्डीभूतमुद्धृत्य चैतत् पुनरन्यत्र बिल्वोदके मन्थयेत् । ततश्चोद्धृत्याष्टगुणे पयसि मधुकगन्धचन्दनगर्भे साधितमाशु कर्णपूरणात् बाधिर्यं नाशयति ॥

(संग्रहे)

एरण्डशिग्रुतरुणमूलकात्पत्रजे रसे ।
चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणोन्मिते ॥ ५३७ ॥
यष्ट्याह्वक्षीरकाकोलीकल्कयुक्तं निहन्ति तत् ।
नादबाधिर्यशूलानि नावनाभ्यङ्गपूरणैः ॥ ५३८ ॥
पक्वं प्रतिविषाहिङ्गुमिसित्वक्स्वर्जिकोषणैः ।
सशुक्तैः पूरणात्तैलं रुक्स्रावस्रुतिनादनुत् ॥ ५३९ ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ।
शतपुष्पा वचा कुष्ठं दारुशिग्रुरसाञ्जनम् ॥ ५४० ॥
सौवर्चलयवक्षारस्वर्जिकौद्भिदसैन्धवम् ।
भूर्जग्रन्थि विडं मुस्ता मधु शुक्तं चतुर्गुणम् ॥ ५४१ ॥
मातुलुङ्गरसस्तद्वत् कदलीस्वरसश्च तैः ।
पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात् ॥ ५४२ ॥
कण्डूक्ष्वेळनबाधिर्यपूतिकर्णत्वरुक्क्रिमीन् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयेषु च ॥ ५४३ ॥
यदि सुप्ताविव स्यातां कर्णौ रक्तं हरेत्ततः ।
सशोफक्लेदयोर्मन्दश्रुतेर्वमनमाचरेत् ॥ ५४४ ॥

(बा.हटे)

कर्णशूलः प्रणादश्च बाधिर्यं क्ष्वेळ एव च ।
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥ ५४५ ॥

(सुश्रुतादौ)

प्रतिनाहे स्नेहस्वेदक्लिन्नं कर्णं कर्णशोधनेन विशोध्य तैलस्य पूरयेत्, मातुलुङ्गरसस्य वा, सशुक्तक्षौद्रसैन्धवस्य । शोध्यमाने वेदना रक्तागमो वा यदि भवेत् ततो घृतमण्डेन पूरयेत् । नस्यं च शीलयेत् ।

(संग्रहे)

क्रमोऽयं मलपूर्णेऽपि कर्णे कण्ड्वां कफापहम् ।
नस्यादि तद्वच्छोफे च कटूष्णैश्चात्र लेपनम् ॥ ५४६ ॥
कर्णस्रावोदितं कुर्यात्पूतिक्रिमिककर्णयोः ।
पूरणं कटुतैलेन विशेषात् क्रिमिकर्णके ॥ ५४७ ॥

(वाहटे)

विशेषतस्त्वत्र क्रिमिघ्नो विधिः, तथा सर्षपतैलेन पूरणं, हरितालचूर्णवता गोमूत्रेण वा, वार्त्ताकबीजेन धूपनम् ।

(संग्रहे)

धूपनं कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ।
कर्णक्ष्वेळे हितं तैलं सार्षपं चैव पूरणे ॥ ५४८ ॥

(पाठशुद्धौ)

बस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेन समन्वितम् ।
सशब्दक्लेदवाहे च पूतिकर्णे च शस्यते ॥ ५४९ ॥
वरणार्ककपित्थाम्रजम्बूपल्लवसाधितम् ।
पूतिकर्णं हरेत्तैलं जातीपत्ररसोऽथवा ॥ ५५० ॥

(सिद्धसारे)

निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः ।
पूरणं पूतिकर्णस्य शमनो मधुसंयुतः ॥ ५५१ ॥

(पाठशुद्धौ)

वमिपूर्वा हिता कर्णविद्रधौ विद्रधिक्रियाः ।
पित्तोत्थकर्णशूलोक्तं कर्तव्यं क्षतविद्रधौ ॥ ५५२ ॥
अर्शोऽर्बुदेषु नासावद्, आमा कर्णविदारिका ।
कर्णविद्रधिवत् साध्या यथादोषोदयेन च ॥ ५५३ ॥

पालिशोषेऽनिलश्लेष्मशूलवन्नस्यलेपनम् ।
स्वेदं च कुर्यात् स्विन्नां च पालिमुद्वर्तयेत्तिलैः ॥ ५५४ ॥

प्रियाळबीजयष्ट्याह्वहयगन्धायवान्वितैः ।
ततः पुष्टिकरैः स्नेहैरभ्यङ्गं नित्यमाचरेत् ॥ ५५५ ॥

शतावरीवाजिगन्धापयस्यैरण्डजीवकैः ।
तैलं विपक्वं सक्षीरं पालिनां पुष्टिकृत् परम् ॥ ५५६ ॥

पालिं छित्वा तु संक्षीणां शेषां सन्धाय पोषयेत् ।
याप्यैवं तन्त्रिकाख्यापि परिपोटेऽप्ययं विधिः ॥ ५५७ ॥

उत्पाते शीतलैर्लेपो जलूकाहृतशोणिते ।

(वाहटे)

उन्मन्थे तीक्ष्णैः शिरोविरेकः । तिलसर्षपलोध्रहरिद्राद्वयैरुद्वर्तितायाः कर्णपाल्यास्तालीसतमालैलाकट्फलरसाञ्जनैर्लेपः । तालपत्र्यश्वगन्धार्कसैन्धवनावल्गुजबीजसुरसलाङ्गलिकाभिर्गोधाकुलीरवसायुक्तं तैलं विपक्वमभ्यञ्जनम् । तैलमेव वा पटोलकटुरोहिणीरसाञ्जनशिरीषैः ।

(संग्रहे)

दुर्विद्धेऽश्मन्तजम्ब्वाम्रपत्रक्काथेन सेचनम् ॥ ५५८ ॥
लाक्षाविलङ्गसिद्धं च तैलमभ्यञ्जने हितम् ।
स्विन्नां गोमयजैः पिण्डैर्बहुशः परिलेहिकाम् ॥ ५५९ ॥

विळङ्गसारैरालिम्पेदुरश्रीसूत्रकल्कितैः ।
कौटजेङ्गुदिकारञ्जबीजशम्याकवल्कलैः ॥ ५६० ॥

अथवाभ्यञ्जने तैर्वा कटुतैलं विपाचयेत् ।
सनिम्बपत्रमरिचमदनैर्लेहिकाव्रणे ॥ ५६१ ॥

(बाहटे)

सर्वेषु च पालिरोगेषु स्नेहस्वेदशोधनाभ्यङ्गप्रदेहनस्यास्रविस्रावणानि यथार्हं प्रयुञ्जीत । कृशायां गोधावराहवसाभिः ।

(संग्रहे)

निर्गुण्डिजातिशिखिभृङ्गरसोनरंभा-
वार्ताकशिग्रुसुरसार्द्रककारवल्यः ।
तेषां रसे तिलरुहं भृतमाशु नाद-
बाधिर्यशूलमपहन्ति च पूतिकर्णम् ॥ ५६२ ॥
(योगामृते)

निर्गुण्डीरविशिग्रुमौर्वितुळसीधुर्धूरतालोद्भवे
रम्भाबर्बरमूलकाळिरजनीगृष्ट्यार्द्रकोत्थे रसे ।
राज्युग्रालशुनद्वकुष्ठपटुभिर्व्योषाग्निसर्जैः भृतं
तैलं बस्तजलेन कर्णजगदान् षड्विंशतिं नाशयेत् ॥

आजे मूत्रे साधितं बिल्वमज्जा दध्ना चैतत्तैलमाशु व्यपोहेत् ।
कर्णस्रावं पूतिकर्णं सशूलं बाधिर्यं च क्ष्वेळनं कर्णगूथम् ॥
(तन्त्रान्तरे)

कुष्ठशुण्ठीवचादारुशताह्वाहिङ्गुसैन्धवैः ।
बस्तमूत्रे भृतं तैलं पूरणाच्छ्रवणार्तिजित् ॥ ५६५ ॥
(सिद्धसारे)

सौवीरशुक्तार्द्रकमातुळुङ्गमांसीरसैर्गुग्गुलुसैन्धवैश्च ।
विपाच्य तैलं कटुकं निषिञ्चेत् तत्कर्णयोः कर्णरुजोपशान्त्यै ॥
(वररुचिः)

तरुणं कार्पासफलं पिष्ट्वा तैलं विपाच्य तद्बिन्दून् ।
श्रवसि निदध्याद्विद्वान् वाञ्छति यदि पूयमुन्मार्ष्टुम् ॥ ५६७ ॥
(काञ्चीपुरवासी-)

रम्भार्कपत्रस्नुक्छिग्रुकन्दनिर्गुण्डिकार्द्रकात् ।
मौर्वीसोमलतापीलुगोकर्णलशुनाद् रसैः ॥ ५६८ ॥

मस्त्वजामूत्रधान्याम्लैः पृथक्प्रस्थं समन्वितैः ।
पक्वं सर्षपतैलं च चतुर्थांशसमन्वितम् ॥ ५६९ ॥

वचाविषतुरुष्काण्डहिङ्गुसिन्धुनतामयैः ।
कुलीरक्षीरसंयुक्तैः पृथक् सम्यक्पलोन्मितैः ॥ ५७० ॥

सम्यक् सिद्धं परिस्राव्य स्थापयेच्छुद्धभाजने ।
एतत्तैलं नरेन्द्राणां कर्णरोगविनाशनम् ॥ ५७१ ॥

विशेषतः कर्णशूलं बाधिर्यं कर्णपूयताम् ।
अश्विभ्यां निर्मितं तैलं वैद्यानां कीर्तिकृत् परम् ॥ ५७२ ॥

(आश्विनीये)

छिन्नं तु कर्णं शुद्धस्य बन्धमालोच्य यौगिकम् ।
शुद्धास्रं लगयेल्लग्ने सद्यच्छिन्ने विशोधनम् ॥ ५७३ ॥

(बाहटे)

त्र्यहाच्चतुरहाद्वा सलिलेन परिषिच्य पिचुं सूत्रं चापनयेत् । न चाशुद्धरक्तं अतिप्रवृत्तरक्तं क्षीणरक्तं वा कर्णं सन्दध्यात् । न कर्णे शोफरागादियुक्ते सन्धानमाचरेत् ।

न घस्मरस्य नात्युष्णेनाविशुद्धतनोरपि ।

(संग्रहे)

सप्ताहादामतैलाक्तं शनैरपनयेत्पिचुम् ॥ ५७४ ॥

सुरूढं जातरोमाणं श्लिष्टसन्धिं समास्थिरम् ।
सुपक्ष्माणं सुरागं च शनैः कर्णं विवर्धयेत् ॥ ५७५ ॥

जलशूकं स्वयंगुप्तारजन्यौ बृहतीफलम् ।
अश्वगन्धाबलाहस्तिपिप्पलीगौरसर्षपाः ॥ ५७६ ॥

मूलं कोशातकाश्वघ्नरूपिकासप्तपर्णजम् ।
छुच्छुन्दरीकालमृता गृहं मधुकरीकृतम् ॥ ५७७ ॥

जतुका जलजन्मा च तथा ग्रावरकन्दकम् ।
एभिः कल्कैः खरं पक्वं सतैलं माहिषं घृतम् ॥ ५७८ ॥
हस्त्यश्वमूत्रेण परमभ्यङ्गात्कर्णवर्धनम् ।

(बाहटे)

भूमिकदम्बस्वरसे डाडिमकल्केन तिलजमाक्षं वा ।
कर्णकुचलिङ्गयोनीर्विवर्धयति यथेष्टमालेपात् ॥ ५७९ ॥
कर्णाद्यभिवृद्धिः स्यात्कुण्डिलफलतालपत्रिकायुक्तात् ।
महिषीक्षीरादुद्धृतदधिसरभवाज्यलेपेन ॥ ५८० ॥

अश्वगन्धा तथालाबुचन्दनं चैव पेषयेत् ।
सर्षपैः सह तत्कल्कः कर्णवर्द्धनमुत्तमम् ॥ ५८१ ॥
नवनीतं वचामूलं माषसक्तु तथैव च ॥ ५८२ ॥

पद्मपत्रं शताह्वा च लेपयेत् प्रमदास्तनम् ।
स संवर्धयति क्षिप्रं प्रयोगात् सप्तरात्रतः ॥ ५८३ ॥

(चन्द्रटे)

कुटचं करवीरं च लाङ्गलीकन्दचित्रकम् ।
अश्वगन्धामपामार्गं तिलतैलेन चूर्णितम् ॥ ५८४ ॥
कर्णवर्द्धनमेतत्तु लेपनात् स्तनवर्धनम् ।

तुलसीजलशूककुक्कुटाण्डं
बृहतीभिश्च वराहकर्णमेतत् ।
महिषीघृतगोघृतेन सिद्धं
ध्वजकर्णस्तनवर्धनं करोति ॥ ५८५ ॥

भूमिकदम्बस्य रसः कृष्णतिलं माहिषं च नवनीतम् ।
दिनकरकिरणविपक्कं करोति पटहोपमं कर्णम् ॥ ५८६ ॥

(तन्त्रान्तरे)

कुर्याच्चाभ्यञ्जनालेपान् पालिशोपे प्रकीर्त्तितान् ॥ ५८७ ॥

(सङ्ग्रहे)

कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी ।
क्षिपेदधोमुखं कर्णं हन्याद्वा चूषयेत वा ॥ ५८८ ॥

कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना ।
शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः ॥ ॥ ५८९ ॥

अथ कुर्याद्वयस्स्थस्य छिन्नां शुद्धस्य नासिकाम् ।
छिन्द्यान्नासासमं पत्रं तत्तुल्यं च कपोलतः ॥ ५९० ॥

त्वङ्मांसं नासिकासन्ने रक्षंस्तत्तनुतां नयेत् ।
सीव्येद्गण्डं ततः सूच्या सीवन्या पिचुयुक्तया ॥ ५९१ ॥

नासाच्छेदे च लिखिते परिवर्त्योपरित्वचम् ।
कपोलबन्धं संदध्यात् सीव्येन्नासां च यत्नतः ॥ ५९२ ॥

नाडीभ्यामुत्क्षिपेदन्तः सुखोच्छ्वासप्रवृत्तये ।
आमतैलेन सिक्त्वा तु पत्तङ्गमधुकाञ्जनैः ॥ ५९३ ॥

शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ।
ततो मधुघृताभ्यक्तं बध्वाचारिकमादिशेत् ॥ ५९४ ॥

इति कर्णरोगचिकित्सा ॥

---

पृथग्दोषैर्निचयात् रक्तेन च पञ्च प्रतिश्यायास्तथा दुष्टप्रतिश्याय, भृशक्षव, नासाशोष, नासानाह, घ्राणपाक, नासास्राव, पीनस, दीप्ति, पूतिनास, पूयरक्त, पुटक, नासार्शोनासार्बुदा इत्यष्टादश नासागतरोगाः ।

अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ।
नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ ५९५ ॥
अत्यम्बुपानरमणछर्दिबाष्पग्रहादिभिः ।
क्रुद्धाः वातोल्बणा दोषा नासायां स्त्यानतां गताः ॥ ५९६ ॥
जनयन्ति प्रतिश्यायं वर्धमानं क्षयप्रदम् ।

तत्र वातजे प्रतिश्याये भृशक्षवमुखशोपस्वरसादन्तकर्णशिरोरुजश्चिरात्पाकः शीताच्छकफस्रुतिश्च ।

पित्तजे तृट्ज्वरघ्राणपाकास्ताम्रोष्णपीतास्रावश्च । कफजे कासश्वासारुचिवमिमुखमाधुर्यं शुक्लघनस्रुतिश्च ॥

सर्वजः सर्वलिङ्गोऽकस्माद्वृद्धिहानियुतश्च । रक्तजे श्वासपूतित्वमुरस्सुप्तिः श्रोत्रादिषु कण्डूः पित्तलिङ्गं च । उपेक्षया सर्वे दुष्टतां यान्ति । तस्मिन् दुष्टप्रतिश्याये यथोक्तोपद्रवाधिक्यमग्निसादज्वरश्वासकासोरःपार्श्वरुजो मुखपूतित्वं पूयाभासितारक्तग्रन्थितकफस्रुतिः, क्रिमिप्रादुर्भावश्च । सर्वेषु पक्केषु गात्रलाघवं क्षवथुशमः पीतघनकफस्रुतिर्गन्धरसज्ञानं च लिङ्गम् । तीक्ष्णाघ्राणादिना तृणादिभिरन्यैर्वातकोपनैर्नासातरुणास्थिन विघट्टिते वायुः क्रुद्धो रुद्धगतिर्भृशं क्षवथुं कुर्यात् । स भृशक्षवः । वायुः सकफो नासास्रोतः शोषयन् कृच्छ्रोच्छ्वासं शूकपूर्णाभनासत्वं कुर्यात्, असौ नासाशोषः । कफरुद्धेन वायुना नासानद्धत्वं नासानाहः, तत्र निश्वासोच्छ्वासरोधात् स्रोतः पिहितमिव स्यात् ।

पित्तेन नासान्तस्त्वङ्मांसपाकस्सदाहशूलो घ्राणपाकाख्यः । कफादच्छजलाभिस्रावो नासास्रावः, स तु निश्यधिकः । कफो नासास्रोतो रुद्ध्वा सघुर्घुरुश्वासं पीनसाधिकवेदनमपीनसं कुर्यात् । तेनास्यावेरिव नासा सदा क्लिन्ना, पिच्छिलपीतघनस्रावा च । रक्तेन नासा दग्धेव स्यात् । स्पर्शासहा धूमाभश्वासा दहतीव च सा दीप्तिः । गळतालुमूले दुष्टैर्मलैर्वासितो वायुः सकफो मुखनासिकात् पूतिर्निर्गच्छेत्, स पूतिनासः । निचयादभिघाताद्वा सशिरोरुग्दाहो नासान्तः पूयासृक्स्रावः पूयरक्ताख्यः । पित्तकफरुद्धेन मरुतान्तः शोषितः कफः पुटतां याति, तत्पुटकम् । नासाजाताशोऽर्बुदानि तदाख्यानि ।

सर्वेषु कृच्छ्रोच्छ्वसनं पीनसं प्रततं क्षुतम् ।
सानुनासिकवादित्वं पूतिनासः शिरोव्यथा ॥ ५९७ ॥
अष्टादशानामित्येषां यापयेद् दुष्टपीनसम् ।
सर्वेषु पीनसेष्वादौ निवातागारगो भवेत् ॥ ५९८ ॥
स्नेहनस्वेदवमनधूमगण्डूषधारणम् ।
वासो गुरूष्णं सुघनं शिरसः परिवेष्टनम् ॥ ५९९ ॥
लध्वम्लस्निग्धलवणमुष्णं भोजनमद्रवम् ।
धन्वमांसगुळक्षीरचणकत्रिकटूत्कटम् ॥ ६०० ॥
यवगोधूमभूयिष्ठं दधिदाडिमसाधितम् ।
बालमूलकजो यूषः कुलत्थोत्थश्च पूजितः ॥ ६०१ ॥
कवोष्णं दशमूलाम्बु जीर्णां वा वारुणीं पिबेत् ।
जिघ्रेच्चोरकतर्कारीवचाजात्युपकुञ्चिकाः ॥ ६०२ ॥

(वाहटे)

पाचनार्थं च गुळार्द्रकक्षीरत्रिकटुकाजमांसमद्याम्लभोजनानि । घृताक्तं सक्तुं धूमं च पिबेत् । पक्वे तु शिरोविरेचनमवपीडनं च युञ्ज्यात् ।

(सङ्ग्रहे)

व्योषताळीसचविकातिन्त्रिणीकाम्लवेतसम् ।
साग्न्यजाजीद्विपलिकमेलात्वक्पत्रपादिकम् ॥ ६०३ ॥

१. 'वाज्युप' इति मुद्रितपाठः ।

जीर्णाद् गुळात्तुलार्द्धेन पक्केन वटकीकृतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ ६०४ ॥

त्यजेत् स्नानं शुचं क्रोधं भृशं शय्यां हिमं जलम् ॥ ६०५ ॥
(वाहटे)

मण्डूकपर्णीमरिचोद्भवं वा महौषधोत्थं लशुनोद्भवं वा ।
स्यात् पीनसे व्योषभवं कषायं पथ्यामृतानागरदारुजं वा ॥
(सिद्धयोगे)

प्रतिवापितविश्वनिशाकर्षं सलिलन्तु नालिकेरस्य ।
पीतं शमयति सद्यः पीनसमतिनिस्रुतासारम् ॥ ६०७ ॥
(काञ्चीपुरवासी)

तामलक्यभयाकृष्णाचित्रकैः समहौषधैः ।
क्वाथः पीनसदुर्नामशोषशूलाग्निमान्द्यजित् ॥ ६०८ ॥
(कृष्णात्रेये)

कवोष्णं दशमूलाम्बु सकणं पीनसी पिबेत् ।
अथवा रजनीक्वाथं पिप्पलीक्षौद्रसंयुतम् ॥ ६०९ ॥
(तन्त्रान्तरे)

रजनीनागरोद्भूतः क्वाथः कृष्णारजोन्वितः ।
प्रतिश्यायप्रमेहाग्निमान्द्यत्वग्विकृतिं जयेत् ॥ ६१० ॥
(दीपनीये)

निदिग्धिकां समरिचां क्वाथयित्वा पिबेन्नरः ।
निदिग्धिकामृताशुण्ठीक्वाथं वा पीनसी पिबेत् ॥ ६११ ॥
शुद्धशुण्ठीशृतं वापि पिप्पलीचूर्णसंयुतम् ।
(वृद्ध-)
वत्सकादिगणक्वाथं पिबेत् पीनसनाशनम् ॥ ६१२ ॥
दध्ना भोजनमश्नीयात् गुळार्द्रव्योषसंयुतम् ॥ ६१३ ॥
सद्य एतेन योगेन प्रतिश्यायं प्रशाम्यति ।

प्रातः कटुत्रिकयुतान्यभयात्रयाणां
चूर्णानि तैलसहितान्युपयुज्य पश्चात् ।
जिघ्रेत् सितेतरयवानिकपोट्टलानि
जीवेच्चिराय परिमुच्य स पीनसानि ॥ ६१४ ॥
(हारीते)

पिबेद्वातप्रतिश्याय सर्पिर्वातघ्नसाधितम् ।
पटुपञ्चकसिद्धं वा विदार्यादिगणेन वा ॥ ६१५ ॥

(वाहटे)

महापद्मपलं वा नागरं वा पयसा पिबेत् । कृष्णादशमूलशुण्ठी यवैरण्डमूलक्वाथसिद्धेन पयसा उत्तमाङ्गं स्वेदयेत् । ससैन्धवं सर्पिर्वा शिरोविरेचनं च ।

(सङ्क्षेद)

स्वेदनस्यादिकां कुर्याच्चिकित्सामर्दितोदिताम् ।
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥ ६१६ ॥

परिषेकान् प्रदेहांश्च शीतैः कुर्वीत शीतळान् ।
कफजे लङ्घनं लेपः शिरसो गौरसर्षपैः ॥ ६१७ ॥

(वाहटे)

ततस्तीक्ष्णधूमकवलयवान्नचणकप्रायाहारनाडीस्वेदैरुपाचरेत् । तैलाप्लुतो नागरचूर्णानुविद्धो मुद्ग आहारः । यथासात्म्यं च रूक्ष-तीक्ष्णोष्णम् ।

कटुतीक्ष्णयुतैर्नस्यैः कवळैः सर्वजं जयेत् ।

तीक्ष्णानि च निरूहानुवासनानि । अरिष्टांश्च पानार्थम् । एवमप्यशान्तौ हिङ्गुक्षारामरदारुविपक्वं घृतं मांसरसानुपानं पिबेत् । पिप्पलीवर्द्धमानं चोपयुञ्जीत ।

रक्तजे पैत्तिको रक्तपित्तोक्तश्च विधिः ।

(संग्रहे)

क्रियाभिराभिः प्रशमं नोपगच्छेद् यदा ततः ॥ ६१८ ॥
वयः कालं बलं वीक्ष्य सिरावेधमुपाचरेत् ।

(कृष्णात्रेये)

यक्ष्मक्रिमिक्रमं कुर्वन्यापयेद्दुष्टपीनसम् ॥ ६१९ ॥

(वाहटे)

क्रिमिघ्नैश्च योगैर्यापयेत् ।

(संग्रहे)

सर्पिर्मुस्ताहरिद्रानागरयवक्षारपूतीककरञ्ज हरेणुकाभिरजाविगोमूत्र-दधिभिश्च सिद्धं पाययेत् दुष्टप्रतिश्याये ॥

(महायाने संग्रहे च)

क्षवथौ पुटकाख्ये च तीक्ष्णैः प्रधमनं हितम् ।
शुण्ठीकुष्ठकणावेल्लद्राक्षाकल्ककषायवत् ॥ ६२० ॥
साधितं तैलमाज्यं वा नस्यं क्षवपुटप्रणुत् ॥ ६२१ ॥

(बाहट)

नासाशोषे क्षीरसर्पिः प्रधानं
सिद्धं तैलं चाणुकल्पेन नस्ये ।
सार्पिष्पानं जाङ्गलैर्भोजनं च
यच्चान्यत् स्याद्वै क्लेदि शीतं हितं च ॥ ६२२ ॥

(सौश्रुते)

नासाशोषे बलातैलं पानादौ भोजनं रसैः ।
स्निग्धो धूमस्तथा स्वेदो नासानाहेऽप्ययं विधिः ॥ ६२३ ॥

(बाहटे)

नासापाके पित्तहृत् संविधानं
कार्यं सर्वं बाह्यमाभ्यन्तरं वा ।
हृत्वा रक्तं क्षीरवृक्षत्वचश्च
साज्याः सेकाः योजनीयाश्च लेपाः ॥ ६२४ ॥

(सौश्रुते)

पाके दीप्तौ च पित्तघ्नं तीक्ष्णं नस्यादिकं स्रुतौ ।
कफपीनसवत् पूतिनासापीनसयोः क्रिया ॥ ६२५ ॥
लाक्षाकरञ्जमरिचवेल्लाहिङ्गुकणागुळैः ।
अविमूत्रद्रुतैर्नस्यं कारयेद् वमने कृते ॥ ६२६ ॥
शिग्रुसिंहीनिकुम्भानां बीजैः सव्योपसैन्धवैः ।
सवेल्लसुरसैस्तैलं नावनं परमं हितम् ॥ ६२७ ॥

(बाहटे)

पूर्वोद्दिष्टे पूतिनासे च जन्तोः
स्नेहस्वेदौ स्रंसनं छर्दनं च ।
युक्तं भक्तं तीक्ष्णमम्लं लघु स्यात्
उष्णं तोयं धूमपानं च काले ॥ ६२८ ॥

तुळसीस्वरसे सिद्धं कुन्दुरुष्कसमन्वितम् ।
पूतिनासं भृशं हन्यात्तैलं दुष्टजलस्रुतिम् ॥ ६२९ ॥
गृञ्जनस्वरसे सिद्धं मुनिवृक्षरसेन वा ।
तैलं सिद्धं ससिन्धूत्थं पूतिनासमपोहति ॥ ६३० ॥

(हारिश्चन्द्रे)

सुरसव्योषकुष्ठैस्तु लाक्षाकट्फलयोजितैः ।
सविळङ्गं पचेत्तैलं सार्षपं पूतिनासजित् ॥ ६३१ ॥

(विन्दुसारे)

विळङ्गसिन्धुयष्ट्याह्वैर्देवदारुसमन्वितैः ।
पचेन्नासामयार्तिघ्नं तैलं नस्यप्रयोगतः ॥ ६३२ ॥
पूयरक्ते नवे कुर्याद्रक्तपीनसवत् क्रमम् ।
अतिप्रवृद्धे नाडीवत् ॥ ६३३ ॥

(बाहटे)

अर्शांसि विधिवत्क्षारेणाग्निना वा दहेत् । स्थूलानि तु शस्त्रेण स्पृष्ट्वा दाहानन्तरं शीतां क्रियां योजयेत् ।

(संग्रहे)

निकुम्भकुम्भासिन्धूत्थमनोह्वालवणाग्निकैः ।
कल्कितैर्घृतमध्वक्तां घ्राणे वर्त्तिं प्रयोजयेत् ॥ ६३४ ॥
शिग्र्वादिनावनं चात्र पूतिनासोदितं भजेत् ।

(बाहटे)

चित्रकाग्निकसिन्धूत्थैर्बीजैश्च सुरसोद्भवैः ॥ ६३५ ॥
कण्टकारिसमायुक्तैरर्कक्षीरसमन्वितैः ।
चविकासहितैस्तुल्यैर्गोमूत्रपरिपेषितैः ॥ ६३६ ॥
घ्राणोत्थानि हरेत्तैलमर्शांसि परिसाधितम् ।

(बिन्दुसारे)

पक्वं सखण्डगण्डीरवाकुचीव्योषधान्यकैः ॥ ६३७ ॥
चव्यक्षारयवक्षारवह्निक्षारैस्तु साधितम् ।
घ्राणजानि हरेत्तैलमर्शांस्यभ्यञ्जनाद् ध्रुवम् ॥ ६३८ ॥

अर्बुदं बळिशेन गृहीत्वा मण्डलाग्रेण मूले समं छिन्द्यात् । [illegible]न्ते चोच्छिङ्खयेत् । चेलप्रमृष्टं च व्रणं शलाकया दहेत् तैलेन वा ।

अग्निदग्धं म्रक्षयेत् , ततः शिशिरैः प्रदेहैः । मांसमेदःसन्निपातार्शोऽर्बुदानि चैवं साधयेदिति ।

हीनच्छेदात्पुनर्वृद्धिरतिच्छेदात्स्वरक्षयः ।
गन्धाज्ञानं च वीसर्पो मूर्छा छिन्द्यादतः समम् ॥ ६३९ ॥
(संग्रहे)

निर्गुण्ड्या रसपात्रे तु तैलप्रस्थं विपाचयेत् ।
त्रिगन्धव्योपवर्षाभूजीरकद्वयसैन्धवैः ॥ ६४० ॥
मयूरबीजसहितैराजक्षीरेण तच्छृतम् ।
नस्याभ्यङ्गाच्छिरःकर्णनासामयहरं परम् ॥ ६४१ ॥
(तन्त्रान्तरे)

हिङ्गुव्योषविडङ्गकट्फलवराकुक्नीक्ष्णगन्धान्वितैः
द्राक्षाहैमवतीकलिङ्गकयवैः पुष्पैस्तथा सौरसैः ।
इत्येभिः कटुतैलमेतदनले मन्दे समूत्रं भृतं
पीतं नासिकया यथाविधि भवेन्नासामयेभ्यो हितम् ॥
(योगयुक्तौ)

इति नासारोगचिकित्सा ।

मत्स्यमाहिषवाराहपिशितामकमूलकम् ।
माषसूपदधिक्षीरशुक्तेक्षुरसफाणितम् ॥ ६४३ ॥
अवाक्शय्यां च भजतो द्विषतो दन्तधावनम् ।
धूमच्छर्दनगण्डूषानुचितं च सिराव्यधम् ॥ ६४४ ॥
क्रुद्धाः श्लेष्मोल्बणाः दोषाः कुर्वन्त्यन्तर्मुखे गदान् ।

पृथग्दोषैः निचयेन रक्तेन मांसेन क्षतेन मेदसा चाष्टावोष्ठकोपास्तथा खण्डोष्ठार्बुदजलार्बुदा इत्येकादशोष्ठगता रोगाः । वाताद् द्विधाकृत ओष्ठः खण्डोष्ठः । वातजोष्ठकोपे स्तब्धौ महारुजौ कृष्णकर्कशावोष्ठौ । पित्तजे तीक्ष्णारुहौ । सर्षपाभपिटकाचितौ सक्लेदौ । कफजे शीतासहौ शूनौ सवर्णपिटकाचितौ च । निचयादनेकवर्णौ पूतिस्रुतीविषमपाकिनौ च । रक्तजे रक्ताभौ सरक्तस्रुती च । अत्र रक्तक्षयाद् खर्जूराभमर्बुदं स्यात् । मांसजे मांसपिण्डाभौ सक्रिमी

च । मेदोजे मृदू सशोफकण्डूतैलाभक्लेदौ । क्षतजे ग्रथितौ पाटनयुतौ कण्डूलौ च । वातकफादोष्ठे जलबुद्बुदाभं जलार्बुदम् । अत्र मांसरक्तोष्ठावर्बुदं निचयोष्ठकोपं च वर्जयेत् । शेषान् शस्त्रौषधैः साधयेत् ।

खण्डोष्ठस्य विलिख्यान्तौ स्यूत्वा व्रणवदाचरेत् ॥ ६४५ ॥
यष्टिज्योतिष्मतीलोध्रश्रावणीशारिवोत्पलैः ।

पटोल्या काकमाच्या च तैलमभ्यञ्जनं पचेत् ॥ ६४६ ॥

(बाहटे)

वातज ओष्ठकोपे देवदारुगुग्गुलुसर्जरसमधूच्छिष्टसिद्धेन महास्नेहेनाभ्यङ्गः । तेनैव समधुकचूर्णेन प्रतिसारणम् । तदभ्यक्तेन पिचुना प्रच्छादनम् । एरण्डपल्लवैः क्षीरोत्क्वथितैः नाडीस्वेदः । खण्डोष्ठोक्तं नावनं शिरोऽभ्यङ्गश्च । पित्तोत्थेऽभिघातजे च जलौकोभिर्विस्रावणम् । पत्तङ्गयष्टीछिन्नरुहाविपक्वं सर्पिरभ्यङ्गः ।

(संग्रहे)

तैः सिद्धं घृतमिति ।

(बाहटे)

रक्तजेऽप्यचिरोत्थिते पैत्तिकवत् प्रतिकुर्यात् । कफजे जलौकोभिः शाकादिपत्रैर्वा रक्तं विस्राव्य व्योषपाठायवक्षारस्वर्जिकाक्षारैः सक्षौद्रैः प्रतिसारयेत् ।

(संग्रहे)

धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिदः ।
स्विन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना ॥ ६४७ ॥

प्रियङ्गुलोध्रत्रिफलामाक्षिकैः प्रतिसारयेत् ।
सक्षौद्रैर्घर्षणं तीक्ष्णैः छिन्ने शुद्धे जलार्बुदे ॥ ६४८ ॥

अवगाढेऽतिवृद्धे वा क्षारोऽग्निर्वा प्रतिक्रिया ।

(बाहटे)

हरिद्रालोध्रमधुकमालतीद्विहरेणुके ॥ ६४९ ॥
तगरैर्विपक्वं तैलं रोपणम् ।

(संग्रहे)

अज्झटानिम्बनिर्गुण्डीस्वरसेन विपाचितम् ॥ ६५० ॥
निशाकल्कयुतं तैलमोष्ठरोगविनाशनम् ।

(तन्त्रान्तरे)

गण्डालजी स्थिरः शोफो गण्डे दाहरुजान्वितः ॥ ६५१ ॥

गण्डालजीमपक्वां शोफवत्, विदग्धामुपनाह्य, पक्वां विदार्य व्रणवत् साधयेत् ।

(संग्रहे)

शीतदन्तदन्तहर्षदन्तभेददन्तचालकराळाधिदन्तदन्तशर्कराकपालिकाश्यावक्रिमिदन्ता इति दश दन्तगता रोगाः । तत्र वातादुष्णसहाशीताधिकरुजो दन्ताः स्युः, स शीतदन्तः । दन्तहर्षे शीतासहा अम्लाशनात् सरुजश्चलिता इव द्विजाः । दन्तभेदे सतोदभेदस्फुटना दन्ताः । भक्षणादीतिव्यथैश्चलद्भिर्दन्तैश्चालः । कराळदन्तोद्गमः कराळदन्तः । सन्निवेशादधिकदन्तस्तदाख्यः । तस्मिन् जायमाने रुक् स्यात् । जाते शाम्यति । दन्ते मलः कफो वा वातशुष्कः पूतिः, स्थिरो दन्तशर्कराख्यः । सा चोपेक्षयाऽणुशो दन्तकपालशातनी दन्तकपालिका । वातरक्तपित्तैः श्यावत्वं गतो दन्तः श्यावदन्तः । दोषैरुदिक्तवातैर्दन्तमज्जशोषणाद्दन्तर्जाते सुषिरेऽन्नमलपूरिते, ततः सूक्ष्मक्रिमिप्रादुर्भावादहेतुतीव्रार्तिशमः कृष्णश्चलो दन्तः स्यात् । उद्धृते पूयरक्तस्रुक् च । स क्रिमिदन्ताख्यः । तेषु श्यावदन्तकराळौ वर्ज्यौ । याप्यो हर्षः स्यात् । दशने स्फुटिते दन्तभेदो साध्यो भवेदन्यथा याप्यः ।

स्विन्नस्य शीतदन्तस्य पालिं विलिखितां दहेत् ।
तैलेन प्रतिसार्या च सक्षौद्रघनसैन्धवैः ॥ ६५२ ॥

डाडिमत्वग्वरातार्क्ष्यकान्ताजम्ब्वस्थिनागरैः ।
कवळः क्षीरिणां क्वाथैरणुतैलं च नावनम् ॥ ६५३ ॥

दन्तहर्षे तथा भेदे सर्वा वातहराः क्रियाः ।
तिलयष्टीमधुश्रृतं क्षीरं गण्डूषधारणम् ॥ ६५४ ॥

(बाहटे)

स्निग्धाश्च नस्यादयः ।

(संग्रहे)

सस्नेहं दशमूलाम्बुगण्डूषः प्रचलद्द्विजे।
तुत्थलोध्रकणा श्रेष्ठा पत्तङ्गमधुघर्षणम् ॥ ६५५ ॥
स्निग्धाः शील्याः यथावस्थं नस्यान्नकबळादयः।

(वाहटे)

चन्दनपद्मकमधुकविदारिकशेरुनीलोत्पलमृद्वीकाजीवकर्षभशर्कराणां प्रत्येकं पलेन क्षीरेण च मांसरसद्विगुणेन तैलप्रस्थं विपाचयेत्। एतन्नस्यगण्डूषप्रयोगात् परं दशननयनश्रवणबलकरम्।

(सङ्ग्रहे)

तिक्ताब्दतेजनीपाठानिशायुक्लोध्रकुष्ठजम् ॥ ६५६ ॥
ससमङ्गारजो घर्षात् दन्तकण्ड्वस्रतोदजित्।

(सिद्धसारे)

दन्तहर्षे दन्तचाले मुखरोगे च वातिके ॥ ६५७ ॥
सुखोष्णमथ शीतं वा तिलकल्कोदकं हितम्।
खदिरायोवरापार्थमदयन्त्यहिमारकैः ॥ ६५८ ॥
गण्डूषोऽम्बुश्रृतैर्धार्यो दुर्बलद्विजशान्तये।

(बाहटे)

मदिराखदिरासनलोहमल-त्रिफलाककुभैरारिमेदयुतैः।
सलिलं क्वथितं तिलतैलयुतं दृढयत्यचिराच्चलितं दशनम् ॥

(तन्त्रान्तरे)

तैलं पक्वं समतलपोटरसं नाळिकेरदुग्धभवम्।
वयसि गळितेऽपि दन्ता गण्डूषयतो न विगळन्ति ॥ ६६० ॥

(काञ्चीपुरवासी)

अधिदन्तकमालिप्तं यदा क्षारेण जर्जरम्।
क्रिमिदन्तमिवोत्पाट्य तद्वच्चोपचरेत्ततः ॥ ६६१ ॥
अनवास्थितरक्ते च दग्धे व्रण इव क्रिया।
अहिंसन् दन्तमूलानि दन्तेभ्यः शर्करां हरेत् ॥ ६६२ ॥
क्षारचूर्णैर्मधुयुतैस्ततश्च प्रतिसारयेत्।

(बाहटे)

मूषाकर्परपाटलीत्वक्चूर्णेन प्रतिसारणम् ॥ ६६३ ॥
सदा च दन्तधावनादीन् सेवेत।

(संग्रहे)

कपालिकायामप्येवं हर्षोक्तं च समाचरेत् ॥ ६६४ ॥
जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ।
स्निग्धैश्चालेपगण्डूषनस्याहारैश्चलापहैः ॥ ६६५ ॥
गुळेन पूर्णं सुषिरं मधूच्छिष्टेन वा दहेत् ।
सप्तच्छदार्कक्षीराभ्यां पूरणं क्रिमिशूलनुत् ॥ ६६६ ॥
हिङ्गुकट्फलकासीसस्वर्चिकं कुष्ठवेल्लजम् ।
रजो रुजं जयत्याशु वस्त्रस्थं दशने धृतम् ॥ ६६७ ॥
(वाहटे)

एभिरेव च सिद्धं तैलं गण्डूषः । दृढगूढमूलमांसे सरुजे विस्रावणम् ।
(संग्रहे)

पाठादार्वीपीतिकारुकूसमङ्गामुस्तातिक्तालोध्रतेजोवतीनाम् ।
चूर्णं क्षौद्रैर्घर्षणं दन्तमांसं पाकास्रावं तोदकण्डूं च हन्ति ॥६६८॥

क्षौद्राज्यकृष्णा वदनेन धार्या शूले द्विजानामथ वाकुचीनाम् ।
कल्कं तथा हिङ्गुसुखोष्णमत्र चाले द्विजानां बकुलास्थि तद्वत् ॥
(योगामृतम्)

अजाजी शृङ्गिबेरं च विळङ्गानि च सैन्धवम् ।
मधुतैलेन संपेष्य दन्ताग्रे सन्निधापयेत् ॥ ६७० ॥
गण्डीरमाग्निना दग्ध्वा भस्म संगृह्य बुद्धिमान् ।
दन्तान्तरं मर्दयेत दन्तशूलविनाशनम् ॥ ६७१ ॥
फलैर्बकुलजैर्दग्धैः पिण्याकेन तथैव च ।
उपनाहेन दन्तानां सद्यः शूलं विनश्यति ॥ ६७२ ॥
(हारिश्चन्द्रे)

देवदारु च निर्गुण्डीं शिग्रुमूलं पुनर्नवम् ।
अरिमेदत्वचं शुण्ठीं लशुनं सैन्धवं तथा ॥ ६७३ ॥
कल्कीकृत्य पृथक् सद्यो दन्तमूलेन धारयेत् ।
दन्तरोगेषु सर्वेषु श्रेष्ठं शूले विशेषतः ॥ ६७४ ॥
सिद्धार्थकैलात्रिकटुधान्यदीप्यकसैन्धवात् ।
क्षारपथ्यायुतात् कल्कं चूर्णं वा धारयेन्मुखे ॥ ६७५ ॥

कोष्णं शुक्तेन मूत्रैर्वा मण्डेनोष्णोदकेन वा ।
दन्तशूलं हरेद् घोरं विद्रधिं पिळकार्बुदान् ॥ ६७६ ॥
अधिजिह्वोपजिह्वे च श्लेष्मास्रावाधिमांसकम् ॥

(योगे)

अतिमहति द्विजशूले तदुपरि संस्थाप्य रामठं विदहेत् ।
रदमिह गण्डीरोत्थक्षारेण विमर्दयेदथवा ॥ ६७७ ॥

(सिद्धयोगे)

तलपोटकतैलम् ।

रामठलवणोपेतं तैलं यन्नाळिकेरस्य ।
तलपोटकरससिद्धं चलरदशूलापहं सद्यः ॥ ६७८ ॥

(तन्त्रान्तरे)

गण्डूषः ।

तोयेन शुण्ठीपक्केन कल्कीकृत्य तिलानथ ।
तेन कोष्णेन गण्डूषो विधेयो दशनार्त्तिषु ॥ ६७९ ॥

(योगे)

नस्यम् ।

नस्यं जीमूतोत्थैः सलिलकणैः पञ्चषैः कृतं विदुषाम् ।
विजयालय इव निखिलां द्विजपीडामाशु नाशयति ॥ ६८० ॥

(काञ्चीपुरवासी)

दन्तमुद्धृत्य दाहः ।

चलन्तं वा पतन्तं वा बलवद्वेदनान्वितम् ।
दन्तमुद्धृत्य तन्मूलं तैलाग्निभ्यां विनिर्दहेत् ॥ ६८१ ॥

(महायाने - सिद्धसारे च)

दन्तोद्धरणविधिः ।

क्रियायोगैर्बहुविधैरित्यशान्तरुजं भृशम् ।
दृढमप्युद्धरेद्दन्तं पूर्वं मूलाद् विमोक्षितम् ॥ ६८२ ॥
सन्दंशकेन लघुना दन्तनिर्घातनेन वा ।

गण्डूषादयः ।

तैलं सयष्ट्याह्वरजो गण्डूषो मधु वा ततः ॥ ६८३ ॥

ततो विदारीयष्टयाह्वशृङ्गाटककशेरुभिः ।
तैलं दशगुणक्षीरसिद्धं युञ्जीत नावनम् ॥ ६८४ ॥

दन्तुद्धरणम् ।

कृशदुर्बलवृद्धानां वातार्त्तानां च नोद्धरेत् ।
नोद्धरेच्चोत्तरं दन्तं बहूपद्रवकृद्धि सः ॥ ६८५ ॥
एषामप्युद्धृते स्निग्धः स्वादुः शीतक्रमो हितः ॥

(वाग्भटे)

हनुमोक्षसमुद्दिष्टां कुर्यादर्दितवत् क्रियाम् ॥ ६८६ ॥
उद्धृते चोत्तरे दन्ते समूले स्थिरबन्धने ।
रक्तातियोगात् पूर्वोक्ता रोगा घोरा भवन्ति हि ॥ ६८७ ॥
काणः संजायते जन्तुरर्दितं चास्य जायते ।
चलमप्युत्तरं दन्तमतो नापहरेद् भिषक् ॥ ६८८ ॥

दन्तरोगिणां वर्ज्यानि ।

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ ६८९ ॥

(पाठशुद्धौ)

दन्तमूलगताः रोगाः ।

सीतादोपकुशदन्तपुप्पुटदन्तविद्रधिसुषिरमहासुषिराधिमांसकविदर्भास्तथा पूयवहाः पञ्चनाड्यः इति त्रयोदश दन्तमूलगता रोगाः । कफासृग्भ्यां दन्तमांसं पूतिमृदुक्लिन्नासितमकस्मादस्रवाहि शीर्यते च स सीतादः । पित्तासृगुत्थः पाक उपकुशाख्यः । तत्र दन्तमांसं दह्यते सोत्सेधं सकण्डुरक्तं रक्तवाहि च, दन्ताश्च चलाः मन्दरुजाः, मुखं च पूति स्यात् । द्वयोस्त्रिषु वा दन्तेषु कफासृग्भ्यां कोलास्थिनिभः शीघ्रपाकिः[1] तीव्ररुक् शोफो दन्तपुप्पुटकाख्यः । दन्तमांसे सास्रैरन्तर्बहिर्मलैः सरुग्दाहः, पक्वे पूयास्रावः शोफो दन्तविद्रधिः । दन्तमूले पित्तरक्तजः सरुजो लालास्रावी मांसशातनः शोफः सुषिराख्यः । स एव ससन्निपातज्वरो वा शीर्णदन्तवर्द्धनः[2] सपूयास्रस्रुतिः महा-

१. 'पाकी' २. 'बन्धनः' ख. पाठः.

सुषिराख्यः । कफेन दन्तान्ते हनुकर्णरुजाकरो भोजनविघातकः कीलनिभः शोफोऽधिमांसाख्यः । दन्तमांसेऽभिघातजः ससंरम्भो दन्तचालनो महाञ्छोफो विदर्भः । साध्यदन्तमांसरोगोपेक्षया सूक्ष्मा पूयस्राविणी त्वङ्मांसास्थिभेदनी गतिः स्यात् ता दन्तनाड्यः पृथग्दोषनिचयशल्यनिमित्ताः पञ्च, नाडीविज्ञाननिर्दिष्टैर्लिङ्गैर्विज्ञेयाः तेष्वसाध्यो महासुषिरः, सन्निपातजा नाडी च । ।

तेषां चिकित्सा ।

विस्राविताल्ले सीतादे सक्षौद्रैः प्रतिसारणम् ।
मुस्तार्जुनत्वक्त्रिफलाफालिनीताक्ष्यनागरैः ॥ ६९० ॥
तत्क्वाथः कवलो नस्यं तैलं मधुरसाधितम् ।

(वाहटे)

तथा व्योषयवक्षारमनःशिलासैन्धवदार्वीत्वग्भिः, एभिरेव चौषधैर्गुलिका सर्वमुखरोगहराः ।

सीतादे स्रुतरक्ते तु तोये नागरसर्षपान् ।
निष्क्वाथ्य त्रिफलामुस्ता गण्डूषः सरसांजनः ॥ ६९१ ॥
प्रियङ्गवश्च मुस्तं च त्रिफला च प्रलेपनम् ।

(पाठशुद्धौ)

उपकुशस्य चिकित्सा ।

दन्तमांसान्युपकुशे स्विन्नान्युष्णाम्बुधारणैः ॥ ६९२ ॥
मण्डलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत् ।
ततश्च प्रतिसार्याणि घृतमण्डमधुद्रुतैः ॥ ६९३ ॥
लाक्षाप्रियङ्गुपत्तङ्गलवणोत्तमगैरिकैः ।
सकुष्ठशुण्ठीमरिचयष्टीमधुरसाञ्जनैः ॥ ६९४ ॥
सुखोष्णो घृतमण्डोऽनु तैलं वा कवळग्रहः ।
घृतं च मधुरैः सिद्धं हितं कवळनस्ययोः ॥ ६९५ ॥

(वाहट)

पुनः पुनश्च रुधिरावसेकः ।

(सङ्ग्रहे)

क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत् ।
पिप्पलीं सर्षपाञ्छ्वेतान्नागरं नैचुळं फलम् ॥ ६९६ ॥
सुखोदकेन संसृष्य कबळं चापि धारयेत् ॥

(पाठशुद्धौ)

दन्तपुप्पुटस्य चिकित्सा ।

दन्तपुप्पुटके स्विन्ने छिन्ने भिन्ने विलेखिते ।
यष्टयाह्वस्वर्जिकाशुण्ठीसैन्धवैः प्रतिसारणम् ॥ ६९७ ॥

(वाहटे)

दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् ।
सपञ्चलवणक्षारं सक्षौद्रं प्रतिसारणम् ॥ ६९८ ॥

(पाठशुद्धौ)

दन्तविद्रधिचिकित्सा ।

विद्रधौ कटुतीक्ष्णोष्णरूक्षैः कबळलेपनम् ।
घर्षणं कटुकाकुष्ठवृश्चिकाळीयवोद्भवैः ॥ ६९९ ॥
रक्षेत् पाकं हिमैः, पक्वः पाट्यो, दाल्योऽवगाढकः ॥

(वाहटे)

त्रिफलासुमनोरिष्टक्काथो गण्डूषः । यष्टीमधुकसिद्धः सर्पिर्मण्डो नस्यम् ।

(सङ्ग्रहे)

दन्तसुषिरस्य चिकित्सा ।

सौषिरे छिन्नलिखिते सक्षौद्रैः प्रतिसारणम् ।
लोध्रमुस्तमिसिश्रेष्ठाताक्ष्र्यपत्तङ्गकिंशुकैः ॥ ७०० ॥
सकट्फलैः कषायैश्च तेषां गण्डूष इष्यते ।
यष्टीलोध्रोत्पलानन्ताशारिवागरुचन्दनैः ॥ ७०१ ॥
सगैरिकसितापुण्ड्रैः सिद्धं तैलं च नावनम् ।
छित्वाधिमांसकं चूर्णैः सक्षौद्रैः प्रतिसारयेत् ॥ ७०२ ॥

१. 'सर्षपांश्चैवतगरं' ख. पाठः.

वचातेजोवतीपाठास्वर्जिकायावशूकजैः।
पटोलनिम्बत्रिफलाकषायः कवलो हितः॥ ७०३॥

(वाहटे)

अधिमांसस्य चिकित्सा।

अधिमांसकमचिरोत्थितं स्रावयेत्। विवृद्धन्तु बलिशेन मुचुण्ड्या वा गृहीत्वा, मण्डलाग्रेण छित्त्वा, तीक्ष्णैः प्रतिसारयेत्। कटुतीक्ष्णैः कवलस्तैलं वा यवक्षारावचूर्णितम्।

(सङ्ग्रहे)

क्षौद्रद्वितीयाः पिप्पल्यः कवलाश्चात्र कीर्तिताः॥

(पाठशुद्धौ)

विदर्भचिकित्सा।

विदर्भे दन्तमूलानि मण्डलाग्रेण शोधयेत्।
क्षारं युज्यात्ततो नस्यं गण्डूषादि च शीतलम्॥ ७०४॥

(वाहटे)

दन्तनाडीचिकित्सा।

दन्तनाडीमेषयित्वा, संवृतां शस्त्रेण विवृतयित्वा तदाश्रितं दन्तमशेषमुद्धृत्य शलाकया दहेत्। कुब्जामवगाढामनेकगतिं वा गुळमधुसिक्थान्यतमपूर्णाम्।

(संग्रहे)

धावनं जातिमदनखदिरस्वादुकण्टकैः।
क्षीरिवृक्षाम्बुगण्डूषो नस्यं तैलं च तच्छृतम्॥ ७०५॥

(वाहटे)

नाडीशोधनतैलम्।

दन्तीखदिरसारमदनस्वादुकण्टकक्काथे लोध्रवालकोशीरदेवदारुमञ्जिष्ठामधुककल्कविपक्कं तैलं सर्षपतैलं वा नाडीशोधनरोपणम्। प्रपौण्डरीकहरिद्राद्वयमधुकमधूच्छिष्टलोध्रकट्वङ्गशर्करापद्मकचन्दनमूर्वोपोदकावास्तुकतण्डुलीयकमञ्जिष्ठाम्लिकाकपित्थपत्रैर्वा। धूमासृक्स्रावणनावनानि शीलयेत्। नस्यं च विळङ्गमधुकमुस्तानिर्गुण्डीखदिरमञ्जिष्ठोशीरसुरतरुसिद्धं तैलम्। नाडीसाधनं चेक्षेत।

(संग्रहे)

पाठादिचूर्णम् ।

पाठादार्वीत्वक्कुष्ठमुस्तासमङ्गा-
तिक्तापीताङ्गीलोध्रतेजोवतीनाम् ।
चूर्णः सक्षौद्रो दन्तमांसार्त्तिकण्डू-
पाकास्रावाणां नाशनो घर्षणेन ॥ ७०६ ॥

(वाहटे)

(एतत् सङ्ग्रहे सीतादचिकित्सिते तेजोवतीत्यादि पठितम् ।)

नागरादितैलम् ।

नागरस्य तुले द्वे स्तः स्यात्तुला चित्रकस्य च ।
देवदारु तदर्धं स्यात् तदर्धं द्विकरञ्जकम् ॥ ७०७ ॥
मुस्तारिमेदत्रिफला छत्रीदन्त्यर्कगुग्गुलु ।
तदर्धमिति संगृह्य पचेद् द्रोणद्वयेऽम्भसः ॥ ७०८ ॥
तैलाढकं विपक्तव्यं कार्षिकैः कल्कितैरिमैः ।
शटीपुष्करशार्ङ्गेष्टाहपुषापिप्पलीत्रयैः ॥ ७०९ ॥
भार्ङ्गीरास्नामधूच्छिष्टनिशाद्वयवचाम्बुदैः ।
चतुर्जातकमञ्जिष्ठाचन्दनागरुपद्मकैः ॥ ७१० ॥
मांसीलोध्रवराकुष्ठैः क्षीरद्विगुणसंयुतम् ।
तत् पक्वं विनिहन्त्याशु मुखजान् सकलामयान् ॥ ७११ ॥
पानाभ्यञ्जनगण्डूषनस्योन्मर्दनवास्तिभिः ।
पतितानां च दन्तानां भूयो बध्नाति तत्पदम् ॥ ७१२ ॥

अरिमेदक्षीरिवृक्षतैलम् ।

अरिमेदत्वचो ग्राह्यं नवं पलशतं भवेत् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षवल्काच्छतं तथा ॥ ७१३ ॥
चतुर्द्रोणे जले पक्त्वा चतुर्भागावशेषिते ।
तैलाढकं पचेत्तत्र कार्षिकैः कल्कितैरिमैः ॥ ७१४ ॥
यष्टीत्रिजातमञ्जिष्ठागायत्रीलोध्रकट्फलैः ।
क्षीरिवृक्षारिमेदत्वङ्मुस्तागरुहिमद्वयैः ॥ ७१५ ॥
कर्पूरजातीतक्कोलमांसीधातार्कगैरिकैः ।
मृणालमिसिवैदेहीपद्मकेसरकुङ्कुमैः ॥ ७१६ ॥

लाक्षासमङ्गाबृहतीविल्वमध्यसुरद्रुमैः ।
शैलेयसरळस्पृक्कापलाशरजनीद्वयैः ॥ ७१७ ॥
प्रियङ्गुतेजसीपार्थमदयन्तीफलत्रयैः ।
कालेयपुष्करजटाब्धाग्रीमदनसंयुतैः ॥ ७१८ ॥
जाते चिक्कणपाके तु परिस्राव्य निधापयेत् ।
तन्नस्यपानगण्डूषवस्त्यभ्यङ्गेषु योजयेत् ॥ ७१९ ॥
मुखजानामयान् हन्ति विशेषाद् दन्तरोगजित् ।
जिह्वागण्डोष्ठरोगेषु चलदन्ते च शस्यते ॥ ७२० ॥
मुखोत्थितानां सर्वेषां व्रणानां रोपणं परम् ॥

(तन्त्रान्तरे)

अरिमेदादितैलम् ।

अरिमेदत्वक्पलशतमभिनवमाहृत्य खण्डशः कृत्वा ।
तोयाढकैश्चतुर्भिः प्रक्काथ्य चतुर्थशेषेण ॥ ७२१ ॥
क्काथेन भिषक्मतिमान् तैलस्यार्धाढकं शनैर्विपचेत् ।
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥ ७२२ ॥
अरिमेदमरिचकट्फललाक्षान्यग्रोधतोयदैलानाम् ।
कर्पूरागरुपद्मकलवङ्गतकोलजातीनाम् ॥ ७२३ ॥
पत्तङ्गपत्रगैरिकशतपुष्पाधातकीनाञ्च ।
सिद्धं भिषग् विदध्यादिदं मुखोत्थेषु रोगेषु ॥ ७२४ ॥
परिशीर्णदन्तविद्रधिसौषिरसीताददन्तहर्षेषु ।
क्रिमिदन्तदन्तचलनप्रघृष्टभग्नेषु जीर्णेषु ॥ ७२५ ॥
मुखदौर्गन्ध्येषु तथा प्रागुक्तेष्वामयेषु नृणाम् ।
धार्यं मुखेन मुखजेष्वरुष्षु संरोपणार्थाय ॥ ७२६ ॥

(चाक्षुषे)

अरिमेदलाक्षादितैलम् ।

कुट्टयित्वा पलशतं अरिमेदत्वचो नवम् ।
क्काथयेत्सलिलद्रोणे यावत्पादावशेषितम् ॥ ७२७ ॥

१ 'शरपुङ्ख' इति पाठभेदः । २ 'र्पांसेषु' ख· पाठः·

ततः कल्कीकृतैरेतैः तैलस्यार्धाढकं पचेत् ।
यष्टीमधुकमञ्जिष्ठालोध्रैलामुस्तगैरिकैः ॥ ७२८ ॥
लाक्षारिमेदखदिरवचाकट्वङ्गकट्फलैः ।
कर्पूरनागकुसुमधातकीचन्दनद्वयैः ॥ ७२९ ॥
शारिबापद्मकोशीररजनीद्वयवंशजैः ।
लवङ्गजातीकटुकतक्कोलैः कुष्ठसंयुतैः ॥ ७३० ॥
कार्षिकैश्च पृथक् सिद्धं स्वनुगुप्तं निधापयेत् ।
प्रातः सायं च भुक्त्वा च गण्डूषं धारयेत्ततः ॥ ७३१ ॥
दन्तेषु प्रचलेष्वेतत् विशीर्यत्सु स्फुटत्सु च ।
प्रलूनक्षतमांसेषु दन्तनाळीषु विद्रधौ ॥ ७३२ ॥
विदर्भदन्तोपकुशसुषिरेषु च पूजितम् ।
मुखोत्थितानामयांश्च तैलमेतद् व्यपोहति ॥ ७३३ ॥

प्रभञ्जनं तैलम् ।

नैवृद्धानातिबालाच्च त्वक्तुलामरिमेदकात् ।
द्रोणेऽपां विपचेत् पादशेषेऽस्मिन् क्षीरसंयुतम् ॥ ७३४ ॥
लाक्षारससमं तैलप्रस्थं पिष्टैः पचेदिमैः ।
लोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः ॥ ७३५ ॥
चन्दनोत्पलयष्ट्याह्वैर्धातक्या च पलोन्मितैः ।
एतत्प्रभञ्जनं नाम तैलं गण्डूषधारणात् ॥ ७३६ ॥
हन्ति दन्तामयान् सर्वान् दन्तमूलगतान् व्रणान् ।
अन्यान् मुखोत्थितान् रोगान् कुर्याद् दन्तांश्च सुस्थिरान् ॥ ७३७ ॥

शरपुङ्खतैलम् ।

शरपुङ्खशिफापरिपक्वजले
तिलजं विपचेदभयासहितम् ।

---

१. 'दमरिचवचा' इति पाठभेदः ।

२. 'नवृद्धानातिबालांश्च कवलानवचारयेत् ।
त्वक्तुलामरिमेदस्य द्रोणेऽपां विपचेत् भिषक् ॥
पादशेषे तु तस्मिन् तु द्विगुणक्षीरसंयुतम् ।' इति ख. पाठः

वदनेन धृतं द्विजरोगहरं
वदनामयमाशु हरेदखिलम् ॥ ७३८ ॥
(तन्त्रान्तरे)

मुस्ताक्वाथेऽभयाकल्कसिद्धं तैलं द्विजार्त्तिहृत् ।
(नारायणीये)

चित्रकादितैलम् ।

चित्रकत्रिकटुश्रेष्ठा वचा भार्ङ्गी च रोहिणी ।
मुस्तैलाकट्फलं लोध्रं निम्बतक्कोलसैन्धवम् ॥ ७३९ ॥
अरिमेदत्वचो जातिपत्रं हिमनिशाद्वयम् ।
कल्कीकृत्य पचेन्नालिकेरदुग्धे चतुर्गुणे ॥ ७४० ॥
तैलप्रस्थं ततो धार्यं मुखे व्योषरजोयुतम् ।
चलन्ति ये च दन्ताश्च विश्लिष्टा ये च वेष्टनात् ॥ ७४१ ॥
स्थिरा भवन्ति ते दन्ता दन्तशूलं च नश्यति ।
सर्वेषु मुखरोगेषु तैलमेतत्प्रशस्यते ॥ ७४२ ॥
(योगे)

जिह्वारोगनिदानचिकित्सा ।

पृथग्दोषैस्त्रयो जिह्वाकण्टकास्तथा जिह्वालसाधिजिह्वा उपजिह्वा इति षट् जिह्वागता रोगाः ।

शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता ।
जिह्वा पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता ॥ ७४३ ॥
शाल्मलीकण्टकाभैस्तु कफेन बहला गुरुः ।
कफपित्तादधःशोफो जिह्वास्तम्भकृदुन्नतः ॥ ७४४ ॥
मत्स्यगन्धिर्भवेत् पक्वः सोऽलसो मांसशातनः ।
कफपित्तादधो जिह्वामूले जिह्वाग्रसन्निभः ॥ ७४५ ॥
(वाहटे)

साङ्कुरो लालोषास्तम्भवान् शोफोऽधिजिह्वाख्यः कण्डूरुजा-वाक्याहारविघातकृच्च । जिह्वोपरि तादृक्छोफः उपजिह्वाख्यः । एषु जिह्वालसं वर्जयेत्, पक्वामुपजिह्विकां च ।

X

जिह्वाकण्टकचिकित्सा ।

कुर्याद्वातोष्ठकोपोक्तं कण्टकेष्वनिलात्मसु ।
जिह्वायां पित्तजातेषु घृष्टेषु रुधिरे स्रुते ७४६ ॥
प्रतिसारणगण्डूषनावनं मधुरैर्हितम् ।
तीक्ष्णैः कफोत्थेष्वप्येवं सर्षपत्र्यूषणादिभिः ॥ ७४७ ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये ।

(वाहटे)

पिप्पल्यादिर्मधुयुतः कार्यस्तु प्रतिसारणे ।
गृह्णीयात्कवळांश्चापि गौरसर्षपसैन्धवैः ॥ ७४८ ॥

(पाडशुद्दौ)

करञ्जद्वयनिर्गुण्डीसुरसीदेवदारुभिः ।
त्रिपिप्पलीकमुद्गैश्च क्वाथो जिह्वारुजापहः ॥ ७४९ ॥

(सिद्धसारे)

पुनर्नवाभयाविश्वमरिचक्वथितेन च ।
गवां मूत्रेण गण्डूषो जिह्वाकण्टकनाशनः ॥ ७५० ॥
त्रिफलां खादिरं सारं अरिमेदपुनर्नवौ ।
पक्त्वा गण्डूषणं कुर्याज्जिह्वाकण्टकशान्तये ॥ ७५१ ॥

(योगे)

जिह्वालसे नवोत्थिते तीक्ष्णाः प्रतिसारणादयः । न चात्र शस्त्रमवचारयेत् । सिरां तु विध्येत् । अधिजिह्वामुन्नम्य बडिशेन गृहीत्वा मण्डलाग्रेण छिन्द्यात् । तीक्ष्णाश्च नस्यादयः । उपजिह्वां शाकपत्रेणाङ्गुलिशस्त्रेण वा विस्राव्य यवक्षारेण प्रतिसारयेत् ।

(संग्रहे)

जिह्वारोगेषु सर्वेषु सिरां विध्येत्सदाश्रयाम् ।
हरेद्रक्तं जलूकाभिस्तोदशोफविनाशनम् ॥ ७५२ ॥

(तन्त्रान्तरे)

शिलादिचूर्णम् ।

शिलालदार्वीपटुयावशूक-
निशावरा गोघृतमाक्षिकाभ्याम् ।

मवक्त्रेण धार्यो द्विजमूलकण्ठ-
जिह्वोष्ठताल्वामयजित् क्षणेन ॥ ७५३ ॥

(योगामृते)

गण्डूषभेषजानि ।

व्याघ्रीबलामृताबिल्वसुरसादेवदारुभिः ।
कषायं क्षौद्रसंयुक्तं जिह्वारोगविनाशनम् ॥ ७५४ ॥

कट्फलं खदिरः शुण्ठी तिक्ता दारु पुनर्नवम् ।
अरिमेदद्वयं दार्वी यवानी तैः शृतं जलम् ॥ ७५५ ॥

गण्डूषं मधुसंयुक्तं कुर्याज्जिह्वामयापहम् ।
जिह्वालसे विशेषेण धारयेत्सततं नरः ॥ ७५६ ॥

श्वदंष्ट्राबृहतीशुण्ठीकणादारुपुनर्नवम् ।
निर्गुण्डीमरिचीमूलं तैः क्वाथस्तैलसंयुतः ॥ ७५७ ॥
जिह्वालसे विशेषेण शस्तो जिह्वामयापहः ॥

चित्रकादिचूर्णम् ।

चित्रकं शृङ्गिवेरं च पिप्पल्यो मरिचानि च ।
यवक्षारो हरीतक्यश्चूर्णमेतत् प्रघर्षणम् ॥ ७५८ ॥
एतैरेवौषधगणैरवपीडं प्रयोजयेत् ।
नस्याय तैलं विपचेदुपजिह्वाप्रशान्तये ॥ ७५९ ॥

निर्गुण्ड्यादितैलम् ।

निर्गुण्डीमरिचीभृङ्गजातीनां च रसाढके ।
तैलं प्रस्थं पचेद्धीमान् कल्कैरेतैश्च कार्षिकैः ॥ ७६० ॥
कणाभार्ङ्गीवचाशिग्रुसितसर्षपनागरैः ।
हिङ्गुपाठाग्निमन्थैश्च शुण्ठीसैन्धवकुङ्कुमैः ॥ ७६१ ॥
हन्ति जिह्वामयान् सर्वान् विशेषादुपजिह्विकाम् ।
षट्षष्टिं मुखरोगांश्च तैलमेतद् व्यपोहति ॥ ७६२ ॥

(तन्त्रान्तरे)

शुण्ठीग्रन्थिकपिप्पलीसुरसिकाभार्ङ्गीमधूच्छिष्टकं
कृष्णाचव्यहरेणुजीरकघनं कुष्ठं विळङ्गागरु ।

माद्रीचित्रकदीप्यकक्रिमिहरं दन्ती त्रिजातं तत-
श्चूर्णं क्षौद्रयुतं गलोष्ठरसनारोगाञ्जयेद्धर्षणात् ॥ ७६० ॥

महायानादादाय श्लोकीकृतम् ॥

तालुरोगनिदानचिकित्सा ।

तालुपिटका गलशुण्डिका तालुसंहत्यर्बुदकच्छपपुप्पुटतालुपाकतालुशोषा इत्यष्टौ तालुगता रोगाः ।

तालुमांसेऽनिले दुष्टे सतोदघनास्रावाः खरा बहवः पिटकाः स्युस्ताः तालुपिटकाख्याः । सरक्तात् कफात् तालुमूले मत्स्यबस्तिनिभो मृदुः प्रलम्बो नासयाहारमीरयन् कण्ठोपरोधतृट्कासवमिकरः शोफो गलशुण्डिकाख्यः । तालुमध्ये निरुङ्मांसचयस्तालुसंहतिः । रक्तात् तालुमध्ये पद्मनिभः शोफोऽर्बुदम् । कफात् तालुमध्ये कच्छपाकारो नीरुजः शोफः कच्छपः । मेदःकफाभ्यां कोलाभो नीरुजः शोफः पुप्पुटः । पित्तान्महारुजः पूयास्रावी पाकः पाकाख्यः ।

वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ।
तेषु कच्छपतालुपिटकार्बुदान् न साधयेत् ॥ ७६४ ॥

(तन्त्रान्तरे)

कफघ्नैः शुण्डिका साध्या नस्यगण्डूषघर्षणैः ।

(वाहटे)

वृद्धायान्तूर्वारुबीजनिभमसिरातत्तमग्रमुपरि जिह्वाया निविष्टं बळिशेन मुचुब्या वा वस्त्रवेष्टिताभ्यां वामाङ्गुष्ठप्रदेशिनीभ्यां गृहीत्वा मण्डलाग्रेण नात्यग्रे नातिमूले छिन्द्यात् । अग्रच्छेदादनुपशमः शोफो, लालादिवृद्धिर्वा । अतिच्छेदाच्छोणितक्षयेण मरणम् ॥

(सङ्ग्रहे)

नोच्छिष्टं नैव हीनं च त्रिभागं च्छेदयेद् भिषक् ॥ ७६५ ॥

(पाठशुद्धौ)

मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ।
छिन्नायां सपटुक्षौद्रैर्घर्षणं कवलः पुनः ॥ ७६६ ॥
कटुकातिविषापाठानिम्बरास्नावचाम्बुभिः ।

(वाहटे)

१. 'कं' ख. पाठः, २. 'लात्' ग. पाठः

क्षारसिद्धेषु यूषेषु यवश्चाप्यशने हितः ॥ ७६७ ॥

(पाठशुद्धौ)

तिक्ता व्योषाग्निसिन्धूत्थतेजोह्वाग्रनिशामयैः ।
सागारधूमैः सक्षौद्रैर्घर्षयेद्गलशुण्डिकाम् ॥ ७६८ ॥

(तन्त्रान्तरे)

तालुसङ्घाते, पुप्पुटे, कच्छपे च नवे विधिरयम् । शस्त्रकर्मणि तु विशेषः । अत्र हि विलेखनम् ॥

(वङ्गसे)

सङ्घाते पुप्पुटे कूर्मे विलिख्यैवं समाचरेत् ।
अपक्वे तालुपाके तु कासीसक्षौद्रताक्ष्यजैः ॥ ७६९ ॥

घर्षणं कवलः शीतैः कषायमधुरौषधैः ।
पक्वेऽष्टापदवत् भिन्ने तीक्ष्णोष्णैः प्रतिसारणम् ॥ ७७० ॥

वृषनिम्बपटोलाद्यैस्तिक्तैः कवळधारणम् ।
तालुशोषे सतृष्णस्य सर्पिरुत्तरभक्तिकम् ॥ ७७१ ॥

कणाशुण्ठीघृतं पानमम्लैर्गण्डूषधारणम् ।
धन्वमांसरसाः स्निग्धाः क्षीरसर्पिश्च नावनम् ॥ ७७२ ॥

(वाहटे)

स्निग्धो धूमः तृष्णाघ्नमन्नपानम् ॥

(वङ्गसे)

कण्ठरोगाः ।

पृथग्दोषैरसृजा निचयेन च पञ्चरोहिण्यः । तथा शालूकः वृन्दः तुण्डिकेरिका गलौघः बलयं गलायुकः शतघ्नी गलविद्रधिः गलार्बुदं पवनकफमेदोभिः त्रयो गलगण्डाः स्वरघ्नश्चेत्यष्टादशकण्ठगताः रोगाः ।

*जिह्वामूले च कण्ठादौ दारुणा मार्गरोधिनः ।
मांसाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी ॥ ७७३ ॥

१. 'त्वतृमस्य' ख. ग. पाठः.
* 'जिह्वाप्रबन्धने' कण्ठे ग, पाठः.

सा वातजा कण्ठास्यशोषकरी अजस्रं हनुश्रोत्ररुक्करी च। पित्तजा सरुङ्मोहज्वरोषा क्षिप्रजा[1] क्षिप्रपाका, सरागा, स्पर्शासह्या च। कफजा पाण्डुपिच्छिला स्यात्। रक्तजा सस्फोटा, तप्ताङ्गाराभा, कर्णरुक्करी, पित्तलिङ्गा च। सर्वजा सर्वलिङ्गान्विता, गम्भीरपाका च। कण्ठे कफोल्बणैः मलैर्ग्रथितोन्नतः कोलाभो मार्गरोधनः शोफः शालूकः। गळपार्श्वगस्सदाहज्वरो वृत्तोन्नतः श्वयथुर्वृन्दाख्यः। कण्ठे हनुसन्धिजः कार्पासफलाभः कठिनो मन्दरुजः शोफस्तुण्डिकेरिका। कण्ठे मूर्धगौरवलालातन्द्राज्वरकरो गळमार्गे अर्गळोपमः बहिरन्तःशोफो गळौघाख्यः। तादृगायतोन्नतः शोफो वलयाख्यः। कण्ठे दोषैरेको नैको वा मन्दरुजः कृच्छ्रोछ्वासभोजनो मांसकीलः पृथुमूलः गिलायुकाख्यः। भूरिमांसाङ्कुरावृता सतृड्ज्वरा शतघ्नी नाम। व्याप्तसर्वगळः पूतिपूयनिभास्रावी महारुजः शोफो गळविद्रधिः। दोषैः कण्ठादौ जिह्वावसाने रक्तो नीरुगपाकः शोफो गळार्बुदाख्यः।

पवनश्लेष्ममेदोभिर्गळगण्डो भवेद्बहिः।
वर्धमानः स कालेन मुष्कवल्लंबते निरुक्॥ ७७४॥

वातजः कृष्णोऽरुणो वा तोदकृष्णराजियुतो वृद्धस्तालुगळशोषास्यवैरस्यकरः। कफजो गुरुः सवर्णः स्थिरः शीतः वृद्धस्तालुगळलेपास्यमाधुर्यकरः॥

मेदसा श्लेष्मवद्धानिवृद्धयोः सोऽनुविधीयते।
देहं वृद्धश्च कुरुते गळे शब्दं स्वरेऽल्पताम्॥ ७७५॥

वातेन जायमानः स रोगः नाम्ना स्वरघ्ना स्यात्, येन नरः शुष्ककण्ठो हतस्वरस्ताम्यन् प्रसक्तश्वासी श्लेष्मरुद्धानिलगतिश्च। एतेषु गळौघस्वरघ्नशतघ्नीगळार्बुदवलयानि, निचयाद्रक्ताच्च रोहिण्यौ सकृच्छ्रोच्छ्वासस्वरभ्रंशमतीतवत्सरं गळगण्डं च न साधयेत्॥

(तन्त्रान्तरे)

कण्ठरोगेषु तु ज्वराद्यनुपद्रुतेषु कटुतीक्ष्णैर्नस्यावघर्षणगण्डूषादयस्सिराव्यधो रसाञ्जनेन्द्रयवदार्वीनिम्बक्वाथपानम्॥

(सङ्ग्रहे)

१. 'क्षिप्रजननपाका' इति पाठान्तरम्।

हरीतकीकषायो वा पेयो माक्षिकसंयुतः ।
श्रेष्ठान्व्योषयवक्षारदार्वीद्वीपिरसाञ्जनैः ॥ ७७६ ॥

सपाठातेजनीनिम्बैः शुक्तगोमूत्रसाधितैः ।
कवळो गुळिका चात्र कल्किता प्रतिसारणम् ॥ ७७७ ॥

निचुळं कटभी मुस्तं देवदारु महौषधम् ।
वचा दन्ती च मूर्वा च लेपः कोष्णोऽर्त्तिशोफहा ॥ ७७८ ॥

(वाग्भटे)

तालीसपत्रगृहधूमपञ्चकोलकैलामरिचपलाशमुष्ककक्षारयवक्षारैर्यवक्वाथेन गुळिकाः कृताः सर्वकण्ठरोगेष्वमृतोपमाः ॥

(संग्रहे)

कुलत्थमुद्गनिर्गुण्डीशुण्ठीवत्सकसम्भवः ।
क्वाथः कणारजोयुक्तः सक्षौद्रः कण्ठरोगहा ॥ ७७९ ॥

(वृद्धहारीतः)

वत्सकातिविषादारुतिक्तापाठाम्बुदाः समाः ।
गोमूत्रक्वथिताः पेया गळरोगे समाक्षिकाः ॥ ७८० ॥

(हारिश्चन्द्रे)

साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम् ।
घर्षणं धूमपानं च गण्डूषो नस्यकर्म च ॥ ७८१ ॥

(पाठशुद्धौ)

अथान्तर्बाह्यतः स्विन्नां वातरोहिणिकां लिखेत् ।
अङ्गुलीशस्त्रकेणाशु पट्टयुक्तनखेन वा ॥ ७८२ ॥

पञ्चमूलाम्बुकवळस्तैलं गण्डूषनावनम् ।
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः ॥ ७८३ ॥

घर्षयेल्लोध्रपत्तङ्गैः कवळः क्वथितैश्च तैः ।
उपाचरेदेवमेव प्रत्याख्यायास्रसम्भवाम् ॥ ७८४ ॥

सागारधूमैः कटुकैः कफजां प्रतिसारयेत् ।
नस्यगण्डूषयोस्तैलं साधितं च प्रशस्यते ॥ ७८५ ॥

अपामार्गफलश्वेतादन्तीजन्तुघ्नसैन्धवैः ।

तद्वच्च वृन्दशालूकतुण्डिकेरीगलायुषु ॥ ७८६ ॥

(वाहटे)

अमर्मस्थं सुपक्वं च भेदयेद्गलविद्रधिम् ।

(पाठशुद्धौ)

विद्रधौ स्राविते श्वेतारोचनाताक्ष्यगैरिकैः ॥ ७८७ ॥

सलोध्रपट्टपत्तङ्गकणैर्गण्डूषघर्षणे ।
गलगण्डः पवनजः स्विन्नो निःस्रुतशोणितः ॥ ७८८ ॥

तिलैर्बीजैश्च ऊर्ध्वोमाप्रियालशणसम्भवैः ।
उपनाह्यो व्रणे रूढे प्रलेप्यश्च पुनः पुनः ॥ ७८९ ॥

शिग्रुतिल्वकतर्कारीगजकृष्णापुनर्नवैः ।
कालामृतार्कमूलैश्च पुष्पैश्च करहाटजैः ॥ ७९० ॥

एकैषिकान्वितैः पिष्टैः सुरया काञ्जिकेन वा ।
गलूचीनिम्बकुटजहंसपादीबलाद्वयैः ॥ ७९१ ॥

साधितं पाययेत्तैलं सकृष्णादेवदारुभिः ।
कर्तव्यं कफजेऽप्येतत् स्वेदविम्लापने त्विति ॥ ७९२ ॥

लेपोऽजगन्धातिविषाविशल्यास्सविषाणिकाः ।
गुञ्जालाबुशुकाख्याश्च पलाशक्षारकल्किताः ॥ ७९३ ॥

मूत्रस्रुतं हठक्षारं पक्त्वा कोद्रवभुक् पिबेत् ।
साधितं वत्सकाद्यैर्वा तैलं सपट्टपञ्चकैः ॥ ७९४ ॥

कफघ्नान् धूमवमननावनादींश्च शीलयेत् ॥

(वाहटे)

पर्यायतश्च स्वेदं शोणितावसेचनं च । तथाप्युपशमे पाचयित्वा व्रणवदुभावप्युपाचरेत् ।

(संग्रहे)

पाकक्रमोऽप्यनयोर्विधेयो
वैद्येन पाकं गतयोः कथञ्चित् ।
कटुत्रिकक्षौद्रयुताः समूत्रा
भक्ष्या यवाश्चापि रसाश्च यौद्राः ॥ ७९५ ॥

सभृङ्गिवेराः सपटोलनिम्बा
हिताय देया गळगण्डरोगे ॥ ७९६ ॥

(पाठशुद्धौ)

मेदोद्भवे सिरां विध्येत् कफघ्नं च विधिं भजेत् ।
असनादिरजश्चैनं प्रातर्मूत्रेण पाययेत् ॥ ७९७ ॥

(वाह्वटे)

एवमप्यशान्तौ शस्त्रेण विदार्य मेदो विशोध्य सीव्येत् । दाहयोग्यं वा वसाघृतक्षौद्राद्यन्यतमेन यथावद्दहेत् । रोचनाकासीसतुत्थकचूर्णानचूर्णितं तैलं व्रणशोधनरोपणम् ॥

(संग्रहे)

हंसपाद्यमृतानिम्बपिप्पलीवृक्षकैः श्रृतम् ।
जलं तु गळगण्डं च गण्डमालां च नाशयेत् ॥ ७९८ ॥
लशुनं सैन्धवं शुण्ठी मातुलुंगार्कपूतिकम् ।
निर्गुण्डीसर्षपं चैव वचां पिष्ट्वा प्रलेपयेत् ॥ ७९९ ॥
गळगण्डविनाशाय स्नुहीपत्ररसायुतम् ॥

(हारिश्चन्द्रे)

मुखपाकनिदानचिकित्सा ।

पृथग्दोषैर्निचयाद्रक्तेन च पञ्चमुखपाकाः । तथोर्ध्वगुदार्बुदौ पूत्यास्यता चेत्यष्टौ सर्वमुखगता रोगाः । सर्वसरो वा वातो मुखस्यान्तर्व्रणान् रूक्षारुणान् कुर्यात्, तत्र ताम्रावोष्ठौ जिह्वा स्फुटिता कण्टकावृता शीतासहा स आतुरः कृच्छ्रेण मुखं विवृणोति, स रोगो मुखपाकाख्यः । पित्तजे दाहोषा तिक्तास्यता क्षारसिक्तसमव्रणाश्च । रक्तजे पित्तवत् । कफजे मधुरास्यत्वं कण्डूमतिपिच्छिला व्रणाश्च । सान्निपातिकैः सर्वैः सर्वलिङ्गो मुखपाकः स्यात् । अर्शोगुल्मादिभिरधःप्रतिहतो वायुरूर्ध्वं याति मुखपूतित्वं कुर्वन्, स ऊर्ध्वगुदः । अन्तः कपोले कफः पाण्डुश्यावमर्बुदं कुर्यात् । उद्घट्टनच्छेदनादिभिर्विवर्धते । सान्निपातिकैः पूतिमुखत्वं स्यात् दन्तकाष्ठादिविद्विषो नरस्य । तेष्वसाध्यावूर्ध्वगुदार्बुदौ ॥

१. छेदनभेदनादिभिः' ख, 'छेदनमर्दनादिभिः' ग. पाठः

z

मुखपाकेषु धावनीयौषधानि ।

मुखपाकेषु सामान्यतः त्रिफलाकषायो मधुमान् । अन्ये च तिक्तकटुकषाया मुखधावनाः ॥

(संग्रहे)

मुखपाकेषु सक्षौद्राः प्रयोज्या मुखधावनाः ॥ ८०० ॥
कम्पिताल्लिफलापाठामृद्वीकाजातिपल्लवाः ।
निष्ठ्या भक्षयित्वा वा कुठेरादिगणोऽथवा ॥ ८०१ ॥

(वाहटे)

दारुहरिद्रार्धतुलां विंशतिगुणेऽम्भसि श्रपयित्वा तं क्वाथं सगैरिकमादर्वीमलेपात् साधितं क्षौद्रयुक्तं घृतभाजने निदध्यात् । एतन्निष्ठीवनं सर्वमुखामयनाडीघ्नम् ।

अयमेव च पृथक् कल्पो यष्टीमधुकपटोलीनिम्बाटरूषकजाती-लोध्रारिमेदत्रिफलाजम्बूखदिरत्वचाम् । खदिरसारतुलामरिमेदवल्क-लतुलाद्वयं च तोयवहेऽष्टभागावशेषं क्वाथयेत् । अवतारितं परिस्रुतं च पुनराघनीभावात् । घनीभूते शीते च कार्षिकाणि श्लक्ष्णीकृतानि प्रक्षिपेत् , चन्दनपद्मकोशीरसरलमञ्जिष्ठाधातकीमुस्तप्रपौण्डरीकमधु-कत्रिफलाचातुर्जातकलाक्षानलदताक्ष्यशैललोध्रद्विरजनीसमङ्गापाठा-कट्फलैलाघनपचंगागरुगैरिकांजनानि । पलिकांश्च जातीफललवङ्ग-तक्कोलकंकुकान् । कर्पूरार्धकुडुबं च । ता गुळिका वदनस्थाः सर्वान् मुखरोगान्नाशयन्ति । सौरभं सौमनस्यं रुचिं च जनयन्ति । एषामेव कल्ककषायैस्तैलं साधितं कवळे नियुञ्ज्यात् ॥

(संग्रहे)

खदिरेणैता गुळिकास्तैलमिदं चारिमेदसा प्रथितम् ।
अनुशीलयन् प्रतिदिनं वृद्धोऽपि दृढद्विजो भवति ॥ ८०२ ॥

(वाहटे)

खपाके गण्डूषः ।

जातीपत्रामृतालाक्षायष्टिदार्वीफलत्रिकैः ।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ ८०३ ॥

(चिदसारे)

सप्तच्छदोशीरपटोलमुस्ता-
हरीतकीतिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च
क्वाथं पिबेत् पाकहरं मुखस्य ॥ ८०४ ॥

पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्ताद्विनिशामृतानाम्।
पीतः कषायो मधुना निहन्ति
मुखस्थितश्चास्यगदानशेषान् ॥ ८०५ ॥

(शाङ्र्ग०)

त्रिफलासैन्धवं मुस्तं समभागं प्रपेषयेत्।
क्षौद्रेण सह संसृज्य मुखपाकेषु लेपयेत् ॥ ८०६ ॥

हरिद्रादितैलम्।

हरिद्रानिम्बपत्राणि मधुकं पद्मकेसरम्।
तैलमेतैर्विपक्वं तु मुखपाकस्य भेषजम् ॥ ८०७ ॥

हिरिवेरं हरिद्रे द्वे त्रिफला तण्डुलीयकम्।
एतानि मधुयुक्तानि मुखपाकस्य भेषजम् ॥ ८०८ ॥

(हारीत[१])

वातादिमुखपाकानां चिकित्सा।

मुखपाकेऽनिलात् कृष्णा पटोला[२] प्रतिसारणम्।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ८०९ ॥

(शाङ्र्ग०)

पैत्तिके क्षीरेक्षुरसद्राक्षाशर्करोदकैर्गण्डूषः, मधुरद्रव्यसिद्धं पयः-पानं, कवलो, नस्यं च ॥

(सश्रुत)

पित्तास्रे पित्तरक्तघ्नः कफघ्नश्च कफे विधिः।
लिखेच्छाकादिपत्रैश्च पिडकाः कठिनाः स्थिराः ॥ ८१० ॥

(शाङ्र्ग०)

यथा दोषोदयं कुर्यात् सन्निपाते चिकित्सितम्।

१ 'हारीतः' ग. पाठः. २. 'पटोला' ख. पाठः.

नवेऽर्बुदे प्रतिसारणादयः ।

नवेऽर्बुदे त्वसंवृद्धे छेदिते प्रतिसारणम् ॥ ८११ ॥
स्वर्जिकानागरक्षौद्रैः कवाथो गण्डूष इष्यते ।
गुलूचीनिम्बकल्कोत्थो मधुतैलसमन्वितः ॥ ८१२ ॥

पूतिमुखे धूमादयः ।

वमिते पूतिवदने धूमस्तीक्ष्णः सनावनः ।
समङ्गाधातकीलोध्रफलिनीपद्मकैर्जलम् ॥ ८१३ ॥
धावनं वदनस्यान्तश्चूर्णितैरवचूर्णयेत् ॥

(वाहटे)

स्वर्जिकाहिङ्गुगृहधूममनःशिलैलाशुण्ठीविलङ्गतेजोवतीभिर्गुलिकाः कृत्वा मधुद्रुता मुखपरिशोधनार्थं दद्यात् । सीतादोपक्रमोक्तं च कुर्यात् । नस्यधूमकवलांश्च शीलयेत् ।

(वृन्दे)

मुखदौर्गन्ध्ये गण्डूषादयः ।

तिक्तानि दन्तकाष्ठानि कषायकटुकानि च ।
गण्डूषो मुखदौर्गन्ध्ये तिक्ततैलेन शस्यते ॥ ८१४ ॥
लोध्रमेलावराचव्यं पिप्पलतिण्डुलानि च ।
एतच्चूर्णं मधुयुतं प्रधानं मुखधावनम् ॥ ८१५ ॥
ताम्बूलस्य दलं शुष्कं सूक्ष्मचूर्णं तु कारयेत् ।
सक्षौद्रं धारयेद्वक्त्रे मुखदौर्गन्ध्यनाशनम् ॥ ८१६ ॥
पिप्पल्येलामुस्तावराङ्गयष्टयाह्वकुष्ठचूर्णकृताः ।
गुलिकाः पूतिमुखानां भिषजा मुखधारणे कार्याः ॥ ८१७ ॥

(तन्त्रान्तरे)

पिचुमन्दशलाकोद्भवचूर्णैः प्रातर्विघर्षणाद्वदनम् ।
दरदलितसरसिजोदरसोदरगन्धोपमं भवति ॥ ८१८ ॥
त्रिकटुत्रिफलागारधूमसिन्धूत्थचित्रकैः ।
चूर्णितैः शर्करीयुक्तैर्घर्षणं मुखरोगनुत् ॥ ८१९ ॥

१· 'मुखधावने' इति पाठान्तरम् ।

द्विक्षारत्रिफलाव्योषविलङ्गपटुचित्रकम् ।
श्लक्ष्णं सञ्चूर्ण्य गोमूत्रे विधिना लोलयन् पचेत् ॥ ८२० ॥
मुखरोगेषु सर्वेषु शस्तः सोऽयमुदाहृतः ॥

(हारीतग्रन्थे)

खदिरं राजवृक्षं च न्यग्रोधं च हरीतकीम् ।
गोमूत्रे क्वाथयेत्तेन गण्डूषो मुखरोगनुत् ॥ ८२१ ॥

(योगसारे)

जातीपत्रारिमेदत्वगमृतानागराम्बुदैः ।
क्वाथोऽयं मुखरोगेषु शस्तो गण्डूषधारणे ॥ ८२२ ॥

(तन्त्रान्तरे.)

त्रिफलाखदिरार्जुनलोहमलैः
सकरञ्जशिफैः सह मागधिकैः ।
घृततैलयुतं सलिलं वदने
निहितं वदनामयजित् ··· ॥ ८२३ ॥

(योगामृते)

फलत्रयादिगुटिका ।

फलत्रयद्वीपिकिरातातिक्त-
यष्ट्याह्वसिद्धार्थकटुत्रिकाणि ।
मुस्ताहरिद्राह्वययावशूक-
वृक्षाम्ललोध्राम्लकवेतसं च ॥ ८२४ ॥
अश्वत्थजम्ब्वाम्रधनञ्जयत्वक्
त्वक्चाहिमारात् खदिरस्य सारः ।
क्वाथेन तेषां घनतां गतेन
तच्चूर्णयुक्ता गुलिका विधेया ॥ ८२५ ॥
सा धारिता हन्ति मुखेन नित्यं
जिह्वौष्ठताल्वादिगदान् सुकृच्छ्रान् ।
विशेषतो रोहिणिकास्यशोष-
गन्धान् विदेहाधिपतिप्रणीता ॥ ८२६ ॥

---

१. 'लोहचय' ख. ग. पाठः.
२. 'वृक्षाम्लकाम्लाग्निमवेतसाश्च' इति मुद्रिताष्टाङ्गहृदयपाठः ।

द्राक्षागुलूच्यादिकषायः ।

द्राक्षागुलूचीसुमनःप्रवाल-
दार्वीयवासत्रिफलाकषायः ।
क्षौद्रेण युक्तः कवलग्रहोऽयं
सर्वामयान्वक्त्रगतान्निहन्ति ॥ ८२७ ॥

कालकचूर्णम् ।

गृहधूमतार्क्ष्यपाठाव्योषक्षाराग्न्ययोवरातेजोह्वैः ।
मुखदन्तगलविकारे सक्षौद्रः कालको विधार्यश्चूर्णः ॥ ८२८ ॥

पीतकचूर्णम् ।

दार्वीत्वक्सिन्धूद्भवमनःशिलायावशूकहरितालैः ।
धार्यः पीतकचूर्णो दन्तास्यगलामये समध्वाज्यः ॥ ८२९ ॥

(वाग्भटे)

तिक्तकचूर्णम् ।

मुस्तं त्रिकटुकं पाठा त्वक् बीजं वत्सकस्य च ।
निम्बं पटोलं कटुकां हरिद्रां धन्वयासकम् ॥ ८३० ॥
जातीप्रवालभूनिम्बमधुकं सरसाञ्जनम् ।
त्रायमाणां गुलूचीं च त्रिफलां चेति चूर्णयेत् ॥ ८३१ ॥
चूर्णोऽयं तिक्तको नाम कवलप्रतिसारणात् ।
दन्तमूलास्यगलजान् रोगान् सर्वानपोहति ॥ ८३२ ॥

(चाक्षुषे)

गोमूत्रहरीतकी ।

गोमूत्रक्वथितविलीनविग्रहाणां
पथ्यानां जलमिसिकुष्ठभावितानाम् ।
अत्तारं नरमणवोऽपि वक्त्ररोगाः
श्रोतारं नृपमिव न स्पृशन्त्यनर्थाः ॥ ८३३ ॥

(वाग्भटे)

रजन्यादिघृतम् ।

रजनीभृङ्गरसाभ्यां दशपाकमृतं घृतं हरेद्गव्यम् ।
सक्षौद्रं मुखरोगं कुवलयपत्रं यथागन्धम् ॥ ८३४ ॥

(काशीपुरवासी)

---

१. 'मुस्ता क्षमिवाशाङ्गहृदयपाठः

खादिरतैलम्।

खदिरतुलामम्बुघटे पक्त्वा तोयेन तेन पिष्टैश्च।
चन्दनजोङ्गककुङ्कुमपरिपेलववालकोशीरैः॥ ८३५॥
सुरतरुलोध्रद्राक्षामञ्जिष्ठाचोचपत्रकविलङ्गैः।
स्पृक्कानतनखकट्फलसूक्ष्मैलाध्यामकैः सपत्त्रङ्गैः॥ ८३६॥
तैलप्रस्थं विपचेत् कर्षांशैः पाननस्यगण्डूषैस्तत्।
हत्वास्ये सर्वगदान् जनयति गार्ध्रीं दृशं श्रुतिं च वाराहीम्॥
बाणोत्पलशतमुदकद्रोणे पक्त्वा पलार्धिकैरत्र रसे।
यष्टीखादिरानन्ताजम्ब्वाम्रैः साहिमारनीलोत्पलकैः॥ ८३८॥

तैलप्रस्थं पाचयेत् श्लक्ष्णपिष्टै-
रेभिर्द्रव्यैर्धारितं तन्मुखेन।
रोगान् सर्वान् हन्ति वक्त्रे विशेषात्
स्थैर्यं धत्ते दन्तपङ्क्तेश्चलायाः॥ ८३९॥

(वाग्भटे)

गण्डूषः।

खदिरत्रिफलादार्वीपार्थक्षीरिद्रुमोत्थिते।
कषाये व्योषरजनीदार्वीलोध्रवटाङ्कुरैः॥ ८४०॥
तैलं प्रसिद्धमास्यस्थं सर्वास्यामयनाशनम्।
गोमूत्रत्रिफलाकल्कसिद्धं तैलं (चतुर्गुणम्? च तद्गुणम्)॥
मरिचौषधनिर्गुण्डीचित्रकान् काञ्जिके पचेत्।
तत्क्वाथे नालिकेरस्य तैलं सर्पिश्च पाचयेत्॥ ८४२॥
हिङ्गुत्रिजातत्रिकटुत्रिफलादारुसैन्धवैः।
विलङ्गसर्षपवचायावशूकनिशाद्वयैः॥ ८४३॥
जीरकद्वयकर्पूरयवानीतिल्वकल्कितैः।
तेन गण्डूषणं सर्वमुखरोगविनाशनम्॥ ८४४॥

(सिद्धयोगे)

दन्तमूलादिरोगाणां कफहरं कर्मशस्तमिति।

मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः।
तस्मात् तेषामसकृद् दुष्टं विस्रावयेद् रुधिरम्॥ ८४५॥

कायशिरसोर्विरेको वमनं कवलग्रहाः कटुकतिक्ताः ।
प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म ॥ ८४६ ॥

यवतृणधान्यं भक्तं विद्लैः क्षारोपितैरपस्नेहाः ।
यूषाभक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय ॥ ८४७ ॥
(वाहटे)

मुद्गाः कुलत्थाश्च यवा गोधूमाः शालिजाङ्गलाः ।
कोरदूषाः सवरकाः भोजनाय सुखामये ॥ ८४८ ॥
(सिद्धसारे)

प्राणानिलपथसंस्थाः श्वसितमपि निरुन्धते प्रमादवतः ।
कण्ठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥ ८४९ ॥

ओष्ठे गण्डे द्विजे मूले जिह्वायां तालुके गले ।
वक्त्रे सर्वत्र चेत्युक्ताः पञ्चसप्ततिरामयाः ॥ ८५० ॥

एकादशैको दश च त्रयो दश तथा च षट् ।
अष्टावष्टादशाष्टौ च तेषु विद्याद् यथाक्रमम् ॥ ८५१ ॥
(वाहटे)

इति योगरत्नसमुच्चये नेत्रकर्णनासामुख-
रोगचिकित्साधिकारः
चतुर्विंशतिः ।

---

## अथ शिरोरोगचिकित्साधिकारः पञ्चविंशः ।

धूमातपतुषारजलक्रीडातिनिद्रारात्रिजागरणपुरोवातबाष्पनिरोधरोदनात्यम्बुपानभाष्यदुष्टामाद्यैः शिरोगता दोषा रोगानेकोनविंशतिं जनयन्ति । तत्र वातजे शिरस्तापे शङ्खनिस्तोदघाटावभेदः सिरास्फुरणकन्धराहनुग्रहाः । प्रकाशासहता अकस्माद्यथाशमो मर्दनस्नेहस्वेदबन्धैर्मार्दवं च स्यात् । स एव शिरसोऽर्धे भवन्नर्धावभेदकाख्यः । उभयरूपोऽपि स्वयमेव शान्तः, पक्षाद्वा, मासाद्वा पुनः पुनराविर्भवति । वृद्धस्तु कर्णं वा नयनं वा नाशयति । पित्तजे ज्वरस्वेदतृड्दाहमूर्छा

निशि च शीतेन च शान्तिः स्यात् । कफजे मूर्धगौरवस्तैमित्यारोचकाक्षिकूटशोफच्छर्दयो, रुजा च मन्दा अहनि, निद्यत्यधिका च स्यात् । रक्तजः पित्ताधिकरुजः । सर्वजः सर्वलिङ्गः । सङ्कीर्णभोजनान्मूर्ध्नि रक्तमांसे क्लेदिते सन्निपाते च कोपिते जाताः कृमयो मूर्धरक्तं पिबन्तो घोरा वेदनाः कुर्युः । तत्र ज्वरकासचित्तनाशबलक्षयाः । कपालस्य शोफकण्डूतोददाहपूतिता ताम्राच्छसिंघाणकता कर्णनादश्च स कृमिजः । वातोल्बणैर्मलैः शिरःकम्पस्तदाख्यः । पित्तोल्बणैर्मलैस्त्रासैस्तीव्ररुजा रागदाहप्रलापभ्रमतृड्ज्वरश्शङ्खशोफः । स शंखाख्यः क्षिप्रकारी च, त्रिरात्राज्जीवितं हन्ति । सिध्यत्यप्याशु साधितः । पित्तानुबन्धो वायुः शङ्खाक्षिभ्रूललाटेषु संस्पन्दनां अनुसूर्योदयादामध्याह्नं क्रमाद्वर्धमानां अतः परं शान्तिमतीम् अव्यवस्थितशीतोष्णसुखां क्षुद्वतोऽधिकां रुजां कुर्यात् । स सूर्यावर्तः । इति सर्वशिरोव्यापका रोगा दश । शिरस्येव कपाले नव रोगा वक्ष्यन्ते । गर्भस्थस्य दुष्टो वायुस्सवर्णं नीरुजं कपाले शोफं कुर्यात्, स उपशीर्षकः । यथादोषोदयं ब्रूयात् पिटकार्बुदविद्रधीन् । पित्तकफासृक्कृमिभिः क्लेदबहुलाः कङ्कुसर्षपाभाः पिटकाः अरूंषिकाः । कफवातात् कण्डूकेशच्युतिस्वापरौक्ष्यकारि सूक्ष्मं त्वचः स्फुटनं तद् दारुणकाख्यम् । इन्द्रलुप्ते रोमकूपानुगं सानिलं पित्तं रोमाणि च्यावयति । ततः सरक्तेन कफेन रोमकूपरोधादन्यरोमासम्भवः । तद्वत् खलतिरपि स्यात् । तत्र क्रमाद् रोमशतनम् ।

सा वातादग्निदग्धाभा पित्तात् स्विन्ना सिरावृता ।
कफाद् घनत्वग्वर्णाश्च यथास्वं निर्दिशेत् त्वचि ॥ १ ॥

सर्वजा सर्वलिङ्गा । तासु वर्जयेदग्निदग्धामिव निर्लोमां नखप्रभां सदाहां च । शोकादिजः शरीरोष्मा दोषैः सह केशान् पचति, तत् पलितम् । तद् वातात् खररूक्षं स्फुटितं तनु जलप्रभं च । पित्तात् सदाहं पीताभम् । कफात् स्निग्धं विवृद्धिमत् शुक्लं च । सर्वजं सर्वलिङ्गम् । अन्यत् पलितं शिरोरुजः स्यात्, तद्विवर्णं स्पर्शासहं च ॥

असाध्या सन्निपातेन खलतिः पलितानि च ।
शरीरपरिणामोत्थान्यपेक्षन्ते रसायनम् ॥ २ ॥

1. दग्धा इति पाठान्तरम् ।

पवनजे शिरोऽभितापे चिकित्सा ।

शिरोऽभितापेऽनिलजे वातव्याधिविधिं चरेत् ।
घृतेनाक्तशिरा रात्रौ पिबेदुष्णपयोऽनुपः ॥ ३ ॥

माषान् कुलत्थान् मुद्गान् वा तद्वत्खादेत् घृतान्वितान् ।
तैलं तिलानां कल्कं वा क्षीरेण सह पाययेत् ॥ ४ ॥

पिण्डोपनाहस्वेदाश्च मांसधान्यकृता हिताः ।
वातघ्नदशमूलादिसिद्धक्षीरेण सेचनम् ॥ ५ ॥

स्निग्धं नस्यं तथा धूमः शिरश्रवणतर्पणम् ॥

(वाहटे)

माषान् वा ससर्पिष्कानुष्णपयोऽनुपानान् भक्षयेत् । आनूप-पिशितवेशवारेण यवतिलमुद्गमाषकुलत्थकुष्ठदारुहरिद्रातसीसैन्धवैर्वा-महास्नेहवतीमुत्कारिकां दत्त्वा शिरो वेष्टयेत् । ततः प्रत्यूषे दशमूलसिद्धेन पयसा कवोष्णेन परिषेकं कुर्यात् । तत्सिद्धैश्च पायसैः पिण्डस्वेदं लेपं वा । शिरोवस्तिं च शीलयेत् ।

(संग्रहे)

शीर्षरुजापहस्वेदः ।

कदुष्णैर्वत्सशकृतः पिण्डैः स्वेदो मुहुर्हितः ।
ललाटे घृतमण्डाक्ते सर्वशीर्षरुजापहः ॥ ६ ॥

(योगामृते)

वरणादिगणे क्षुण्णे क्षीरमर्धोदकं पचेत् ।
क्षीरावशिष्टं तच्छीतं मथित्वा सारमाहरेत् ॥ ७ ॥

ततो मधुरकैः सिद्धं नस्यं तत्पूजितं हविः ।
वर्गेऽत्र पक्वं क्षीरे च पेयं सर्पिः सशर्करम् ॥ ८ ॥

कार्पासमज्जात्वङ्मुस्तासुमनःकोरकाणि च ।
नस्यमुष्णांबुपिष्टानि सर्वमूर्धरुजापहम् ॥ ९ ॥

शर्कराकुंकुमघृतं घृतं पित्तासृगन्वये ।
प्रलेपः सघृतैः कुष्ठकुटिलोत्पलचन्दनैः ॥ १० ॥

(वाहटे)

देवदारुबलारास्नाशुण्ठीचन्दनकुष्ठजः ।
पिष्टोऽथमारनालेन लेपो वातशिरोर्त्तिनुत् ॥ ११ ॥

(हारिश्चन्द्रे)

यवान्मुद्गान् तिलान्माषान्कुलत्थांन्भर्जितांस्तथा ।
कुष्ठं दारुहरिद्रां च सैन्धवं चेति चूर्णयेत् ॥ १२ ॥

तैलक्षीरघृतैर्युक्तां पचेदुत्कारिकां शुभाम् ।
युक्त्योपनाहः कर्तव्यः शिरसो वातनाशनः ॥ १३ ॥

(भेळे)

न चात्रं रक्तमवसेचयेत् । वातोद्रेकभयात् । एवमसिद्धौ वातजे श्लेष्मजे च यथोक्तो दाहः ॥

(संग्रहे)

अर्धावभेदकेऽप्येषा यथादोषान्वयात्क्रिया ।

(वाहटे)

निर्गुण्डीपत्रस्वरसश्च सघृतमण्डसैन्धवो नस्यम् । शारिबोत्पल-कुष्ठवचामधुकापिप्पलीभिः सतैलाम्लो लेपः ।

(संग्रहे)

लेपे प्रपुन्नाटोऽम्लकल्कितः ।

(वाहटे)

सूर्यावर्ते सिरामोक्षादयः

सूर्यावर्तेऽपि तद्वत् । विशेषतस्तु सिरामोक्षः ॥

(संग्रहे)

सूर्यावर्ते सिरामोक्षो नावनं क्षीरसर्पिषा ।
हितं क्षीरघृताभ्यासं ताभ्यां चैव विरेचनम् ॥ १४ ॥

(चाक्षुषे)

जाङ्गलानि च मांसानि कारयेदुपनाहनम् ।
तेनास्य शाम्यति व्याधिः सूर्यावर्त्तः सुदारुणः ॥ १५ ॥

(चन्द्रटे)

सिद्धं दुग्धे शर्करायष्टिकाभ्यां
सूर्यावर्त्तेऽर्धावभेदे च सर्पिः ।

---

१. 'वेधो' ख. पाठः.

नस्यं कुर्याच्छर्कराकुंकुमाभ्यां
सिद्धं सर्पिर्नावनं वा तथैव ॥ १६ ॥

(योगामृते)

शिरोऽभितापे सिरामोक्षादयः ।

शिरोऽभितापे पित्तोत्थे स्निग्धस्य व्यधयेत् सिराम् ।
शीताः शिरोमुखालेपसेकशोधनबस्तयः ॥ १७ ॥

जीवनीयशृते क्षीरसर्पिषी पाननस्ययोः ।

(वाहटे)

कुष्ठचन्दनलामज्जनिंबनिर्यासबालकैः ॥ १८ ॥

पिष्ट्वा दुग्धेन सघृतो लेपः पित्तशिरोर्तिनुत् ।

(हारिश्चन्द्रे)

त्रिफलां च निषेवेत त्रिभागघृतमूर्च्छिताम् ॥ १९ ॥

बलाव्याघ्रनखोशीरमधुकोत्पलचन्दनैः ।
क्षीरपिष्टैः प्रलेपः स्यात् पैत्ते क्षीरादिसेचनम् ॥ २० ॥

त्वक्पत्रशर्कराः पिष्ट्वा नावनं तण्डुलांबुना ।
घृतं वा शर्कराद्राक्षायष्टीक्षीरैः प्रसाधितम् ॥ २१ ॥

(सिद्धसारे)

रक्तजशंखकयोः चिकित्सा ।

कर्तव्यं रक्तजेऽप्येतत् प्रत्याख्याय च शङ्खके ।

श्लेष्मजे वमनादयः ।

श्लेष्माभितापे जीर्णाज्यस्नेहितः कटुकैर्वमेत् ॥ २२ ॥
स्वेदप्रलेपनस्याद्या रूक्षतीक्ष्णोष्णभेषजैः ।

(वाहटे)

स्वेदः पिण्डेन रूक्षेण । शिग्रुनिंबैरण्डक्वाथेन वा नाडीस्वेदः ।

(संग्रहे)

मातुलुंगस्य मूलानि शिग्रुमूलं तथैव च ॥ २३ ॥
कुष्ठजीरकशुण्ठीभिर्लेपः श्लेष्मशिरोर्तिनुत् ।

(हारिश्चन्द्रे)

दारुरोहिषशार्ङ्गेष्टासिन्धूत्थसरलैर्दहेत् ॥ २४ ॥

(सिद्धसारे)

शस्यते चोपवासोऽत्र निचये मिश्रमाचरेत् ।

कृमिजे नस्यधूमादयः ।

कृमिजे शोणितं नस्यं तेन मूर्छन्ति जन्तवः ॥ २५ ॥

मत्ताः शोणितगन्धेन निर्यान्ति घ्राणवक्त्रयोः ।
सुतीक्ष्णनस्यधूमाभ्यां कुर्यान्निर्हरणं ततः ॥ २६ ॥

कृमिभिः पीतरक्तत्वाद्रक्तमत्र न निर्हरेत् ।

(वाहटे)

विडङ्गस्वर्जिकादन्तीहिंगुगोमूत्रसंयुतम् ॥ २७ ॥

संसिद्धं सार्षपं तैलं कृमिघ्नं नस्यमुत्तमम् ।
करवीरार्कमूलत्वक्द्रवन्तीगजपिप्पली ॥ २८ ॥
सिद्धं तैलं तु तन्नस्याच्छिरःकृमिविनाशनम् ।

(चाक्षुषे)

कम्पस्य सामान्यचिकित्सा ।

वाताभितापविहितः कम्पे दाहादिना क्रमः ॥ २९ ॥

(वाहटे)

शिरोरोगस्य सामान्यचिकित्सा ।

विपाच्य स्वस्तिकं शाकं पयसा स्वेदमाचरेत् ।
घृतलिप्ते ललाटे तु घोरशीर्षरुजापहः ॥ ३० ॥

(योगे-)

सैन्धवो वा सक्तुसरः पायसो वा ससैन्धवः ।
शिरोरोगहरः कोष्णो ललाटे स्वेद उच्यते ॥ ३१ ॥

कार्पासस्य च पत्रैश्च पीलु*पक्वफलैस्तथा ।
परूपकस्य तर्कार्याः पत्रैः स्वेदः शिरोरुजि ॥ ३२ ॥

नस्यम् ।

पिप्पलीसैन्धवैस्तैलं विपचेन्मतिमान् भिषक् ।
तेन नस्यं प्रदातव्यं शिरोरोगप्रणाशनम् ॥ ३३ ॥

(सारसंक्षेपे)

* 'पत्र' इति पाठान्तरम् ।

नस्यं विदध्याद् गुळनागरं वा ससैन्धवां मागधिकामथो वा ।
घ्राणास्यमन्याहनुबाहुपृष्ठशिरोक्षिदन्तश्रवणामयेषु ॥ ३४ ॥

(अमितप्रभीयात्)

नस्यं शिरोर्त्तौ स्तन्येन पच्चूरमहिमाम्बुना ।
त्वगन्दनमजिन्मुस्तसुमनःक्षारकाणि वा ॥ ३५ ॥

(सिद्धयोगे)

धूमनस्यादयः ।

विश्वोषणनिशाचूर्णवर्त्यस्तैलोक्षिताः पृथक् ।
धूमनस्याच्छिरोरोगं शमयन्ति यथा विषम् ॥ ३६ ॥

(नारायणीयात्)

स्तन्यनिघृष्टा शुण्ठी लेपादचिराच्छिरोर्त्तिमपनुदति[*] ।
पुन्नागबीजमज्जेव सुपिष्टावन्तिसोमेन ॥ ३७ ॥

(काञ्चीपुरवासी)

शुण्ठीविळङ्गयष्ट्याह्वैः भृङ्गतोये भृतं घृतम् ।
नस्यं षड्बिन्दु[†]दानेन सर्वमूर्द्धगदापहम् ॥ ३८ ॥

(सिद्धसारे)

कुलोत्तुङ्गतैलम् ।

यत्काकजङ्घाह्वयभृङ्गराजधात्रीविभीतस्वरसेषु सिद्धम् ।
तैलं शिरोरुक्षु भिषग्भिराप्तैरुक्तं कुलोत्तुङ्गसमाख्यमेतत् ॥ ३९ ॥

(वृद्धाः)

शिग्रुमयूरकबीजैर्नीलीस्वरसे भृतेन तैलेन ।
नस्यादार्त्तिः शिरसो नश्येच्चिरकालरूढापि ॥ ४० ॥

(काञ्चीपुरवासी)

षड्बिन्दुतैलम् ।

एरण्डमूलं तगरं शताह्वा जीवन्ति रास्ना लवणोत्तमं च ।
भृङ्गं विळङ्गं मधुयष्टिका च विश्वौषधं चेति समानि कुर्यात् ॥ ४१ ॥

एतैर्विपक्कं पयसा च तैलं चतुर्गुणे भृङ्गरसे तथैव ।
षड्बिन्दवो नासिकयोः प्रयुक्ताः सर्वान्निहन्युश्शिरसो विकारान् ॥४२॥

---

* 'हरति' ग. पाठः.

† 'नादेयं' इति पाठान्तरम् ।

च्युतांश्च केशान्पततश्च दन्तानबद्धमूलांश्च दृढीकरोति ।
सुपर्णनागप्रतिमं च चक्षुर्बाह्वोर्बलं चाप्यधिकं करोति ॥ ४३ ॥

तन्त्रान्तरादिति चन्द्रटे षड्बिन्दुतैलम् ॥

कुमारीतैलम् ।

मञ्जिष्ठाञ्जनशारिबाब्दकटुकातक्कोलजातीफल-
श्रीकण्ठत्रिफलाजटातगररुग्यष्टीचतुर्जातकैः ।
सौशीरागरुचोरयुग्ममृगनाभीन्दूत्पलाम्भोबिसै-
स्तैलं नेत्रशिरोर्त्तिहारि सपयःसिद्धं कुमारीरसे ॥ ४४ ॥

अमृतामलकतैलम् ।

क्वाथे धात्रीगुडूच्योर्बिसमधुकबलाशारिबोशीरपद्मैः
काकोल्यादित्रिजातागरुसरलमधूकोत्पलाम्भोवरीभिः ।
श्रेष्ठातक्कोलजातीतगरमृगमदैश्चन्दनाब्देन्दुचोरै-
स्तैलं पक्वं सदुग्धं शमयति नितरां रोगजातं शिरोक्ष्णोः ॥ ४५ ॥

अमृतबलातैलम् ।

तैलं हन्ति सदुग्धमक्षिशिरसो रोगान् गुडूचीबला-
क्वाथे साधितमब्दचोरकशटीतक्कोलजातीहिमैः ।
काकोल्यादिमधूकदारुसरलश्रेष्ठाचतुर्जातकै-
र्यष्टीसैन्धवबिसोत्पलागरुवरीकर्पूरकुष्ठाम्बुभिः ॥ ४६ ॥

कन्यागुडूचीतैलम् ।

तैलं चन्दनगोपिकाख्यगरुरुक्पुन्नागमुस्तेङ्गुद-[१]
द्वन्द्वोद्गन्धिजटाम्बुचम्पकचतुर्जाताब्दसेव्यानतैः ।
कस्तूरीमृगकुङ्कुमेन्दुकटुकातक्कोलजातीफलै-
र्वासादक्षिशिरोर्त्तिनुत् किल शृतं कन्यागुडूचीरसे ॥ ४७ ॥

भृङ्गामलकादितैलम् ।

भृङ्गामलकरसप्रस्थं तैलप्रस्थं पलं च मधुकस्य ।
क्षीराढके विपक्वं बलाकामपि कोकिलां कुरुते ॥ ४८ ॥

---

१. 'यष्टिगोप्यगरु' ख. पाठः.

अन्धमनन्धं कुरुते बधिरमबधिरं तथैव चलदन्तम् ।
उपचितपीनोरस्को भवति युवा मासमात्रयोगेन ॥ ४९ ॥

शीतपिण्डतैलम् ।

अरुणरिपुगळोजीकूलकाबिल्वधात्री-
तरुणजलकुमारीकेतकीस्वस्तिकानाम् ।
स्वरसमपि मकुष्ठस्यापि तैलं पयश्चे-
त्यखिलमिह समानं भागतो लोहपक्वम् ॥ ५० ॥

अगरुबिसगळोजीजातितक्कोलयुक्तै-
र्मधुकनयनभूषाशारिबावारिशीतैः ।
त्रिकसुरभिशटीरुक्सैन्ध्यमुस्तोत्पलाब्दै-
र्मिसितगरविदारीस्पृक्कमांसीक्षतोत्थैः ॥ ५१ ॥

एतत्तैलं नामतः शीतपिण्डं
चक्षुर्मूर्ध्नोर्दाहपाकौ निहन्यात् ।
केशानां यौ स्फोटजातौ च रौक्ष्यं
नेत्रास्रावं तैमिरं नीलिकां च ॥ ५२ ॥

तुङ्गद्रुमादितैलम् ।

तुङ्गद्रुमस्य तरुणस्य जले सुगन्धा-
लामञ्जयष्टिमधुकोत्पलचन्दनानाम् ।
कल्केन दुग्धसहितेन विपक्वमेत-
त्तैलं शिरोनयनतर्पणमर्पणेन ॥ ५३ ॥

बलाधात्र्यादितैलम् ।

एको भागो बलाधात्र्योर्गुडूच्यास्तु तदर्धकम् ।
उशीरस्य तदर्धं स्यात्तदर्धं हिरिबेरकम् ॥ ५४ ॥
तदर्धं चन्दनं यष्टिं प्रसूनं बकुलस्य च ।
द्रोणेऽपां विपचेत्सम्यक् चतुर्भागावशेषितम् ॥ ५५ ॥
अत्र कल्कं प्रदातव्यं मधुकं चन्दनद्वयम् ।
कुष्ठमुत्पलमब्दं च शारिबा च त्रिजातकम् ॥ ५६ ॥
जातीफलं सतक्कोलं कर्पूरं च शतावरी ।
जीवकर्षभकौ मेदा मृद्वीका कुंकुमं तथा ॥ ५७ ॥

कासञ्जकं च शालूकं चोरकद्वयपुष्करम् ।
नागपुष्पं नखं स्पृक्का मञ्जिष्ठा कटुरोहिणी ॥ ५८ ॥

अंजनं सरलं दारु चंपकं मृगनाभिकम् ।
मधूकपुष्पं श्योनाकं त्रिफला फलिनी मिसी ॥ ५९ ॥

मुस्तागरु तथा मांसी तगरं पद्मकेसरम् ।
कषायस्य समं क्षीरं रसमामलकात्तथा ॥ ६० ॥

दत्त्वा तद्वच्छतावर्याः तैलप्रस्थं विपाचयेत् ।
एतत्तैलं निहन्त्याशु पानाभ्यञ्जननावनैः ॥ ६१ ॥

शिरोनेत्रगतान् रोगानन्यान् पित्तानिलोद्भवान् ।
अंगदाहे शिरोरोगे नेत्ररोगे च शस्यते ॥ ६२ ॥

क्षतक्षयहरं वृष्यं रक्तमांसबलप्रदम् ।
ऊर्ध्वजत्रुविकारेषु विशेषेण प्रशस्यते ॥ ६३ ॥

(तन्त्रान्तरात्)

उपशीर्षकाचिकित्सा ।

नवे जन्मोत्तरं जाते योजयेदुपशीर्षके ।
वातव्याधिक्रियां पक्वे कर्म विद्रधिचोदितम् ॥ ६४ ॥

आमपक्वे यथायोग्यं विद्रधीपिटकार्बुदे ।

अरूंषिकाचिकित्सा ।

अरूंषिका जलौकाभिर्हृतास्रा निम्बवारिणा ॥ ६५ ॥
सिक्ता प्रभूतलवणैर्लिंपेदश्वशकृद्रसैः ।
पटोलनिम्बपत्रैर्वा सहरिद्रैः सुकल्कितैः ॥ ६६ ॥

गोमूत्रातिलपिण्याककृकवाकुमलैरपि ।
कपालभृष्टं कुष्ठं वा चूर्णितं तैलसंयुतम् ॥ ६७ ॥
रूंषिकालेपनं कण्डूक्लेददाहार्त्तिनाशनम् ।
मालतीचित्रकाश्वघ्ननक्तमालैः प्रसाधितम् ॥ ६८ ॥
वचारूंषिकयोस्तैलमभ्यङ्गः क्षुरघृष्टयोः ॥

(वाहटे)

मनःशिलैलाहरितालपिप्पलीकुष्ठकासीसहरिद्राकरञ्जतगरमुस्तबिल्ङ्गचित्रकसिद्धार्थककरवीरमूलचूर्णगर्भं तैलमादित्यपाकं व्रणरोपणम् । एवमनुपशमे वमनधूमकायशिरोविरेकान् कुर्यात् ॥

(सङ्ग्रहे)

दारुणके सिरावेधादयः ।

विध्येत्सिरां दारुणके ललाट्यां शीलयेन्मृजाम् ।
नावनं मूर्ध्नि वस्तिं च लेपयेच्च समाक्षिकैः ॥ ६९ ॥

प्रियालबीजमधुककुष्ठमाषैः ससर्षपैः ।
लाक्षाशम्याकपत्रैडगजधात्रीफलैस्तथा ॥ ७० ॥

कोरदूषतृणक्षारवारिप्रक्षालनं हितम् ॥

(वाग्भटे)

मुस्तादिगुलिका ।

मुस्ताकारभिकोषणनिम्बत्वग्धात्रीभिः क्रमात्पिष्टैः ।
गुलिकाः प्रलेपयुक्ताः सर्वोवासापहाः केश्याः ॥ ७१ ॥

धात्रीफलेन लिप्ते लिकुचफलस्वरसगाढपिष्टेन ।
मूर्धनि सोर्वासरुजः प्रभवति कण्ड्वादिकं हर्तुम् ॥ ७२ ॥

(काञ्चीपुरवासी)

लिकुचस्वरसे तैलं पचेन्मरिचकारभी ।
कल्कीकृत्य तदभ्यङ्गात्केशघ्नुर्वासकण्डुहृत् ॥ ७३ ॥

धुर्धूरकतैलम् ।

धुर्धूरकस्य स्वरसे तद्बीजैः श्लक्ष्णकल्कितैः ।
पक्वं तैलं निहन्त्याशु कण्डूकेशच्युतिं नृणाम् ॥ ७४ ॥

कुण्डलीफलसारेण बहुशः परिभावितम् ।
अङ्कोलबीजमरिचकुष्ठचूर्णं ततः पुनः ॥ ७५ ॥

तैलेन मिश्रितं धान्ये स्थापयेद्दशवासरम् ।
तत्केशदोषकण्डूतिनाशनं केशरोहणम् ॥ ७६ ॥

(वृद्धास्तु:)

चित्राद्वितैलम् ।

चित्रार्कालर्कनालीवसुककुरुदुकाः केतकी सेन्द्रवल्ली
वीरा जीमूतभृङ्गावमृतहठनिशाः कुण्डली चापि तेषाम् ।
तैलं सिद्धं रसेषु त्रिकटुकरजनीसोमराजी च पथ्या
सिद्धं सिद्धार्थकैस्तत्प्रणुदति शिरसो रोगजातानि केश्यम् ॥ ७७ ॥

(तन्त्रान्तरे)

जीमूतादितैलम् ।

जीमूतभृङ्गकरवीरनिशार्कनील्य-
स्तेषां रसे तिलजमेकरसेन तुल्यम् ।
कार्पासमूलसहितं मृदुवह्निपक्व-
मुर्वासकेशपतनं विनिहन्ति कण्डूम् ॥ ७८ ॥

(तन्त्रान्तरे)

इन्द्रलुप्ते प्रलेपादयः ।

इन्द्रलुप्ते यथासन्नं सिरां विध्वा प्रलेपयेत् ।
प्रच्छायगाढं कासीसमनोह्वातुत्थकोषणैः ॥ ७९ ॥
वन्यामरतरुभ्यां वा गुञ्जामूलफलैस्तथा ।
तथा लांगलिकामूलैः करवीररसेन वा ॥ ८० ॥
धूर्धूरकस्य पत्राणां भल्लातकरसेन वा ।
अथवा माक्षिकहविस्तिलपुष्पत्रिकण्टकैः ॥ ८१ ॥
तैलाक्ता हस्तिदन्तस्य मषी चाप्यौषधं परम् ।
शुक्तरोमोद्गमे तद्वन्मषी मेषविषाणजा ॥ ८२ ॥
वर्जयेद्वारिणा सेकं यावद्रोमसमुद्गमः ॥

(वाहटे)

घृष्टलिप्तमेरण्डपत्रावच्छादितं सत् रात्रिमुषितं प्रातर्माहिषनवनीतेन लिम्पेत् । मार्कवपत्रसहचरपुष्पपक्वं वा । वार्ताकफलैर्वा तैलं पक्वं क्षौद्राञ्जनयुक्तमालेपः । सक्षौद्रो वा क्षुद्रवार्ताकरसः । जलशूको वा पलाशक्षारसान्द्रः । गोशकृता वा घृष्टमिन्द्रलुप्तमरुष्करसेनावलिप्या-

न्तर्धूमदग्धकूर्ममध्यावचूर्णयेत् । कूर्मकपालभस्मना वा सुरसारसाक्तेन प्रदिह्यात् । हस्तिदन्तमध्या वा तैलान्वितया । पूतीकरञ्जपत्राणि वा ससैन्धवानि लेपः । पिप्पल्यञ्जनरसाञ्जनवाकुचिकाफललोहरजांसि वा गोमूत्रपिष्टानि । खलतिविहितानि चाचरेत् ॥

(संग्रहे)

केशरोहणादियोगाः ।

छगलक्षीररसाञ्जनदग्धेभविषाणलेपनात्केशाः ।
रोहन्ति करतलेष्वपि किं पुनरन्यप्रदेशेषु ॥ ८३ ॥

मधुकाञ्जनतिलकुसुमैर्लोहितशर्करारिपुष्पसंयुक्तैः ।
साजक्षीरो लेपो नखेऽपि रोमोद्गमं कुरुते ॥ ८४ ॥

(तन्त्रान्तरादिति चन्द्रटे)

खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम् ।
नस्यवक्त्रशिरोऽभ्यङ्गप्रदेहैः समुपाचरेत् ॥ ८५ ॥

सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनम् ।
मासं वा निम्बजं तैलं क्षीरभुङ्नावयेद्यतिः ॥ ८६ ॥

(बाहटे)

नीलोत्पलमुशीरं च तगरं नागकेसरम् ।
शारिवां चैव कुष्ठं च अजाक्षीरेण पेषयेत् ॥ ८७ ॥
तैलमेतैर्विपक्वं तु रोम्णां जननमुत्तमम् ॥

(वृद्धश्रवाः)

त्रिफलार्जुनसैर्यकत्वक्पुष्पकृष्णपिण्डीतकफलमूलनीलोत्पललोहचूर्णकासीसजम्बूमार्कवमञ्जिष्ठामेषशृङ्गीखदिररजःसकर्दममर्दितोक्ताणुतैलयुक्तमसनसारसमुद्गके न्यस्तं कर्दमे मासं निखातं स्थितमुद्धृतं सूचीकूर्चेण प्रच्छितायाः खलतेर्लेपः परं लोमसंजननः । खलतिपलितयोश्च प्रयोगान् परस्परं विदध्यात् ॥

(सङ्ग्रहे)

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम् ।
गुडूचीस्वरसे तैलमभ्यङ्गात्केशरोहणम् ॥ ८८ ॥

स्नुहीपयः पयोऽर्कस्य लाङ्गलीमार्कवौ विषम् ।
मूत्रमाजं सगोमूत्रं रक्तकेशेन्द्रवारुणीम् ॥ ८९ ॥
सिद्धार्थं तीक्ष्णगन्धां च कल्कं दत्त्वा विपश्चिता ।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥ ९० ॥

(सिद्धसारे)

नीलीभृङ्गादितैलम् ।

नीलीभृङ्गरजःशतक्रतुलताधात्रीफलानां रसे
क्षीरैराजकनालिकेरमहिषीधेनूद्भवैः साधितम् ।
तैलं तत्पयसैव पिष्टलोकैर्यष्ट्याह्वगुञ्जाञ्जनैः
केशान् संजनयेत्तलेऽपि करयोरास्तामकेशं शिरः ॥ ९१ ॥

(तन्त्रान्तरे)

नस्यतैलम् ।

क्षीरात्सहचराद् भृङ्गरजसः सौरसाद्रसात् ।
प्रस्थैस्तैलस्य कुडवो यष्टिमधु पलान्वितः ॥ ९२ ॥
सिद्धः शैलासने भाण्डे भृङ्गे मेषस्य वा स्थितः ।
नस्यं स्यात्क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ॥ ९३ ॥
उत्पाट्य पलितं देयावाशये पलितापहौ ।

महानीलतैलम् ।

आदित्यवल्ल्या मूलानि कृष्णसैरीयकस्य च ॥ ९४ ॥
फलं कृष्णशणात्पत्रं सुरसायाष्टिमार्कवम् ।
सुराह्वं काकमाची च पृथग्दशपलांशिकम् ॥ ९५ ॥
प्रपौण्डरीकमञ्जिष्ठा लोध्रकृष्णागरूत्पलम् ।
आम्रास्थि कर्दमः कृष्णा मृणाली रक्तचन्दनम् ॥ ९६ ॥
नीलीभल्लातकास्थीनि कासीसं मदयन्तिका ।
सोमराज्यसनः शस्त्रं कृष्णं पिण्डीतचित्रकौ ॥ ९७ ॥
पुष्पाण्यर्जुनकाष्मर्यादाम्रजम्बूफलाञ्जनम् ।
प्रत्येकं पञ्चपलिकं पिष्टं सत्रिफलाकणम् ॥ ९८ ॥

अक्षतैलाढकं तेन पचेद् धात्रीरसार्मणे ।
कुर्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥ ९९ ॥

लोहपात्रे ततः पूतं महानीलं प्रयोजितम् ।
तत्पाने नावनाभ्यङ्गे शुद्धस्य नियतात्मनाम् ॥ १०० ॥

सर्वजत्रूर्ध्वरोगघ्नं पलितघ्नं विशेषतः ॥

(सङ्ग्रहे चरकविमर्शके च)

तिलाः सामलकाः पद्मकिञ्जल्को मधुकं मधु ।
रञ्जयेद् बृंहयेच्चापि केशान्मूर्ध्नि प्रलेपनात् ॥ १०१ ॥

(वाग्भटे)

नील्यादितैलम् ।

नीलीदलं भृङ्गरजोऽर्जुनत्वक्
पिण्डीतकं कृष्णमयोरजश्च ।
बीजोद्भवं साहचरं च पुष्पं
पथ्याक्षधात्रीसहितं विचूर्ण्य ॥ १०२ ॥

एकीकृतं सर्वमिदं प्रमाय
पङ्केन तुल्यं नलिनीभवेन ।
संयोज्य पक्वं कलशे निधाय
लौहे दृढे सद्मनि सापिधाने ॥ १०३ ॥

अनेन तैलं विपचेद्विमिश्र्य रसेन भृङ्गत्रिफलाभवेन ।
आसन्नपाके च परीक्षणार्थं पत्रं बलाकाभवमाक्षिपेच्च ॥ १०४ ॥

भवेद्यदा तद् भ्रमराङ्गनीलं तदा विपक्वं विनिधाय पात्रे ।
कार्ष्णायसे[1] मासमवस्थितं तदभ्यङ्गयोगात् पलितं निहन्यात् ॥

(सुश्रुतान्मिश्रके नील्याद्यं तैलम्)

मञ्जिष्ठादितैलम् ।

माञ्जिष्ठा पद्मकं कुष्ठं चन्दनं गैरिकं बलाम् ।
हरिद्रे द्वे प्रियङ्गुं च नागयष्टीं सवाकुचीम् ॥ १०६ ॥

---

१. 'कृष्णायसे' ख. पाठः

दारु प्रपाण्डरीकं च पिष्ट्वा तु पलिकानि तु ।
तैलप्रस्थं गवां क्षीरं प्रस्थं क्वाथं तथासनात् ॥ १०७ ॥

चतुर्गुणं भृङ्गरसं शनैर्मृद्वग्निना पचेत् ।
अस्य तैलस्य पक्वस्य शृणु वीर्यमतः परम् ॥ १०८ ॥

केशशाते शिरोदुःखे मन्यास्तम्भे हनुग्रहे ।
कर्णदन्ताक्षिशूले च नस्येऽभ्यङ्गे च योजयेत् ॥ १०९ ॥

सुकुञ्चिताग्रान् स्निग्धांश्च केशान् संजनयेद् बहून् ।
पलित चेन्द्रलुप्ते च तैलमेतत्प्रशस्यते ॥ ११० ॥
मञ्जिष्ठाद्यमिदं नाम्ना शिरोरोगनिवारणम् ॥

(तन्त्रान्तरे)

महिषीनवनीतप्रयोगः ।

क्षीरोदकवितुषीकृतसितगुञ्जाकल्कसानिकोन्मिश्रात् ।
कंसं महिषीक्षीरात् सततं दर्व्याविघट्टयन्विपचेत् ॥ १११ ॥

दध्नस्ततः सुजातं नवनीतं सार्धपलसुजङ्गरजः ।
लोहसमुद्गान्तःस्थितमाकार्ष्ण्याद् व्रीहिराशिमध्यस्थम् ॥११२॥

त्रिफलाजलधौताग्निराश्चत्वारिंशद्दिनान्यथाभ्यंज्यात् ।
जितमधुकरनिकुरुम्बच्छवयः केशाः स्युराजीवम् ॥ ११३ ॥

लोहवरादितैलम् ।

लोहवरारुक्कट्फलजपाप्रसूनकिमिघ्ननीलीनाम् ।
क्वाथे केतकिनीलीभृङ्गपयोभिः शृतं तैलम् ॥ ११४ ॥

जम्बूवन्दाकायःकुष्ठरजोन्मिश्रितं समभ्यञ्ज्यात् ।
जितचमरवालभारस्निग्धघनोदारकेशः स्यात् ॥ ११५ ॥

केतक्यादितैलम् ।

केतकवटमृगधात्रीभृङ्गयमृतानालिकेरवल्कलजे ।
धात्रीकल्केन रसे तैलं केश्यं समक्षीरे ॥ ११६ ॥

(काञ्चीपुरवासी)

नावनतैलम् ।

प्रपौण्डरीकयष्ट्याह्वपिप्पल्युत्पलचन्दनैः ।

धात्र्यम्बुसाधितं तैलं नावनात्पलितादिजित् ॥ ११७ ॥
शमाशेलुतिलाक्षाणां तैलं नावनतो जराम् ।
भृङ्गनीलीकुरण्डाह्वशिरीषाम्बुजुषां हरेत् ॥ ११८ ॥
शिखिपित्तविसाग्रास्थिमद्यन्त्यजनोत्पलैः ।
सनीलीभृङ्गकासीसैरक्षतैलं समैः पचेत् ॥ ११९ ॥
लोहभाण्डे स्थितं मासमकालपलितं जयेत् ।
एतदभ्यङ्गमात्रेण नावनेनापि कालजम् ॥ १२० ॥

(सिद्धसारे

पचेत् सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ।
तेनालिप्तं शिरःशुद्धमस्निग्धमुषितं निशाम् ॥ १२१ ॥
तत्प्रातस्त्रिफलाधौतं स्यात् कृष्णस्निग्धमूर्धजम् ॥

(संग्रहे)

अन्यन्महानलितैलम् ।

आमण्डको बला भृङ्गी गुडूची चेन्द्रवल्लिका ।
सुनिषण्णो हठश्चापि पलाशः केतकी तथा ॥ १२२ ॥
एतेषां स्वरसा ग्राह्या क्षुण्णानां च पृथक् पृथक् ।
बीजकत्रिफलानीलीक्वाथार्धेन समायुते ॥ १२३ ॥
विपचेत्सप्तगुणिते स्वरसे मतिमान् भिषक् ।
तिलात् कृष्णात्सुजातं वा तैलं वैभीतकं तु वा ॥ १२४ ॥
क्षीरं तु माहिषं तत्र स्नेहात् षड्गुणमावपेत् ।
तत्र कल्कानिमान्दद्यादसनोदकपेषितान् ॥ १२५ ॥
श्यामापुष्पं मातुलुङ्गं नीली कृष्णायसंरजः ।
त्रिफलापद्मिनीमूलं पुष्पं सहचरस्य च ॥ १२६ ॥
सोमराजीमृणालं च पुष्पं पिण्डीतकस्य च ।
अर्जुनत्वक्तथा मुस्ता तिलाः कृष्णास्तथैव च ॥ १२७ ॥
प्रपौण्डरीकमञ्जिष्ठाचन्दनं शारिवाद्वयम् ।
वर्षाभूश्चूतमज्जा च जम्बूपुष्पं तथासनम् ॥ १२८ ॥
इङ्गुदी मदयन्ती च उशीरं सुरसं तथा ।
शतपुष्पाभद्रदारु काकमाची च मार्कवम् ॥ १२९ ॥

नीलोत्पलं कर्दमं च मूर्वामूलं तथाञ्जनम् ।
मधुकं चेति तुल्यांशं लाभतः संग्रहेद् बुधः ॥ १३० ॥

आयसे भाजने सिद्धं मृदुपाकेन गाळयेत् ।
एकमासं यथावस्थं धान्यपाकं प्रकल्पयेत् ॥ १३१ ॥

निदध्यादायसे भाण्डे वैजके वाथ भाजने ।
अथैतदुपयुञ्जीत शीतगन्धाधिवासितम् ॥ १३२ ॥

नस्योपमर्दनालेपपानाभ्यङ्गविधानतः ।
तैलं प्रशमयेद्दोषं खालित्यादिं शिरोगतम् ॥ १३३ ॥

इन्द्रलुप्ते शिरोलिप्तमेतेन सुनिरन्तरम् ।
जायते मासमात्रेण श्लक्ष्णनीलाळकाचितम् ॥ १३४ ॥

अश्नीयान्माषयूषेण पयसा वा घृतेन वा ।
शाल्यन्नं कृसरान्नं वा सात्म्यं सेवेद्यथाविधि ॥ १३५ ॥

महानीलमिति ख्यातं केश्यमिन्द्रियवर्धनम् ।
तैलोत्तममिदं प्राह विदेहाधिपतिः स्वयम् ॥ १३६ ॥

केशरञ्जनानि तैलानि ।

सैरीयजम्ब्वर्जुनकाश्मरीजं
　पुष्पं तिलो मार्कवचूतबीजे ।
पुनर्नवौ कर्दमकण्टकार्यौ
　कासीसपिण्डीतकबीजसारम् ॥ १३७ ॥

फलत्रयं लोहरजोऽञ्जनं च
　यष्ट्याह्वयं नीरजशारिवे च ।
पिष्ट्वा च सर्वं सह मादयन्त्या
　साराम्भसा बीजकसम्भवेन ॥ १३८ ॥

साराम्भसा सप्तभिरेव पश्चात्
　प्रस्थैः समालोड्य दशाहगुप्तम् ।
लौहे सुपात्रे च निधाय तैल-
　मक्षोद्भवं तच्च पचेत् प्रयत्नात् ॥ १३९ ॥

पक्वं च लौहेऽभिनवे विधाय
नस्यं विदध्यात्परिशुद्धकायः ।
अभ्यञ्जयेन्नित्यमनेन केशान्
भुञ्जीत माषान् कृसरानथो वा ॥ १४० ॥

मासोपरिष्टाद् घनकुञ्चिताग्राः
केशा भवन्ति भ्रमराञ्जनाभाः ।
केशास्तथान्ये खलतौ भवेयु-
र्जरा न चैनं सहसाभ्युपैति ॥ १४१ ॥

(पाठशुद्धौ)

सममाम्रास्थ्ययश्चूर्णं तत्समं त्रैफलं रजः ।
स्तोकं नीलाञ्जनाच्चूर्णमेतच्चूर्णचतुष्टयम् ॥ १४२ ॥

षड्गुणेन कषायेण त्रिफलाया विलोलितम् ।
द्विगुणेन तु तैलेन लोहपात्रे विमर्दितम् ॥ १४३ ॥

ततो निधापयेद्धान्यराशौ मासचतुष्टयम् ।
तत्करोति बलाकाभान् केशान्नीलाञ्जनोपमान् ॥ १४४ ॥

धात्रीवन्दाकतैलम् ।

धात्रीवन्दाकभृङ्गीत्रिफलरसयुतं लोहचूर्णेन युक्तं
गुञ्जायाश्चापि मूलं समधरणधृतं क्षीरपिष्टं हि सर्वम् ।
तैलेऽस्मिन् पच्यमाने जपकुसुमदलं प्रक्षिपेद्रागहेतो-
रेतस्माद्रोमकूपादलिकुलसदृशा जायते रोमराजिः ॥

(तन्त्रान्तरे)

श्लेष्मातकतैलम् ।

बीजैः श्लेष्मातकस्य व्यपगमिततुषैः काञ्जिकश्लक्ष्णपिष्टै-
र्यल्लिप्ताल्लोहदण्डाद्दिनकरकिरणैस्तापितात्प्रच्यवेत ।
तत्तैलं केशकार्ष्ण्यं जनयति परमं नावनाभ्यञ्जनाभ्यां
मूर्धघ्राणाक्षिदन्तश्रवणगळरुजं हन्ति निःशेषतश्च ॥ १४६ ॥

(सङ्ग्रहे)

कीचकफलतैलम् ।

कीचकानां फलैः पिष्टैः कटुतैलं विपाचितम् ।
सगोमूत्रं तदभ्यङ्गात् कपोलव्याधिनाशनम् ॥ १४७ ॥

(चन्द्रटे)

जम्बीरादितैलम्

अङ्कोलबीजमरिचकुष्ठैः कल्कीकृतैर्भिषक् ।
पचेत् बकुलपत्रस्य जम्बीरस्य रसाढके ॥ १४८ ॥
तैलप्रस्थं शिरोऽभ्यङ्गात् शिरःकुष्ठविनाशनम् ।
गुर्वी स केशकण्डूं च शिरोरोगांश्च नाशयेत् ॥ १४९ ॥
केशानां वर्धनं नित्यमङ्गदौर्गन्ध्यनाशनम् ।
तैलप्रस्थं सधान्याम्लं जम्बीरस्य रसाढके ॥ १५० ॥
प्रस्थे च तुलसीचिञ्चानीलीबकुलजाद्रसात् ।
प्रत्येकं कल्कितैरेभिः कुण्डलीफलजाम्बुना ॥ १५१ ॥
यष्टीत्रिजातकोशीरकुष्ठजातीरसाम्बुदैः ।
तकोलबीजमञ्जिष्ठाकर्पूरमृगनाभिभिः ॥ १५२ ॥
त्रिफलाङ्कोलबीजैश्च चन्दनागरुकुङ्कुमैः ।
सम्यक् सिद्धमिदं केश्यं कृमिकण्डूविनाशनम् ॥ १५३ ॥
शिरःकुष्ठं शिरोरोगान्दुर्वासङ्क्लेशशातनम् ।
निहन्त्यभ्यङ्गमात्रेण देहदौर्गन्ध्यनाशनम् ॥ १५४ ॥
कुष्ठाधिकारनिर्दिष्टं पञ्चतैलं च योजयेत् ।

(योगभाकायाम्)

मायूरघृतम् ।

मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।
दशमूलबलारास्नामधुकैस्त्रिफलैर्युतम् ॥ १५५ ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
कल्कितैर्मधुरद्रव्यैः सर्वजत्रूर्ध्वरोगजित् ॥ १५६ ॥
तदभ्यासीकृतं पानवस्त्यभ्यञ्जननावनैः ।

१. 'मरिच' इति पाठान्तरम्.

महामायूरघृतम् ।

एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ॥ १५७ ॥
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ।
जीवन्तीत्रिफलामेदामृद्वीकार्द्धिपरूषकैः ॥ १५८ ॥
समङ्गाचविकाभार्ङ्गीकाश्मरीकर्कटाह्वयैः ।
आत्मगुप्तामहामेदातालखर्जूरमस्तकैः ॥ १५९ ॥
मृणालबिसखर्जूरयष्टीमधुकजीवकैः ।
शतावरीविदारीक्षुबृहतीशारिवायुगैः ॥ १६० ॥
दूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककशेरुकैः ।
रास्नास्थिरातामलकीसूक्ष्मैलाशटिपौष्करैः ॥ १६१ ॥
पुनर्नवातुकाक्षीरीकाकोलीधन्वयासकैः ।
मधूकाक्षोलवाताम्रमुञ्जाताभिषुकैरपि ॥ १६२ ॥
महामायूरमित्येतन्मायूरादधिकं गुणैः ।
धात्विन्द्रियस्वरभ्रंशश्वासकासार्दितापहम् ॥ १६३ ॥
योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ।
आखुभिः कुक्कुटैर्हंसैः शशैश्चैवं प्रकल्पयेत् ॥ १६४ ॥
जत्रूर्ध्वजानां व्याधीनामेकात्रिंशच्छतद्वयम् ।
परस्परमसङ्कीर्णं विस्तरेण प्रकाशितम् ॥ १६५ ॥
ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ।
मूलप्रहारिणस्तस्माद्रोगाञ्शीघ्रतरं जयेत् ॥ १६६ ॥

इति योगरत्नसमुच्चये शिरोरोगचिकित्साधिकारः पञ्चविंशतितमः ।

शालाक्यतन्त्रं समाप्तम् ।

## अथ व्रणचिकित्साधिकारः ।

व्रणो द्विधा निजागन्तुदुष्टशुद्धादिभेदतः ।
निजो दोषैः शरीरोत्थैरागन्तुर्बाह्यहेतुजः ॥ १ ॥

दोषैरधिष्ठितो दुष्टः शुद्धस्तैरनधिष्ठितः ।
संवृतत्वं विवृतता काठिन्यं मृदुतापि वा ॥ १ ॥

अत्युत्सन्नावसन्नत्वमत्यौष्ण्यमतिशीतता ।
रक्तत्वं पाण्डुता कार्ष्ण्यं पूतिपूयपरिस्रुतिः ॥ २ ॥

पूतिमांससिरास्नायुच्छन्नतोत्सङ्गतातिरुक् ।
संरम्भदाहश्वयथुकण्ड्वादिभिरुपद्रुतिः ॥ ४ ॥

दीर्घकालानुबन्धश्च विद्याद् दुष्टव्रणाकृतिम् ।
स च दुष्टव्रणः पञ्चदशधा स्याद्यथा पृथक् ॥ ५ ॥

(वाग्भटे)

पृथग्दोषैः संसर्गसन्निचयेन च सप्तविधः । सरक्तैस्तैस्तावान् । केवलेनासृजैक इति ॥

तत्र वातेन श्यावकृष्णारुणो भस्मनिभो वा मांसमस्तु पुलाकाम्बुतुल्यः तन्वल्पास्रावयुतः सतोदो निर्मांसो रूक्षश्च । पित्तेन नीलपीतकपिलः क्षिप्रजः किंशुकभस्माम्बुमूत्रतैलाभः बहूष्णस्रावः सरागोष्मपाकश्च । कफेन पाण्डुः कण्डूमान् बहुसितघनस्रावः कठिनो मन्दरुजः स्थूलोष्ठश्च । रक्तेन प्रवालरक्तः सरक्तपूयास्रावो वाजिस्थानतुल्यगन्धः पित्तलिङ्गश्च । मिश्रो मिश्रलिङ्गः ॥

(तन्त्रान्तरे)

शुद्धव्रणलिङ्गः ।

जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावोष्ठः पिटिकः समः ।
किञ्चिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः ॥ ६ ॥

साध्यासाध्यानि ।

त्वगामिषसिरास्नायुसन्ध्यस्थीनि व्रणाशयाः ।
कोष्ठो मर्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम् ॥ ७ ॥

सुसाध्यः सत्वमांसाग्निवयोबलवति व्रणः ।
वृत्तो दीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः ॥ ८ ॥

तथा स्फिक्पायुमेढ्रोष्ठपृष्ठान्तर्वक्त्रगण्डगः ।
कृच्छ्रसाध्योऽक्षिदशननासिकापाङ्गनाभिषु ॥ ९ ॥

१. 'अण्डयोः' इति मुद्रिताष्टाङ्गहृदयपाठः ।

सीवनीजठरश्रोत्रपार्श्वकुक्षिस्तनेषु च ।
फेनपूयानिलवहः शल्यवानूर्ध्वनिर्वमी ॥ १० ॥
भगन्दरोऽन्तर्वदनस्तथा कक्ष्यास्थिसंश्रितः ।
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥ ११ ॥
व्रणाः कृच्छ्रेण सिध्यन्ति येषां च स्युर्व्रणे व्रणाः ।
नैव सिध्यन्ति वीसर्पज्वरातीसा[illegible]सिनाम् ॥ १२ ॥
पिपासूनामनिद्राणां श्वासिनामविपाकिनाम् ।
भिन्ने शिरःकपाले वा मस्तुलुंगस्य दर्शने ॥ १३ ॥
स्नायुक्लेदात्सिराच्छेदाद् गाम्भीर्यात्क्रिमिभक्षणात् ।
अस्थिभेदात्सशल्यत्वात्सविषत्वादतर्किताद् ॥ १४ ॥
मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमादिघट्टनात् ।
क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्शनात् ॥ १५ ॥
व्रणो मिथ्योपचाराच्च नैव साध्योऽपि रोहति ।
मद्यपानाद्दिवास्वप्नाद्व्यवायाद्रात्रिजागरात् ॥ १६ ॥

(वाहटे)

(इति विशेषः संग्रहे)

तत्र वयःस्थानां प्रत्यग्रधातुत्वादाशु व्रणसंरोहो भवति । दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादीन्न प्राप्नोति । प्राणवतां वेदनाहारविहारयन्त्रणादिभिर्न ग्लानिः । सत्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति । आत्मवतां सुनियमिताहारविहारादिभिरुपदेशैर्नान्यथा भवति । दीप्ताग्नीनाममक्लिन्नदेहत्वात् । प्रकृतितश्चाप्रक्लेदिशरीराणां तद्विधयोश्च देशकालयोः आस्रावदौर्गन्ध्याभावादाशु विशुद्धेन मांसेनानुपद्रवमापूरणम् । एत एव गुणा वृद्धकृशाल्पप्राणभीरुमन्दाग्निप्रक्लेदिदेहदेशकालेषु विपरीताः ।

(संग्रहे)

तस्य व्रणस्य षष्टिरुपक्रमा भवन्ति, अपकर्षणालेपपरिषेकाभ्यङ्गस्वेदविम्लापनोपनाहपाचनविस्रावणादयः ।

(सौश्रुते)

१. 'प्रथ' क. पाठः.

अथात्र शोफावस्थायां यथासन्नं विशोधनम् ।
योज्यं शोफो हि शुद्धानां व्रणयाशु प्रशाम्यति ॥ १७ ॥
(वाहटे)

तत्रापतर्पणमेवादौ प्रधानतमम् ।
रागसंरम्भरहिताः परिम्लाना हृताशयाः ।
सद्यः शाम्यन्ति शुद्धानां व्रणाः शोफाश्च देहिनाम् ॥ १८ ॥
(संग्रहे)

कुर्याच्छीतोपचारं च शोफावस्थस्य सन्ततम् ।
दोषाग्निरग्निवत्तेन प्रयाति सहसा शमम् ॥ १९ ॥
व्रणः संजायते प्रायः पाकाच्छ्वयथुपूर्वकात् ।
तमेवोपचरेत्तस्माद्रक्षन् पाकं प्रयत्नतः ॥ २० ॥
सुशीतलेपसेकासृङ्मोक्षसंशोधनादिभिः ।
शोफोऽल्पोऽल्पोष्मरुक्सामः सवर्णः कठिनः स्थिरः ॥ २१ ॥
(वाहटे)

वेदनोपशमार्थाय तथा पाकशयाय च ।
अचिरोत्पतिते शोफे कुर्याच्छोणितमोक्षणम् ॥ २२ ॥
(सौश्रुते)

शोफे व्रणे च कठिने विवर्णे वेदनान्विते ।
विषयुक्ते विशेषेण जलजाद्यैर्हरेदसृक् ॥ २३ ॥
दुष्टास्रेऽपगते सद्यः शोफरागरुजां शमः ।
हृते हृते च रुधिरे सुशीतैः स्पर्शवीर्ययोः ॥ २४ ॥
सुश्लक्ष्णैस्तदहःपिष्टैः क्षीरेक्षुस्वरसद्रुतैः ।
शतधौतघृतोपेतैर्मुहुरन्यैरशोषिभिः ॥ २५ ॥
प्रतिलोमं हितो लेपः सेकाभ्यङ्गाश्च तत्कृताः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ॥ २६ ॥
प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परम् ।
(वाहटे)

प्रदेहःससितस्तद्वत्सक्तवो मधुकं घृतम् ॥ २७ ॥
यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ।
दोषाग्निरेवं सहसा प्रलेपाद्यैः प्रयोजितैः ॥ २८ ॥

तथाप्यनुपशाम्यति प्रविलायनं प्रविलीयमाने चोपनाहनं प्रतिलोममेव चानुलिम्पेन्नानुलोमम् । तथा ह्यौषधं सम्यगवतिष्ठते । शोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिष्काथैः । भवति चात्र श्लोकः ।

यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति ।
दोषाग्निरेवं सहसा परिषेकेण शाम्यति ॥ २९ ॥

(सौश्रुते)

निःशेषोद्धृतमूलं मूत्रविलेपाभिहन्ति वाराशाः ।
शोफविसर्पौ तद्वत्सच्चूर्णं मेहहृन्मधुना ॥ ३० ॥

(काञ्चीपुरवासी)

स्वेदलेपादयः ।

वातोल्बणानां स्तब्धानां कठिनानां महारुजाम् ।
स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम् ॥ ३१ ॥

ग्राम्यानूपौदकामिषवेशवारकृसरपायसोत्कारिकाभिः स्वेदो योज्यः । सदाहशूलांस्तु तिलानतसीश्च भृष्ट्वा पयसि निर्वाप्य तेनैव क्षीरेण पिष्ट्वा प्रलेपयेत् । बलामधुकपृश्निपर्णीच्छिन्नरुहाभीरुजीवन्तीशर्करामदनक्षीरमहास्नेहसिद्धोत्कारिकाः कवोष्णाः शूलदाहहराः । तद्वन्मधुकयवचूर्णतैलसर्पिर्भिः कोष्ण आलेपः, तथा सतिलो मुद्गपायस उपनाहः । दशमूलसिद्धेन सुखोष्णेनाम्भसा पयसा घृततैलाभ्यां वा परिषेकः शोफे व्रणे वा दाहशूलघ्नः ।

(संग्रहे)

स्थिरान्मन्दरुजाञ्छोफान्स्नेहैर्वातकफापहैः ।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः ॥ ३२ ॥
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा ।
यवगोधूममुद्गैश्च दुग्धपिष्टैः प्रलेपयेत् ॥ ३३ ॥

(वाग्भटे)

ते तु प्रविशन्ति च रोमकूपान् । न तु शुष्यदुपेक्षितव्यमन्यत्र पीडयितव्यात् । शुष्कं हि दाहोषारागरुयावत्वशूलानि वर्धयति । यस्तु शीतस्तनुर्मुहुर्मुहुश्च प्रयुज्यते स प्रदेहो रक्तपित्तत्वचां प्रसादकृत् । लेपस्तूष्णः शीतो वा बहलश्च तथा वातश्लेष्मप्रशमनः । तस्योपयोगः क्षताक्षतेषु । यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते ।

१. 'शनैः शनैः' इति मुद्रिताष्टाङ्गहृदयपाठः ।

दशविधश्च समासादालेपः । तद्यथा — स्नैहिको निर्वापणः प्रसादनः स्तम्भनो विलायनः पाचनः पीडनः शोधनो रोपणः सवर्णीकरणश्च । नामभिरेव चैषां स्वरूपमाख्यातम् । न च प्रदेहं रात्रावुपयुञ्जीत । मा भूच्छैत्यविहतस्योष्मणो बहिरनिस्सरणाद्विकारपरिवृद्धिः । पुष्कलावतस्तु पठति ।

*तमसा विहतो ह्यूष्मा रोमकूपैरनावृतैः ।
लेपाद्विनैव निर्याति रात्रौ नालेपयेदतः ॥ ३४ ॥
न च पर्युषितं लेपं दद्याद् भूयस्तमेव वा ।
व्यम्लः पर्युषितो हि स्याद् भ्रष्टवीर्यस्तथेतरः ॥ ३५ ॥
(संग्रहे)

वातशोफे तु वेदनोपशमनार्थं सर्पिस्तैलधान्याम्लमांसरसवातहरौषधनिष्क्राथैरशीतैः परिषेकान् कुर्वीत । पित्तरक्ताभिघातविषनिमित्तेषु क्षीरघृतमधुशर्करोदकेक्षुरसमधुरौषधक्षीरवृक्षनिष्क्राथैरनुष्णैः परिषेकान् कुर्वीत । श्लेष्मशोफे तु तैलमूत्रक्षारोदकसुराशुक्तकफघ्नौषधनिष्क्राथैरशीतैः परिषेकान् कुर्वीत ।
(सौश्रुते)

आस्फोतपत्रमसूरकल्केनालेपः, सुसिद्धपिष्टैः सघृतैर्मुद्गयवगोधूमैर्वा ।
विलीयते स चेन्नैवं ततस्तमुपनाहयेत् ।
अविदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते ॥ ३६ ॥
(संग्रहे)

उपनाहः ।

शोफयोरुपनाहं तु कुर्यादामविदग्धयोः ।
अविदग्धाश्च शाम्यन्ति पाकं यान्ति विदाहिनः ॥ ३७ ॥
निवर्तते न यः शोफो विरेकान्तैरुपक्रमैः ।
तस्य संपाचनं कुर्यात् समाहृत्यौषधानि तु ॥ ३८ ॥
दधितक्रसुराशुक्तधान्याम्लैर्योजितानि तु ।
स्निग्धानि लवणीकृत्य पचेदुत्कारिकां शुभाम् ॥ ३९ ॥

* 'तमसा पिहितो' इति मुद्रितसंग्रहपाठः.

सैरण्डपत्रया शोफं नाहयेदुष्णया तया ।
अतसीशणशिग्रूणि मूलकं तिलसर्षपाः ॥ ४० ॥
सक्तवः किण्वमुष्णानि द्रव्याण्यपि विपाचनम् ।

(सौश्रुते)

सकोलतिलवेल्लोमा दध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा कोष्णा शस्तोपनाहने ॥ ४१ ॥

(वाहटे)

शिग्रुशणफलचित्रककिण्वनिष्पावसर्षपतिलातसीसक्तुकोलसूक्ष्मधूमैरम्लपिष्टैः सुखोष्णैः स्निग्धैः सलवणैरुत्कारिकां कृत्वा तया प्रलिप्यैरण्डपत्रेणावच्छाद्य बध्नीयात् ।

(सङ्ग्रहे)

शालितिलैरण्डफलं पिष्ट्वा घृतेन कर्तव्यम् ।
सन्तर्पणाहयोऽसावुपनाहो ग्रन्थिशोफघ्नः ॥ ४२ ॥

(वृद्ध-)

लाजं तिलानां शालीनां चूर्णितं घृतसंयुतम् ।
उपनाहमिमं कुर्याद् ग्रन्थिशोफविनाशनम् ॥ ४३ ॥

(हारिश्चन्द्रे)

तैलेन वा सर्पिषा वा ताभ्यां वा सक्तुपिण्डिका ।
सुखोष्णा शोफपाकार्थमुपनाहः प्रशस्यते ॥ ४४ ॥

(चरके)

पच्यमानशोफलिङ्गम् ।

पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः ।
स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ४५ ॥
संरम्भारुचिदाहोषातृड्ज्वरानिद्रतान्वितः ।
स्त्यानं विष्यन्दयत्याज्यं व्रणवत्स्पर्शनासहः ॥ ४६ ॥

(वाहटे)

पाकाभिमुखे भोजनविधिः ।

पाकाभिमुखे च शोफे यथेष्टमातुरं भोजयेत् पाचनार्थं पाकवेदनाशस्त्रकर्मसहनार्थं च ।

(चक्रे)

पक्वलिङ्गम् ।

पक्वेऽल्पवेगता ग्लानिः पाण्डुता वलिसम्भवः ।
नामोऽन्तेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ॥ ४७ ॥
स्पृष्टे पूयस्य सञ्चारो भवेद्वस्ताविवाम्भसः ।
शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ॥ ४८ ॥
रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ।
पाकेऽतिवृद्धे सुषिरस्तनुस्त्वग्दोषभक्षितः ॥ ४९ ॥
वलीभिराचितः श्यावः शीर्यमाणतनूरुहः ।

रक्तपाकम् ।

कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ॥ ५० ॥
पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।
त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ॥ ५१ ॥
रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ।

दारणादि ।

सुपक्वे पिण्डिते शोफे पीडनैरुपपीडिते ॥ ५२ ॥
दारणं दारणार्हस्य सुकुमारस्य चेष्यते ।
अल्पसत्त्वेऽबले बाले पाके चात्यर्थमुद्धते ॥ ५३ ॥
दारणं मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ।
गुग्गुल्वतसिगोदन्तस्वर्णक्षीरिकपोतविट् ॥ ५४ ॥
क्षारौषधानि क्षाराश्च पक्वशोफविदारणम् ।
प्राक्छस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ ५५ ॥
पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनासहः ।
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ ५६ ॥
अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ॥

(वाहटे)

---

१. 'पक्वेल्पा वेदना' इति पाठान्तरम् । २. 'वृत्ते' इति मुद्रिताष्टाङ्गहृदयपाठः।

शस्त्रक्रिया ।

अथाहृतयन्त्रशस्त्रक्षाराग्निजाम्बवौष्ठपिचुप्लोतपत्रसूत्रचर्मपट्टमधु-स्नेहकषायालेपकल्कसेकोदकुम्भशीतोष्णोदककटाहव्यजनादि व्रणोप-योगिसर्वोपकरणमाश्रितशयनीयमुपस्थितस्थिरस्नेहबलवदवलम्बकपुरु-षविष्टेऽहनि मुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदैवतं कृतमङ्गलं भुक्तवन्तमातुरं प्राङ्मुखमुपवेश्य संवेश्य वा यन्त्रयित्वा प्रत्य-ङ्मुखो वैद्यो मर्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं नि-दध्यादापूयदर्शनात् । सकृदेवाहरेच्छस्त्रमाशु च । महत्स्वपि च पाकेषु द्व्यङ्गुले शस्त्रपदमुक्तम् । द्व्यङ्गुलान्तरं त्र्यङ्गुलान्तरं वा । ततः शस्त्रमवचार्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् प्रतिपीड्याङ्गुल्या व्रणमपि प्र-क्षाल्य कषायेण व्रणात् प्लोतेनाम्भोऽपनीय वेदनारक्षोघ्नैर्गुग्गुल्वगरु-सर्जरसादिभिर्धूपयेत् ॥

(सङ्ग्रहे)

यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ ५७ ॥

आयतं च विशालं च यथा दोषो न तिष्ठति ।
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ ५८ ॥

दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च ताम् ।
घृताक्तैः सक्तुभिश्चोर्ध्वं, घनां कबलिकां ततः ॥ ५९ ॥

निधाय युक्त्या बध्नीयात्पट्टेन सुसमाहितः ।
पार्श्वे सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि ॥ ६० ॥

(वाहटे)

ततः स्नेहोक्तं दिनचर्योक्तं चाचारमनुवर्तेत । पुनश्च तृतीयेऽह्नि प्रक्षालनादि व्रणकर्म पूर्ववत् कुर्यात् । द्वितीयदिवसे विमोक्षणाद्विग्रथितो व्रणश्चिरादुपसंरोहति ।

(सङ्ग्रहे)

विकेशिकागुणः ।

सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् ।
व्रणं विशोधयेच्छीघ्रं स्थिता सन्तर्विकेशिका ॥ ६१ ॥

(वाहटे)

अबध्यमानस्य दोषाः ।

अबध्यमानः पुनर्दंशमशकतृणकाष्ठपांसुशीतवातातपादिसंपर्कात् विविधोपद्रवोपद्रुतो दुष्टव्रणतामुपैति । स्नेहश्चात्र न चिरं तिष्ठति । भेषजमचिराच्छुष्यति । रूढे च वैवर्ण्यं भवति । अपि च—

चूर्णितं मथितं भग्नं विश्लिष्टमथ पाटितम् ।
अस्थिस्नायुसिराच्छिन्नमाशु बन्धेन रोहति ॥ ६२ ॥

कुष्ठिनामग्निदग्धानां पिटकामधुमेहिनाम् ।
कर्णिकाश्चोन्दुरुविषे क्षारदग्धाविषान्विताः ॥ ६३ ॥

बन्धनीया न मांसपाके गुदपाके च दारुणे ।
शीर्यमाणाः सरुग्दाहाः शोफास्तथा विसर्पिणः ॥ ६४ ॥

(अष्टहृ.)

आमच्छेदे व्यापदः ।

आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ।
रुजातिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ॥ ६५ ॥

व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।
भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ६६ ॥

तिर्यक्छेदाविषयः ।

तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ।
कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवंक्षणे ॥ ६७ ॥

अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ।

पीडनम् ।

पूयगर्भानणुद्वारान् सोत्सङ्गान्मर्मगानपि ॥ ६८ ॥

निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत् ।
शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति ॥ ६९ ॥

न मुखे चैनमालिम्पेत्तथा दोषः प्रसिच्यते ।
कळायथवगोधूममाषमुद्गहरेणवः ॥ ७० ॥
द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ॥

(वाग्भट)

विवर्णान् पिच्छिलान् पूतिगन्धीन् क्लेदरुजावतः ।
व्रणानशुद्धान् विज्ञाय शोधनैरेभिराचरेत् ॥ ७१ ॥

(वङ्गसेने)

क्षाळनादयः ।

ससमु क्षाळनाद्येषु सुरसारग्वधादिकौ ।
भृशं दुष्टव्रणे योज्यौ मेहकुष्ठव्रणेषु च ॥ ७२ ॥
अथवा क्षाळनं क्वाथः पटोलीनिम्बपत्रजः ।
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ७३ ॥
पटोलतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ ७४ ॥
व्रणान्विशोधयेद्वर्त्या सूक्ष्मास्यान्सन्धिमर्मगान् ।
कृतया त्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ७५ ॥

(वाहटे)

त्रिकल्कः ।

निम्बपत्रनिशाकल्कः सतिलो माक्षिकान्वितः ।
त्रिकल्क इति विख्यातो व्रणशोधनरोपणः ॥ ७६ ॥

(हारिश्चन्द्रे)

व्रणशोधनानि ।

पुनर्नवाङ्घ्रिसिन्धूत्थनिशाकल्कः समाक्षिकः ।
स दुःखसाध्यानुत्सङ्गान् व्रणानाशु विशोधयेत् ॥ ७७ ॥
पुनर्नवनिशार्कच्छदगुञ्जाफलैः कृतः ।
सिन्धूत्थबकुलैः कल्को मध्वाढ्यो व्रणशोधनः ॥ ७८ ॥
दुष्टव्रणानां सर्वेषां कल्को लाङ्गलिमूलकैः ।
शस्तं तत् पक्वतैलं वा शोधने सैन्धवान्वितः ॥ ७९ ॥
तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुतैः ।
त्रिवृत् घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ॥ ८० ॥

(सिद्धसारे)

धूपः ।

वाताभिभूतान्सास्रान्वा धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ८१ ॥

वत्सादनम् ।

निर्वापयेद् भृशं शीतैः रक्तपित्तविषोल्बणान् ।
शुष्काल्पमांसे गंभीरे व्रण वत्सादनं हितम् ॥ ८२ ॥

(वाहटे)

अश्वगन्धापामार्गतार्क्ष्यशैलसुवर्चलाबलातिबलानन्ताधातकीकुसुमसमंगाभिः पद्मकादिवर्गेण न्यग्रोधादिना च कल्कः, तथा सर्पीष्यभ्यञ्जनार्थे ।

(सङ्ग्रहे)

अद्यान्मांसादमांसानि विधिनोपहितानि च ।
मांसं मांसादमांसेन वर्धते शुद्धचेतसः ॥ ८३ ॥

उत्सन्नदुष्टमांसानां व्रणानामवसादनम् ।
जातीमुकुलकासीसमनोह्वालपुराग्निकैः ॥ ८४ ॥

क्षारकर्मणा विशोध्याः ।

उत्सन्नमांसान् कठिनान् कंडूयुक्तांश्चिरोत्थितान् ।
व्रणान् सुदुःखशोध्यांश्च शोधयेत् क्षारकर्मणा ॥ ८५ ॥

अग्निकर्मणा शोध्याः ।

स्रवन्तोऽश्मरिजा मूत्रं ये चान्ये रक्तवाहिनः ।
छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च साधनैः ॥ ८६ ॥
साध्यमाना न शुध्यन्ति शोध्याः स्युस्तेऽग्निकर्मणा

सकृमीणां व्रणानां चिकित्स ।

अरक्षया व्रणे यस्मिन्माक्षिका निक्षिपेत्कृमीन् ॥ ८७ ॥
ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ।
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ॥ ८८ ॥
गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः ।
प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ॥ ८९ ॥

(वाहटे)

---

१. 'मृदुमांसकाथात्' इति पाठान्तरम् । २. शोधनैः इति च मुद्रिताष्टाङ्गहृदयपाठः,

क्षीरमौदुम्बरं शस्तं तथा चास्फोतजं पयः ।
व्रणजन्तुषु सर्वेषु दुग्धं चोत्तमकर्णिजम् ॥ ९० ॥

(हारिश्चन्द्रे)

व्रणस्योदरस्थं कृमिव्रातमुग्रं
वटक्षीरबिन्दुर्निषिक्तो निहन्ति ।
अलब्धे च तस्मिन् सुपिष्टा च *मुष्टिः
सुधा च प्रदेया वधाय कृमीणाम् ॥ ९१ ॥

कटुकक्षारसंयुक्तं कल्कमश्वघ्नमूलजम् ।
व्रणकार्मि निहन्त्याशु व्रणदौर्गन्ध्यनाशनम् ॥ ९२ ॥

(तन्त्रान्तरे)

कार्पासफलादिरसक्रिया ।

कार्पासं फलगेहधूमबकुलं गुञ्जाफलं शंखजं
क्षारं रोममयीं च नागसहितं पथ्यां रसे कैंदुके ।
पिष्ट्वा कंसयुगेन तैलसहितं घृष्टेयमाकार्ण्यतः
क्षिप्रं हन्ति रसक्रिया चिरभवान्दुष्टव्रणान्सस्रुतीन् ॥ ९३ ॥

(वृद्ध-)

व्रणानामथ शुद्धानां रोपणानि प्रयोजयेत् ॥

(संग्रहे)

क्षालनादिः ।

प्रक्षालनार्थं तु पयोंघ्रिपानां क्वाथं तिलारिष्टनिशांशकल्कम् ।
क्षौद्रेण दद्याद् व्रणशोधनार्थं तत्कल्कमाज्येन तु रोपणाय ॥ ९४ ॥

(योगामृते)

रोपणम् ।

शुद्धानां रोपणे योज्यमुत्सादाय यदीरितम् ।
अश्वगन्धा रुहा लोध्रं कट्फलं मधुयष्टिका ॥ ९५ ॥
समङ्गा धातकीपुष्पं परमं व्रणरोपणम् ।
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ९६ ॥
कल्कं संरोपणं कुर्यात् तिलजं मधुसंयुतम् ।
स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥ ९७ ॥

---

* बालाम्रादिद्रव्यपर्यायो मुष्टिशब्द इति वैद्यकशब्दसिन्धोरवगम्यते ।

सक्षौद्रनिंबपत्राभ्यां युक्तः संशोधनं परम् ।
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशु रोपणः ॥ ९८ ॥
(वाहटे)

पित्तोपसृष्टान् गंभीरान् दाहपाकप्रपीडितान् ।
कार्पासफलमिश्रेण जयेच्छोधनसर्पिषा ॥ ९९ ॥
(सौश्रुते)

घृतानां निर्देशः ।

सास्रपित्तविषागन्तुगम्भीरान् सोष्मणो व्रणान् ।
क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ॥ १०० ॥
रोपणौषधसिद्धेन तैलेन कफवातजान् ॥
(बाहटे)

अबध्यानां चलस्थानां शुद्धानां वा प्रदुष्यताम् ।
यथास्वं रोपणैः कुर्याद्रसजांशनिशाढ्यैः[1] ॥ १०१ ॥

समानां स्थिरमांसानां त्वक्स्थानां चूर्ण इष्यते ।
नीरुजामवगाढानां शुद्धानां वर्तयो हिताः ॥ १०२ ॥
(सङ्ग्रहे)

अन्तःशल्यानणुद्वारान् गम्भीरान्मांससंश्रितान् ।
सन्धिमर्मनिविष्टांश्च शोधयेद्वर्तिभिर्व्रणान् ॥ १०३ ॥

उत्सन्नदुष्टपिशिते संक्लिष्टध्यामशोणिते ।
व्रणे प्रच्छर्दनं शस्तं कफदुष्टे विशेषतः ॥ १०४ ॥

विरेचनं पित्तदुष्टे दीर्घकालानुबन्धिनि ।
रूक्षे सवेदने वस्तिरधःकाये विशेषतः ॥ १०५ ॥

जत्रूर्ध्वजे च श्वयथौ कण्ड्वाढ्ये तीक्ष्णनावनम् ।
तज्ज एवाऽनिलाढ्ये तु श्वयथौ स्नेहनावनम् ॥ १०६ ॥

तथा सशोफरुक्स्रावे धूमो वातकफोल्बणे ।
रुजादिमति वक्त्रस्थे यथास्वं कवलो हितः ॥ १०७ ॥
(संग्रह)

---

1. सनिशाढ्यैः मुद्रितसङ्ग्रहपाठः

द्वे पञ्चमूले वर्गश्च वातघ्नो वातिके हितः ।
न्यग्रोधपद्मकाद्यौ तु तद्वत्पित्तप्रदूषिते ॥ १०८ ॥
आरग्वधादिः श्लेष्मघ्नः कफे मिश्रस्तु मिश्रजे ।
एभिः प्रक्षाळनालेपघृततैलरसक्रियाः ॥ १०९ ॥
चूर्णो वर्तिश्च संयोज्या व्रणे सम्र यथायथम् ॥

(वाह्टे)

पानसेकादिषु घृतम् ।

पित्तविद्रधिवीसर्पशोफकुष्ठघृतानि च ।
सर्वव्रणेषु योज्यानि पानसेकप्रलेपने ॥ ११० ॥

(संग्रहे)

दूर्वास्वरसकल्काभ्यां सिद्धं तैलं च रोपणम् ।

(क्षारपाणिः)

प्रपौण्डरीकमधुककाकोळीद्वयचन्दनैः ॥ १११ ॥
साधितं तैलमाज्यं वा तद्वत्कम्पिल्यकेन वा ।
दूर्वारसेन वा दार्व्यास्त्वचा वा व्रणरोपणम् ॥ ११२ ॥

(सङ्ग्रहे)

जात्यादिघृतम् ।

जातीनिम्बपटोलपत्रकटुकादार्वीनिशाशारिवा-
मञ्जिष्ठाभयतुत्थसिक्थमधुकैर्नक्ताह्वबीजैः समैः ।
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजा व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ ११३ ॥

(वाहटे)

निम्बेक्ष्वाक्वादितैलम् ।

निम्बेक्ष्वाकुपटोलजातिरजनीतोये सुगन्धाशिफा-
दार्वीतुत्थकरञ्जबीजमधुकैर्मञ्जिष्ठसिक्थाभयैः ।
सिद्धं तैलमथाज्यमेभिरथवा मर्माश्रिताः स्राविणः
सूक्ष्मास्याः सरुजा व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ ११४ ॥

(सिद्धयोगे)

षट्ष्यादिभिः स्कन्दतैलम् ।

षट्ष्याह्वप्रपुनाटबीजफलिनीव्योषाब्दवज्रीपय-
स्सिद्धार्थत्रिफलाविडंगहुतभुक्केजोवतीशारिबाः ।

मञ्जिष्ठासननक्तुत्थतिमिशं सिन्धूत्थलोध्रांकवं
सिद्धं मार्कवकाकमाचिकरसे तैलं व्रणे शोधनम् ॥११५॥
स्कन्दतैलमिदं नाम्ना नाडीरोपणमुत्तमम् ।
दुष्टव्रणापचिग्रन्थिगण्डमालाहरं परम् ॥ ११६ ॥
(चन्द्रटे)

निम्बालर्कादितैलम् ।

निम्बालर्कनिशास्नुक्कुटकरसे शृतं तैलम् ।
कल्कं लाङ्गल्यनकं व्रणशोधनरोपणे शस्तम् ॥ ११७ ॥

पुरान्तकतैलम् ।

निम्बाकुलीवसुकरम्यकनक्तवैरी-
चिंचाव्रणघ्नसुवहाखरमञ्जरीणाम् ।
निम्बस्य वापि वनजस्य रसे विपक्वं
तैलं पुरान्तकमिदं व्रणरोपणाय ॥ ११८ ॥
(वृद्ध-)

व्रण्यानि तैलानि ।

दिनेन्द्रवल्लीस्वरसे विपक्वं तच्चर्मकल्केन पुनर्नवस्य ।
सारे च तैलं व्रणरोपणार्थं संशोधनार्थं च वदन्ति तज्ज्ञाः ॥ ११९ ॥
(हारिश्चन्द्रे)

महावृक्षार्कजे दुग्धे मधूच्छिष्टेन साधितम् ।
तैलं सकृत्प्रयोगेण दुष्टव्रणविरोपणम् ॥ १२० ॥

दुग्धे कल्केन शृतं वर्षाभूभूकदम्बमूलभुवा ।
तैलं रोपयति द्राक् व्रणमपि गाढं सपूयमपि ॥ १२१ ॥

दोषाव्रणघ्नपूगत्रिफलातुल्यैः खरांशुसन्तप्तम् ।
धुर्धूरदिनेशत्वक्चूर्णैस्तैलं भवेद् व्रण्यम् ॥ १२२ ॥

मरिचनिशाहंसाङ्घ्रिक्षीरद्रुमतुळसिपूगमेदोभिः ।
व्रणहितकदम्बजम्बूनृपतरुचिञ्चास्थिनिर्मोकैः ॥ १२३ ॥

सलिलरिपुभेदहारीकृष्णबृहत्यक्षु साधितं तैलम् ।
पटुरोमभस्मयुक्तं व्रणहितमिति कथ्यते सद्भिः ॥ १२४ ॥

पद्मत्रिफलारजनीतुत्थसमङ्गासु साधितं तैलम् ।
नाशयति व्रणजालं लोभ एक इव गुणजालम् ॥ १२५ ॥
(काञ्चीपुरवासी)

ककुभादिचूर्णम् ।

ककुभोदुम्बराश्वत्थजम्बूकट्फललोध्रजैः ।
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ १२६ ॥
(वाहटे)

त्रिफलादिचूर्णम् ।

त्रिफला मधुकं लोध्रं मञ्जिष्ठा बिल्वपेशिका ।
समङ्गा धातकी लाक्षा निर्यासः शाल्मलेरपि ॥ १२७ ॥
पलाशस्य च निर्यासो निर्यासः ककुभस्य च ।
सूक्ष्माण्येतानि चूर्णानि व्रणानां चापि रोपणम् ॥ १२८ ॥
(भेलात्)

कठिनत्वं व्रणा यान्ति सारैर्गन्धैश्च धूपिताः ।
*सर्पिर्मज्जावसातैलैः शैथिल्यं यान्ति हि व्रणाः ॥ १२९ ॥
(चरके)

प्रलेपाः ।

लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ॥ १३० ॥
[1]कालीयकलताम्रास्थिहेमकालारसोत्तमैः ।
लेपः सगोमयरसः सवर्णकरणः परम् ॥ १३१ ॥
अयोरजस्सकासीसत्रिफलाकुंकुमानि च ।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ १३२ ॥
दग्ध्वयानूपसत्वानां श्लक्ष्णचूर्णितया त्वचा ।
भल्लाततैलाप्लुतया शुद्धमालेपयेद् व्रणम् ॥ १३३ ॥
(सङ्ग्रहे)

त्रिफलामार्कवं लाक्षां कासीसं लोहजं रजः ।
लेपोऽयमचिरात्कुर्याद् व्रणकार्ष्ण्यं नवत्वचि ॥ १३४ ॥

---

१. 'कालेयकः' मुद्रितसङ्ग्रहे ।

* सर्पिर्मज्जावसाधूपैः इति मुद्रितचरके ।

रोचना कुंकुमाम्रास्थि तुत्थं शाल्मलिकण्टकाः ।
काळीयकं च सावर्ण्यं कुर्युर्व्यासससमासतः ॥ १३५ ॥

(क्षारपाणिः)

सिद्धं भृङ्गीरसे धात्रीदन्तीदन्तमषीयुतम् ।
तैलमासनपात्रस्थं केश्यं स्याद् व्रणकार्ष्ण्यकृत् ॥ १३६ ॥

(काञ्चीपुरवासी)

दग्धो वारणदन्तोन्तर्धूमं तैलं रसाञ्जनम् ।
रोमसंजननो लेपस्तद्वत्तैलपरिप्लुता ॥ १३७ ॥

चतुष्पान्नखरोमास्थित्वक्च्छृङ्गखुरजा मषी ॥

(वाहटे)

कपित्थान्मांसमुद्धृत्य मूत्रस्याज्यस्य पूरणम् ।
क्षिपेच्चात्र मनोह्वलावंशनिर्लेखरोचनाः ॥ १३८ ॥

कासीसं च प्रपुन्नाटं मासं न्यस्तं ततो भुवि ।
अधोऽर्जुनस्य तच्छुक्लव्रणालेपः सवर्णकृत् ॥ १३९ ॥

(सङ्ग्रहे)

व्रणिनां पथ्यापथ्यम् ।

भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः ।
मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ १४० ॥

बालमूलकवार्त्ताकतण्डुलीयकवास्तुकम् ।
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ १४१ ॥

सैन्धवं डाडिमं धात्री घृतं तप्तहिमं जलम् ।
जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरम् ॥ १४२ ॥

भुञ्जानो जांगलैर्मांसैः शीघ्रं व्रणमपोहति ।
अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ १४३ ॥

अजीर्णात्त्वनिलादीनां विभ्रमो बलवान् भवेत् ।
ततःशोफरुजापाकदाहानाहानवाप्नुयात् ॥ १४४ ॥

(वाहटे)

१. (मूत्रस्याजस्य पूरणमिति सुश्रुतः ।)

व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वप्नात् ते च मृत्युश्च मैथुनात् ॥ १४५॥
(सिद्धसारे)

स्थानासनं चंक्रमणमुच्चैर्भाषणमेव च ।
व्रणितो न निषेवेत शक्तिमानपि मानवः ॥ १४६ ॥

नवधान्यमाषतिलकलायमसूरहरेणुशाकाम्ललवणपिण्याकपिष्टमयवल्लूरजाङ्गलमांसमत्स्यशीतोदकपायसदुग्धदधितक्रप्रभृतीनि च परिहरेत् ॥

(भवक)

तक्रान्तो नवधान्यादिर्योऽयं वर्ग उदीरितः ।
दोषसञ्जननो ह्येष विज्ञेयः पूयवर्धनः ॥ १४७ ॥
(सौश्रुते)

न चैनं त्वरमाणोऽन्तस्सदोषमुपरोहयेत् ।
सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ॥ १४८ ॥

रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ।
मासान् षट् सप्त वा नॄणां विधिरेष प्रशस्यते ॥ १४९ ॥
(सङ्ग्रहे)

सद्योव्रणाः ।

सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः ।
अनन्तैरपि तैरङ्गमुच्यते ज़ुष्टमष्टधा ॥ १५० ॥

घृष्टावकृत्तविच्छिन्न*प्रविलम्बिनिपातितम् ।
विद्धं भिन्नं विदलितं, तत्र घृष्टं लसीकया ॥ १५१ ॥

रक्तलेशेन वा युक्तं सप्लोषं छेदनात्स्रवेत् ।
अवगाढं ततः कृत्तं विच्छिन्नं स्यात्ततोऽपि च ॥ १५२ ॥

प्रविलम्बि सशेषेऽस्थि पतितं पातितं तनोः ।
सूक्ष्मास्यशल्यविद्धं तु विद्धं कोष्ठविवर्जितम् ॥ १५३ ॥

भिन्नमन्यद्विदलितं मज्जरक्तपरिप्लुतम् ।
प्रहारपीडनोत्पेषात्सहास्थ्ना[1] पृथुतां गतम् ॥ १५४ ॥
(वाहटे)

---

1. प्रहारपीडनोद्घृष्टात्सहास्थ्ना ख· पाठः. * प्रविलम्पितपातितम् इति मुदितवाहटे ।

आगन्तोर्व्रणस्य प्रागुपदिष्टः सम्भवः। तत्र यथायथं प्रतीकारश्च। विविधाभिघातजनितैस्तु सुबह्वाकृतिभिरपि सद्योव्रणैरधिष्ठितमङ्गं समासात् त्रिविधं भवति। छिन्नं विद्धं पिच्छितं च। त्रिविधमप्येतत्त्वगादिक्षणनात् क्षतमित्युच्यते। तत्र छिन्नं पञ्चधा भिद्यते। विद्धं त्वष्टविधम्। पिच्छितं तु द्विविधम्।

(सङ्ग्रहे)

समासतो लक्षणतः षड्विधः परिकीर्त्तितः।
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्छिलमेव च॥ १५५॥

घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम्।

(इति सौश्रुते)

सीवनविधिः।

सद्यः सद्योव्रणान्सीव्येद् विवृतानभिघातजान्॥ १५६॥

मेदोजान् लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः।
शिरोऽक्षिकूटनासौष्ठगण्डकण्ठोरुबाहुषु॥ १५७॥

ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु।
गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च॥ १५८॥

न तु वंक्षणकक्ष्यादावल्पमांसे चले व्रणान्।
वायुनिर्वाहिणः शल्यगर्भान्क्षारविषाग्निजान्॥ १५९॥

सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु।
प्रलम्बिमांसं विच्छिन्नं निवेश्य स्वनिवेशने॥ १६०॥

सन्ध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः।
सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु॥ १६१॥

सान्त्वयित्वा ततश्चार्त्तं व्रणे मधुघृतद्रुतैः।
अञ्जनक्षौमजमषीफलिनीसल्लकीफलैः॥ १६२॥

सलोध्रमधुकैर्दिग्धे युञ्ज्याद् बन्धादि पूर्ववत्।
व्रणो निःशोणितौष्ठो यः किञ्चिदेवावलिख्य तम्॥ १६३॥

सञ्जातरुधिरं सीव्येत् सन्धानं ह्यस्य शोणितम्।

(वाग्भटे)

बन्धनम् ।

बद्ध्वागन्तुं व्रणं सद्यो घृतक्षौद्रसमन्वितम् ।
शीता क्रिया प्रयोक्तव्या पित्तरक्तोष्मशातनी ॥ १६४ ॥
(सिद्धसारे)

सद्यः सद्योव्रणं शुद्धं संसीव्यान्जनलोध्रकम् ।
फलिनीसर्जलाक्षांश्च दत्त्वा सञ्चूर्ण्य बन्धयेत् ॥ १६५ ॥
आसप्तरात्रमाज्येन मध्वाढ्येन प्रलेपयेत् ॥
(सिद्धयोगे)

तालस्य पेशीं क्रमुकं च बालं
लाक्षाञ्जनं सर्जरसं कपित्थम् ।
पथ्यां च सञ्चूर्ण्य परिक्षतानां
क्षतेषु दत्त्वा परिबन्धनीयम् ॥ १६६ ॥
(तन्त्रान्तरे)

पाचितलिकुचकवोष्णस्वरसेन विदिह्य बन्धयेत् सद्यः ।
सद्योव्रणं समस्तं विदिह्याच्छगणशुद्धपिण्डेन ॥ १६७ ॥
(काञ्चीपुरवासी)

पत्रेण खरमञ्जर्या मृदितेनावपीडितम् ।
क्षणेन रुधिरं तिष्ठेत् सेतुबन्धादिवोदकम् ॥ १६८ ॥
(तन्त्रान्तरे)

अपामार्गस्य संसिद्धं पत्रोत्थेन रसेन तु ।
सद्योव्रणेषु रक्तं तु प्रवृत्तं परितिष्ठति ॥ १६९ ॥

उदगाशागतं मूलं शाल्यास्तण्डुलवारिणा ।
पिष्ट्वा प्रलेपनं दद्यात् सद्यःक्षतविरोपणम् ॥ १७० ॥
(बिन्दुसारे)

श्वेतस्य शरपुङ्खस्य मूलं जग्ध्वेतरस्य वा ।
व्रणे निष्ठीवनं कुर्यात् सद्योव्रणचिकित्सितम् ॥ १७१ ॥
(श्रीधरसुष्टे)

सद्यः सद्योव्रणं सिञ्चेद्यष्टीमधुकसर्पिषा[1] ।
तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ १७२ ॥

---

१. सिञ्चेदथ यष्ट्याह्वसर्पिषा इति मुद्रिताष्टाङ्गहृदयपाठः,

क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ।
कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ १७३ ॥
(वाग्भटे)

शस्त्रजव्रणचिकित्सा ।

या वेदना शस्त्रनिपातजाता
तीव्रा शरीरं प्रदुनोति जन्तोः ।
घृतेन सा शान्तिमुपैति सिक्ता
कोष्णेन यष्टीमधुकान्वितेन ॥ १७४ ॥
(चक्रदत्ते)

साप्ताहिको विधिः ।

सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः ।
मधुसर्पिः प्रयुञ्जीत पित्तघ्नयश्च हिमाः क्रियाः ॥ १७५ ॥
ससंरम्भेषु कर्त्तव्यमूर्ध्वं चाधश्च शोधनम् ।
उपवासो हितं भुक्तं प्रततं रक्तमोक्षणम् ॥ १७६ ॥
घृष्टपिच्छितयोरेष सुतरामिष्यते विधिः ।
तयोर्ह्यल्पं स्रवत्यसं पाकस्तेनाशु जायते ॥ १७७ ॥
अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते ।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ १७८ ॥
स्नेहपानपरीषेकस्वेदलेपोपनाहनम् ।
स्नेहवस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ १७९ ॥
इति साप्ताहिकः प्रोक्तः सद्यो व्रणहितो विधिः ।
सप्ताहाद् गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ १८० ॥
(वाग्भटे)

क्षालनार्थे आरग्वधादि ।

क्षालनाभ्यङ्गसेकेषु तस्मिन्दुष्टे प्रयोजयेत् ।
आरग्वधादिकं वर्गं सुरसादिं च शोधनम् ॥ १८१ ॥
कल्कस्त्रिवृत्तिलैरण्डपत्रैर्योज्यः ससैन्धवैः ।
वातिके पैत्तिके कुम्भयष्ट्याह्वरजनीतिलैः ॥ १८२ ॥

1. 'घृष्टे विदलिते चैष' इति च मुद्रिताष्टाङ्गहृदयपाठः.

श्लैष्मिके तिलतेजोह्वानिकुम्भस्वर्चिकाग्निकैः ॥

(सङ्ग्रहे)

दुष्टव्रणेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ।
विशोषणं तथाहारं शोणितस्य च मोक्षणम् ॥ १८३ ॥

(सौश्रुते)

सद्योव्रणे पृथक् पृथक् सामान्यं कर्म ।

प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथक् पृथक् ।
घृष्टे रुजां निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १८४ ॥

कल्कादीन्यवकृत्ते तु विच्छिन्नप्रविलम्बिनोः ।
सीवनं विधिनोक्तेन बन्धनं चानुपीडनम् ॥ १८५ ॥

असाध्यं स्फुटितं नेत्रमुदीर्णं लम्बते तु यत् ।
सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक् ॥ १८६ ॥

पीडयेत्पाणिना पद्मपत्रव्यवहितेन तत् ।
ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ १८७ ॥

विपक्कमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः ।
सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ १८८ ॥

गलपीडावसन्नेऽक्ष्णि वमनोत्कासनक्षवाः[1] ।
प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत् ॥ १८९ ॥

कर्णे स्थानाच्च्युते स्यूत्वा स्रोतस्तैलेन पूरयेत् ।
कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ॥ १९० ॥

समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निरन्तरम् ।
आजेन सर्पिषा चात्र परिषेकः प्रशस्यते ॥ १९१ ॥

उत्तानोऽन्नानि भुञ्जीत शयीत च सुयन्त्रितः ।
घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते ॥ १९२ ॥

स्यूत्वा[2] वेल्लितबन्धेन बध्नीयाद् घनवाससा ।
चर्मणा गोष्फणाबन्धः कार्यश्चासङ्गते व्रणे ॥ १९३ ॥

१. कक,मोक्षेक्षवाः. २. स्यूते इति मुद्रिताष्टाङ्गहृदयपाठः.

पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ।
प्रवेश्य वृषणौ सीव्येत् सेवन्या तुन्नसंज्ञया ॥ १९४ ॥

कार्यश्च गोष्फणाबन्धः कट्यामावेश्य पट्टकम् ।
स्नेहसेकं न कुर्वीत तेन क्लिद्यति हि व्रणः ॥ १९५ ॥

कालानुसार्यगर्वेलाजातीचन्दनपर्पटैः ।
शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम् ॥ १९६ ॥

छिन्नां निश्शेषतः शाखां दग्ध्वा तैलेन युक्तितः ।
बध्नीयात्कोशबन्धेन ततो व्रणवदाचरेत् ॥ १९७ ॥

कार्यः शल्याहृते विद्धे क्रमो भग्नासु पिच्छिते ।
शिरसोऽपहृते शल्ये वालवर्तिं प्रवेशयेत् ॥ १९८ ॥

मस्तुलुङ्गस्रुतेः क्रुद्धो हन्यादेनश्चलोऽन्यथा ।
व्रणे रोहति चैकैकं शनैरपनयेत्कचम् ॥ १९९ ॥

मस्तुलुङ्गच्युतौ खादेन्मस्तिष्कानन्यजीवजान् ।
शल्ये हृतेऽङ्गादन्यस्मात्स्नेहवर्तिं निधापयेत् ॥ २०० ॥

दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ।
सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ २०१ ॥

भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छा हृत्पार्श्ववेदना ।
ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनन्दनम् ॥ २०२ ॥

सङ्गो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ।
लोहगन्धित्वमास्ये स्याद् गात्रेऽपि च विगन्धिता ॥ २०३ ॥

आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ।
आध्मानेनातिमात्रेण शूलेनापि विशस्यते ॥ २०४ ॥

पक्काशयस्थे रुधिरे सशूलं गौरवं भवेत् ।
नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥ २०५ ॥

---

१. कार्या शल्याहृते विद्धे भङ्गाद्विदलिते क्रिया इति मुद्रिताष्टाङ्गहृदयपापाठः.
२. 'लोहगन्धित्वमास्यस्य स्याद् गात्रे च विगन्धता' इति मुद्रिताष्टाङ्गहृदयपाठः 'लोहगन्धित्वमास्येऽस्य स्याद् गात्रे च विगन्धिता' इति संग्रहपाठः. ३. 'शूलेन च' इति सङ्ग्रहेऽष्टाङ्गहृदये च ।

अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते ।
असृजा स्यन्दमानेन पार्श्वे मूत्रेण वस्तिवत् ॥ २०६ ॥

तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननम् ।
रक्ताक्षं पाण्डुवदनमानद्धं च विवर्जयेत् ॥ २०७ ॥

आमाशयस्थे वमनं हितं पक्वाशयाश्रिते ।
विरेचनं निरूहश्च निःस्नेहोष्णैर्विशोधनैः ॥ २०८ ॥

यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः ।
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥२०९ ॥

अतिनिःस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक् ।
अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं न ततोऽन्यथा ॥ २१० ॥

प्रक्षाल्य पयसा दिग्धं तृणशोणितपांसुभिः ।
प्रवेशयेत् क्लृप्तनखो घृतेनाक्तं शनैः शनैः ॥२११ ॥

क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिःपरिप्लुतम् ।
अङ्गुल्या प्रमृशेत्कण्ठं जलेनोद्वेजयेदपि ॥ २१२ ॥

तथान्त्राणि विशन्त्यन्तस्तत्कालं पीडयेत च[1] ।
वेष्टयित्वा[2] तु पट्टेन घृतेन परिषेचयेत् ॥ २१३ ॥

अनुवर्तेत वर्षं च यथोक्तां व्रणयन्त्रणाम् ।

तालीसाद्यं तैलम् ।

तालीसं पद्मकं मांसी हरेण्वगरुचन्दनम् ॥ २१४ ॥
हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ।
पक्वं सद्योव्रणेयुक्तं तैलं रोपणमुत्तमम् ॥ २१५ ॥

गूढप्रहारादिचिकित्सा ।

गूढप्रहाराभिहते पतिते विषमोच्चकैः ।
कार्यं वातासृजित्स्नेहमर्दनाभ्यञ्जनादिकम्[3] ॥ २१६ ॥

१. 'पीडयन्ति च' इत्यष्टाङ्गहृदयपाठः. २. 'वेष्टयित्वात्र' इति अष्टाङ्गसंग्रहे च । ३. 'मर्दनाभ्यङ्गसेचनम्' ।

विश्लिष्टदेहं मथितं क्षीणं मर्महताहतम् ।
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम् ॥ २१७ ॥

(वाहटे)

रोपणे परिषेके च पाने च व्रणिनां सदा ।
तैलं घृतं वाचचार्यं शरीरं चानवेक्ष्य च ॥ २१८ ॥

घृतानि यानि वक्ष्यामि यत्नतः पित्तविद्रधौ ।
सद्योव्रणेषु देयानि तानि वैद्येन जानता ॥ २१९ ॥

(सौश्रुते)

(भङ्गस्य स्वरूपम्)

पतनपीडनादिभिरभिघातविशेषैरनेकविधमस्थिभङ्गमुपदिशन्ति । तत्तु भङ्गजातं द्व्यधिष्ठानं सन्धावसन्धौ च । तत्र सन्धिमुक्तं षड्विधम् । उत्पिष्टं विश्लिष्टमवक्षिप्तमाक्षिप्तं तिर्यक्क्षिप्तं विवर्तितमिति । तस्य च सामान्यलक्षणं प्रसारणाकुञ्चनविवर्तनाक्षेपणाशक्तिरुग्ररुजता स्पर्शासहिष्णुत्वं च । असन्धिभग्नं पुनर्द्वादशविधम् । तद्यथा— कर्कटकं वक्रं स्फुटितं वेल्लितं अस्थिशल्लिकाश्वकर्णं पिच्चितं दारितं चूर्णितमतिपातितं शोषितं मज्जानुगतमिति । श्वयथुबाहुल्यस्पन्दनस्पर्शासहिष्णुता अवपीड्यमाने सशब्दस्रस्ताङ्गता वेदनातिप्रवृत्तिस्सर्वासु चावस्थासु शर्म न भवतीति साधारणमसन्धिभग्नरूपम् ॥

(संग्रहे)

साध्यासाध्यम् ।

प्राज्याणुदारि यच्चास्थि स्पर्शे शब्दं करोति यत् ।
यत्रास्थिलेशः प्रविशेन्मध्यमस्थ्नो विदारितः ॥ २२० ॥

भग्नं यद्वाभिघातेन किञ्चिदेवावशेषितम् ।
उत्पिष्यमानं क्षतवच्च मज्जनि मज्जति ॥ २२१ ॥

तद्दुःसाध्यं कृशाशक्तवातलाल्पाशिनामपि ।
भिन्नं कपालं यत्कट्यां सन्धिमुक्तं च्युतं च यत् ॥ २२२ ॥

जघनं प्रतिपिष्टं च भग्नं यत्तद्विवर्जयेत् ।
असंश्लिष्टकपालं च ललाटं चूर्णितं तथा ॥ २२३ ॥

१. शरीरं चानवेक्ष्य अ. ख. पाठः.

यत्र भग्नं भवेच्छङ्खशिरःपृष्ठस्तनान्तरे ।
सम्यग्घ्यमितमप्यस्थि दुर्न्यासाद् दुर्निबन्धनात् ॥ २२४ ॥
संक्षोभादपि यद् गच्छेद् विक्रियां तद्विवर्जयेत् ।
आदितो यच्च दुर्जातमस्थिसन्धिरथापि वा ॥ २२५ ॥
तरुणास्थीनि नाम्यन्ते भज्यन्ते नलकानि तु ।
कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा । २२६ ॥

(वाहटे)

भग्नस्य बन्धनादयः ।

भग्नं संस्थापनोपायैस्तैस्तैः संस्थाप्य निश्चलम् ।
पट्टेनाथ घृताढ्येन परिवेष्ट्योपरि क्षिपेत् ॥ २२७ ॥
वटादिवल्कं वंशं वा मध्यमं बन्धमाचरेत् ॥

(तन्त्रान्तरे)

शिथिलेन हि बन्धेन सन्धेः स्थैर्यं न जायते ।
गाढेनातिरुजादाहपाकश्वयथुसम्भवः ॥ २२८ ॥
त्र्यहात् त्र्यहादतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ।
साधारणे तु पञ्चाहाद् भग्नदोषवशेन वा ॥ २२९ ॥
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ।
तं पञ्चमूलसिद्धेन पयसा तु सवेदनम् ॥ २३० ॥
सुखोष्णं चावचार्यं स्याच्चक्रतैलं विजानता ।
विभज्य देशं कालं च वातघ्नौषधसंयुतम् ॥ २३१ ॥
प्रततं लेपसेकांश्च विदध्याद् भृशशीतलान् ।
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥ २३२ ॥
प्रातः प्रातः पिबेद् भग्नः शीतलं लाक्षया युतम् ।
सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ॥ २३३ ॥
कषायैः प्रतिसार्योऽथ शेषो भग्नोदितः क्रमः ।
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥ २३४ ॥
सन्दधीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत् ।
तान् समान् सुस्थितान् ज्ञात्वा फलिनीलोध्रकट्फलैः ॥२३५॥

समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ।
धातकीलोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः ॥ २३६ ॥

(वाहटे)

विश्लिष्टोत्पिष्टयोः सन्धिमेवमेवाविघट्टयन् ।
उपाचरेद्यथास्वं च विसर्पादीनुपद्रवान् ॥ २३७ ॥

(संग्रहे)

इति भग्न उपक्रान्तः स्थिरधातोर्ऋतौ हिमे ।
मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा ॥ २३८ ॥

पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ।
मासैः स्थैर्यं भवेत्सन्धेर्यथोक्तं भजतो विधिम् ॥ २३९ ॥

(वाहटे)

अङ्गुल्यादिभग्नस्य चिकित्सा ।

सामान्यसाधनमिदं विशेषो वक्ष्यते त्वतः ।
भग्नां सन्धिविमुक्तां वा कृत्वा पूर्ववदङ्गुलिम् ॥ २४० ॥

तनुनावेष्ट्य पट्टेन घृतसेकं प्रदापयेत् ।
कौर्परं तु भिषक् सन्धिमङ्गुष्ठेनानुमार्जयेत् ॥ २४१ ॥

अनुसृज्य ततः सन्धिं पीडयेत्कूर्पराच्च्युतम् ।
प्रसार्याकुञ्चयेच्चैनं स्नेहसेकं च कारयेत् ॥ २४२ ॥

मणिबन्धे च जानौ च गुल्फे चैष क्रियाक्रमः ।
उभे तले समे कृत्वा तलभग्नस्य देहिनः ॥ २४३ ॥

बध्नीयाच्चार्मतैलेन परिषेकं च कारयेत् ।
प्राग्गोमयमयं पिण्डं धारयेन्मृण्मयं ततः ॥ २४४ ॥

हस्ते जातबले कार्यं क्रमात्पाषाणधारणम् ।
दन्तानभग्नांश्चलितान् सरक्तानवपीडयेत् ॥ २४५ ॥

वयस्थस्याम्बुभिः शीतैः परिषिच्य प्रलेपयेत् ।
बहिर्निर्वापणैरन्तः सन्धानीयैरुपाचरेत् ॥ २४६ ॥

१. 'णु' ख. पाठः.

बलाढ्यभृते क्षीरे पञ्चकादिभृतं घृतम् ।
नस्यगण्डूषयोर्योज्यं चलद्द्विजहितानि च ।
त्रीन्मासान्मृदु भुञ्जीत रसान्नं कठिनं त्यजेत् ॥ २४७ ॥

(सङ्ग्रहे)

कटीजङ्घोरुभग्नानां कवाटशयनं हितम् ।
यन्त्रणार्थे तथा कीलाः पञ्च कार्या निबन्धनाः ॥ २४८ ॥

जङ्घोरुपार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ।
श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ॥ २४९ ॥

विमोक्षे भग्नसन्धीनां विधिमेवं समाचरेत् ।
सन्धींश्चिरविमुक्तांस्तु स्निग्धस्विन्नान्मृदूकृतान् ॥ २५० ॥

उक्तैर्विधानैर्युक्त्या च यथास्वं स्थानमानयेत् ।
असन्धिभग्ने रूढे तु विषमोल्बणसाधिते ॥ २५१ ॥

आपोथ्य भग्नं यमयेत्ततो भग्नवदाचरेत् ।
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ॥ २५२ ॥

पक्वमांससिरास्नायुसन्धिश्लेषं न गच्छति ।

(वाहटे)

शालिक्षीररसाज्याद्यैः पौष्टिकैरविदाहिभिः ॥ २५३ ॥

मात्रयोपचरेद् भग्नं सन्धिसंश्लेषकारिभिः ।
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ॥ २५४ ॥

(संग्रहे)

लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च ॥ २५५ ॥
मांसं मांसरसं क्षीरं सर्पिर्यूषं सतीनजम् ।
बृंहणं चान्नपानं च देयं भग्नाय जानता ॥ २५६ ॥

(सौश्रुते)

हैयंगवीनं सपट्टग्रलिप्ते-
चीस्याम्लवल्कं तु तुषोदकेन ।
चिञ्चास्थिबदरोपणकुम्भकार-
कपालपथ्यामपि भग्नशोफे ॥ २५७ ॥

(सिद्धयोगे)

वातव्याधिविनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत् ।
चतुष्प्रयोगान् बल्यांश्च वस्तिकर्म च शीलयेत् ॥ २५८ ॥

अनुल्बणमनाविद्धं स्वस्थाने पर्यवस्थितम् ।
अवेदनं च चेष्टायां भग्नं विद्यात्सुसाधितम् ॥ २५९ ॥

(सङ्ग्रहे)

गन्धतैलम् ।

कृष्णांस्तिलान्विरजसो दृढवस्त्रबद्धान्
सप्तक्षपा वहति वारिणि वासयेत ।
संशोषयेदनुदिनं प्रविसार्य चैतान्
क्षीरे तथैव मधुककथिते च तोये ॥ २६० ॥

पुनरपि पीतपयस्कांस्तान् पूर्ववदेव शोपितान् बाढम् ।
विगततुषानरजस्कान् सञ्चूर्ण्य विचूर्णितैर्युञ्ज्यात् ॥ २६१ ॥

नलदवालकलोहितयष्टिकानखमिसिप्लवकुष्ठबलाढ्यैः ।
अगरुकुङ्कुमचन्दनशारिवासरलसर्जरसामरदारुभिः ॥ २६२ ॥

पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ।
समस्तगन्धभैषज्यासिद्धदुग्धेन पीडयेत् ॥ २६३ ॥

शैलेयरास्नांशुमतीकशेरुकालानुसारीनतपत्रलोध्रैः ।
सक्षीरशुक्लैः सपयस्कदूर्वैस्तैलं पचेत्तन्नलदादिमिश्रं ॥ २६४ ॥

गन्धतैलमिदमुत्तममस्थिस्थैर्यकृज्जयति चाशु विकारान् ।
वातपित्तजनितानतिवीर्यान् व्यापिनोऽपि विविधैरुपयोगैः ॥

(वाहटे)

एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
आक्षेपके पक्षघाते तालुशोषेऽर्दिते तथा ॥ २६६ ॥

मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ २६७ ॥

पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने ।
[1]ग्रीवास्कन्धोरसां वृद्धिरमुनैवोपजायते ॥ २६८ ॥

---

१. ग्रीवास्कन्धोरसां इति मुद्रितसुश्रुते।

मुखं च पद्मप्रतिमं ससुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविनाशनम् ॥ २६९ ॥
राजार्हमेतत्कर्तव्यं राज्ञामेव विचक्षणैः ।

(सौश्रुते)

दग्धव्रणस्य लेपादयः ।

पयसि हन्ति हुताशनजं जपा
कुसुमवल्कभृतं तिलजं तथा ।
अपि च रोमयुतं तिलजं भृतं
सपदि केवलमेव विनिःसृतम् ॥ २७० ॥

बदरीतिलकल्काढ्यकाञ्जिके कथितोद्धृतम्[1] ।
फेनं प्रलिम्पेद् घटजं पङ्कं वाग्निकृते व्रणे ॥ २७१ ॥
सिक्थं सौवीरसंपिष्टं नन्द्यावर्ताङ्घ्रिमेव वा ।
नवनीतेन संयुक्तं लेपयेद्दहनव्रणम् ॥ २७२ ॥
मथितेऽवन्तिसोमाढ्ये कर्दमं पोट्टलीकृतम् ।
विपाच्य तेन कोष्णेन सेकः स्याद्दहनव्रणे ॥ २७३ ॥
मत्स्याक्षिसाधितं सर्पिर्दहनव्रणनाशनम् ।
शतधौताज्यलेपश्च गोळिकल्कप्रलेपनम् ॥ २७४ ॥

(सिद्धयोगे)

दलान्यामलकानां तु सूक्ष्मचूर्णानि कारयेत् ।
दग्धव्रणोपरि क्षिप्त्वा तैलेनाभ्यञ्जनं हितम् ॥ २७५ ॥
शमीपत्रशिरीषत्वक्कृच्छारिवा मधुकोत्पलम् ।
दूर्वा चातिबलोशीरे प्रदेहपरिषेचनम् ॥ २७६ ॥
दग्धव्रणहरं श्रेष्ठमग्निवीसर्पनाशनम् ॥

क्षीरिवृक्षादितैलम् ।

क्षीरिवृक्षत्वचो धात्रीचन्दनं मधुयष्टिका ॥
एषां क्वाथे जपापुष्पकल्कगर्भं विपाचयेत् ॥ २७७ ॥

---

१. मथितोद्धृतम् । ग. पाठः

क्षीरप्रस्थं घृतात्तैलात् प्रस्थं च परिपाचितम् ।
तत्तैलं साधयेदग्निदग्धान् घोरव्रणानपि ॥ २७८ ॥

कार्पासदूर्वासहदेविकार्क-
माचीव्रणघ्नीखरमञ्जरीभिः ।
सहामृताचन्दनयष्टिकाभिः
सर्पिर्विपक्वं दहनव्रणघ्नम् ॥ २७९ ॥

(एतानि तन्त्रान्तरात्)

ताम्बूलचूर्णसन्दग्धे काञ्जिकं धारयेन्मुखे ।
ताम्बूलचूर्णदग्धस्तु धारयेच्च प्रयत्नतः ॥
गण्डूषं तिलतैलस्य पुरुषः सुखवाञ्छया । २८० ॥

(चन्द्रटे)

इति योगरत्नसमुच्चये व्रणचिकित्साधिकारः
षड्विंशतिः ।

---

## अथ भगन्दरचिकित्साधिकारः ।

### निदानम् ।

हस्त्यश्वपृष्ठगमनकठिनोत्कुटकासनैः ।
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ १ ॥
अनिष्टादिष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेण पिटकापूर्वो योऽङ्गुले ह्यङ्गुलेऽपि वा ॥ २ ॥
पायोर्व्रणान्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ।
बस्तिमूत्राशयाभ्याशगतत्वात् स्यन्दनात्मकः[1] ॥ ३ ॥
भगन्दरः स सर्वश्च दारयत्याक्रियावतः ।
भगबस्तिगुदांस्तेषु दीर्यमाणेषु भूरिभिः ॥ ४ ॥
वातमूत्रशकृच्छुक्रं खैः सूक्ष्मैर्वमति क्रमात् ।
दोषैः पृथग्युतैः सर्वैरागन्तुस्सोऽष्टमः स्मृतः ॥ ५ ॥

---

1. स्यन्दनात्मकः इति मुद्रिताष्टाङ्गहृदयपाठः

अपक्वं पिटकामाहुः पाकप्राप्तं भगन्दरम् ।
गूढमूलां ससंरम्भां रुगाढ्यां रूढकोपिनीम् ॥ ६ ॥
भगन्दरकरीं विद्यात् पिटकां नत्वतोऽन्यथा ॥

(वाग्भटे)

तत्र वातजा पिटका श्यावारुणा सतोदस्फुरणा । पक्वा तु शतपोनकवदणुमुखैः सफेनाच्छस्रावैः छिद्रैः क्रमाच्छीर्यते । सोऽयं शतपोनकाख्यो भगन्दरः । पित्तजा रागोष्मज्वरवती तनुरुष्ट्रग्रीवावदुच्छ्रिता सोऽयमुष्ट्रग्रीवाख्यः । कफजा महामूला पाण्डुरा कण्डूमती । पक्वा तु बहुपिच्छा परिस्राविणी । स परिस्राव्याख्यः । वातपित्तजा घोररुजा सदाहोषा । पक्वायां प्राकारपरिखेव परितो गुदं परिक्षिप्य गतिर्जायते । स परिक्षेपो नाम । वातकफजा पाण्डुरा कृच्छ्रपाका पक्वायामृज्वागत्या गुदो दीर्यते,सोऽयमृज्वाख्यः । कफपित्ताद् पूर्वोत्थमर्शः संश्रित्य कुपिता दर्शोमूले कण्डूदाहादिमाञ्छोफः स्यात् । स शीघ्रं पक्वाभिन्नो मूलमर्शसः क्लेदयन् गतिभिरजस्रं स्रवति । सोऽयमर्शोभगन्दरः । सर्वजा पादाङ्गुष्ठसमा विविधरुजा सशूलारोचकतृड्ज्वरच्छर्दिदाहा । पक्वा तु शम्बुकावर्तसन्निभा । स शम्बुकावर्तकाख्यः । मांसगृद्ध्या भुक्तोऽस्थिलेशस्तिर्यङ्निर्गच्छन् गुदं यदा क्षिणोति तदा गतिः स्यात् । तत्र मांसकोथजा कृमयो गुदं खादन्तः परितो दारयन्ति । सोऽयं क्षतजो भगन्दर उन्मार्गाख्यः ।

चिकित्सा ।

षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ।
प्रवाहिणीं वलीं प्राप्तं सीवनीं वा समाश्रितम् ॥ ७ ॥
अथास्य पिटकामेव तथा यत्नादुपाचरेत् ।
शुद्ध्यसृक्स्रुतिसेकाद्यैर्यथा पाकं न गच्छति ॥ ८ ॥
पाके पुनरुपस्निग्धं स्वेदितं चावगाहतः ।
यन्त्रयित्वार्शसमिव पश्येत्सम्यक् भगन्दरम् ॥ ९ ॥
अर्वाचीनपराचीनमन्तर्मुखबहिर्मुखम् ।
अथान्तर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत् ॥ १० ॥

बहिर्मुखं च निःशेषं ततः क्षारेण साधयेत्।
अग्निना वा भिषक् साधु क्षारेणैवोष्ट्रकन्धरम्। ११॥

(वाहटे)

ततो निर्वापणशोधनरोपणैर्यथाकालं साधयेत्।

(सङ्ग्रहे)

एषां तु शस्त्रपतनाद्वेदना यदि जायते।
तत्राणुतैलेनोष्णेन परिषेकः प्रशस्यते॥ १२॥

(सुश्रुतादिति चन्द्रटे)

अर्शोभगन्दरे पूर्वमर्शांसि छिंद्यात्। ततो गत्यनुसारेण भगन्दरम्।

भगन्दरे बहुच्छिद्रे छेदमालोच्य योजयेत्।
आस्रावमार्गान् निःशेषं समस्तांश्चाग्निना दहेत्॥ १३॥
यतेत कोष्ठशुद्धौ च भिषक् तस्यान्तरान्तरा।

(संग्रहे)

कल्कः कोष्णः शुण्ठीसुररिपुशयनेष्टकापुनर्नवजः।
लेपाद् भगन्दरघ्नो वराजलेऽस्थीव वैडालम्॥ १४॥

(काञ्चीपुरवासी)

लेपो व्रणे विडालास्थित्रिफलारसकल्कितम्॥

(वाहटे)

पुनर्भूवटपत्राणि गुडूची विश्वभेषजम्।
सेष्टकास्तक्रपिष्टास्तु लेपो हन्ति भगन्दरम्॥ १५॥
आरग्वधनिशालाक्षाचूर्णाज्यक्षौद्रसंयुता।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशनी॥ १६॥

(सिद्धसारे)

तिलकुम्भवरादन्तीतुत्थसिन्धूत्थमाक्षिकम्।
सकृष्णारोचनं कुष्ठं शोधनं मांसकृत्पुनः॥ १७॥
माञ्जिष्ठासैन्धवक्षौद्रनागदन्तीत्रिवृत्तिलाः।

(सङ्ग्रहे)

---

१. तत्र तैलेन कोष्णेन ग. पाठः.

त्रिवृत्तेजोवतीदन्तीमञ्जिष्ठारजनीद्वयम् ।
तार्क्ष्यजं निम्बपत्रं च लेपो नाळीव्रणापहः ॥ १८ ॥

(सिद्धसारे संग्रहे च)

त्रपुताम्रसीससंभवकल्कमिदं तैलमायसे पात्रे ।
घृष्टं बहुशो लिप्तं भगन्दरघ्नं तथा व्रण्यम् ॥ १९ ॥

(काञ्चीपुरवासी)

ज्योतिष्मतीमलयुलाङ्गलिसेलुपाठा-
कुम्भाग्निसर्जकरवीरवचासुधार्कैः ।
अभ्यञ्जनाय विपचेत भगन्दराणां
तैलं वदन्ति परमं हितमेतदेषाम् ॥ २० ॥

(वाहटे)

एतत्तैलं विष्यन्दनाख्यमिति संग्रहे ।

करवीरतैलम् ।

करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः ।
मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगन्दरे ॥ २१ ॥

(सिद्धसारे)

फलत्रयाग्नित्रिवृदिन्द्रवारुणी-
शताह्वकुष्ठैः करवीरलाङ्गलैः ।
निशार्ककासीसकरञ्जसैन्धवैः
सतिन्त्रिणीबीजनिकुम्भनिम्बजैः ॥ २२ ॥
साजाजिकाङ्कोलवचाकटुत्रयै-
र्गिरीन्द्रकर्णीकटुरोहिणीयुतैः ।
सहाश्वमारैः खरपर्णिकान्वितै-
र्महातरुक्षीरकरूटकान्वितैः ॥ २३ ॥
तैलं घृतं वा विपचेत्कषाये
कल्कीकृतैस्तैर्विधिवद्विभिन्नैः ।
प्रयोजयेत्तच्च भगन्दरेषु
रुजाहरं शोधनमाशु रोपणम् ॥ २४ ॥

तदेव नाड्यर्बुददुष्टकुष्ठ-
मेहव्रणघ्नं व्रणजन्तुजिच्च ॥

(सारसंक्षेपे)

विश्वापत्रेण केतक्या ताम्बूलीनां दलेन वा ।
उपनाहक्रियां कुर्याद् भगन्दरविनाशनीम् ॥ २५ ॥

(योगमालायाम्)

मधुकरोध्रकणात्रुटिरेणुकाद्विरजनीफलिनीपटुसारिवाः ।
कमलकेसरपद्मकधातकीमदनसर्जरसामयरोध्रकाः ॥ २६ ॥

सबीजपूरच्छदनैरेभिस्तैलं विपाचितम् ।
भगन्दरापचीकुष्ठमधुमेहव्रणापहम् ॥ २७ ॥

मधुतैलयुता विलङ्गसारत्रिफलामागधिकाकणाश्च लीढाः ।
कृमिकुष्ठभगन्दरप्रमेहक्षतनाडीव्रणरोपणा भवन्ति ॥ २८ ॥

अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुद्रुतं पिटकास्थौल्यभगन्दरान् जयेत् ॥ २९ ॥

गुग्गुलुपञ्चपलं पलिकांशा
मागधिका त्रिफला च पृथक् स्यात् ।
त्वक् त्रुटिकर्षयुतं मधुलीढं
कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ३० ॥

शृङ्गिवेररजोयुक्तं तदेव तु सुभावितम् ।
क्वाथेन दशमूलस्य विशेषाद्वातरोगजित् ॥ ३१ ॥

(वाहटे)

निर्गुण्डीवरणैरण्डचित्रकैः क्वथितं जलम् ।
ससैन्धवं तु तैलाढ्यं हन्ति पञ्चभगन्दरम् ॥ ३२ ॥

(हारिश्चन्द्रे)

बिल्वाग्निमन्थातगरचित्रकाङ्घ्रिशृतं जलम् ।
त्रिवृत्कणाभयाचूर्णयुक्तं हन्ति भगन्दरान् ॥ ३३ ॥

(सिद्धयोगे)

निशाग्निपाठानृपतीन्द्रवारुणी-
करञ्जनिम्बासनचित्रमूलकैः ।
शृतं जलं सैन्धवहिङ्गुसंयुतं
भगन्दरार्शांसि निहन्ति तत्क्षणात् ॥ ३४ ॥

पटोलशुण्ठीगिरिकर्णिकावचा-
कुलत्थदन्तीसुरदारुशिग्रुभिः ।
शृतं जलं सैन्धवहिङ्गुसंयुतं
भगन्दरार्शांसि निहन्ति तत्क्षणात् ॥ ३५ ॥

(योगमालायाम्)

खदिराम्बुरतो भूत्वा कषायं त्रैफलं पिबेत् ।
महिषाक्षविलङ्गाभ्यां भगन्दरहरं परम् ॥ ३६ ॥

(बिन्दुसारे)

आर्द्रकस्य रसे सिद्धं कल्के वा पाययेद् घृतम् ॥

(संग्रहे)

पिबेद्वातविकारोक्तं घृतं गुल्गुलुतिक्तकम् ।
योज्यं यक्ष्माधिकारोक्तं सप्तविंशतिगुल्गुलु ॥ ३७ ॥

(कुत्रचित्)

भगन्दरेष्वेष विशेष उक्तश्शेषाणि तु व्यञ्जनसाधनानि ।
व्रणाधिकाराद् परिशीलनाच्च सम्यग्विदित्वौषधिकं विदध्यात्[१]॥३८॥

अश्वपृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यम् ।
साहसानि विविधानि च रूढे वत्सरं परिहरेदधिकं वा ॥ ३९ ॥

(वाहटे)

इति भगन्दरचिकित्सा ॥

## ग्रन्थिनिदानम् ।

कफप्रधाना कुर्वन्ति मेदोमांसास्रगा मलाः ।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात्स्मृतः ॥ १ ॥
दोषासृङ्मांसमेदोऽस्थिसिराव्रणभवा नव ।

(वाहटे)

---

१. सम्यग्विदित्वौषधिकं मुद्रिताष्टाङ्गहृदयपाठः.

तत्र वातजः सतोदभेदः कृष्णः स्थानात् स्थानान्तरगतिरहेतुवृद्धिहानिः । पक्वभिन्नोऽच्छमसृक् स्रवति । पित्तजः शीघ्रपाको रक्तः सदाहः स्यात् । भिन्नोऽस्रमुष्णं स्रवति । कफजः सवर्णः शीतो नीरुजो घनः । पक्वो घनपूयास्रावः । रक्तजः पित्तलिङ्गः, सिरामांसाश्रयां बहुकृमिस्त्रापश्च । मांसळाहारदूषितं मांसं कफग्रन्थिलिङ्गं स्निग्धं महान्तं कठिनं ग्रन्थिं कुर्यात् । मेदुराहारवृद्धं मांसे त्वचि वा वायुना नीतं मेदः स्निग्धं मृदु चलं कफलिङ्गं देहक्षयवृद्धिक्षयोदयं ग्रन्थिं कुर्यात् । स भिन्नो घनताम्रसितासितमेदःस्रावी । अस्थिभङ्गादभिघाताद्वा यदुन्नतमवनतं वास्थि सोऽस्थिग्रन्थिः । पदातेस्तु सहसा जलावगाहनाद्व्यायामतान्तस्य वा सरक्तं सिराजालं वायुः संपीड्य संकोच्य वक्रीकृत्य विशोष्य च निःस्फुरं नीरुजं ग्रन्थिं कुर्यात् । स सिराग्रन्थिः । व्रणेषु यथोक्तक्रियावैकल्यादङ्गेऽश्महते वा कुपितो वायुर्दुष्टमसृतमस्त्रं संशोष्य ग्रथितं कण्डूदाहयुतं व्रणं कुर्यात् । स नाम्ना व्रणग्रन्थिः । तत्र दोषास्रमेदोजाः पञ्च साध्याः । न तु स्थूलखराश्चलाः मर्मकण्ठोदरस्थाश्च ॥

चिकित्सा

ग्रन्थिष्वामेषु कर्तव्या यथास्वं शोफवत् क्रिया ।
बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा ॥ २ ॥
स्नेहयेच्छुद्धिकामं च तीक्ष्णैः शुद्धस्य लेपनम् ।
संस्वेद्य बहुशो ग्रन्थिं विमृद्नीयात्पुनः पुनः ॥ ३ ॥
(वाहटे)

अङ्कोलमधुकमातुलुङ्गहिंस्रापूतीदारुबिल्वमूलसरळकुष्ठवचावरणत्वक्कालातिविषाजगन्धाभिर्लेपः । श्यामासुरदारुसमङ्गाकोशातकीसर्षपपुनर्नवैर्वा । सशोफरुक्स्तम्भे चोपनाहो यवसक्तुमधुककुष्ठशतपुष्पादेवदारुभिर्घृतयुक्तैः ।
(संग्रहे)

एष वाते विशेषेण क्रमः पित्तास्रजे पुनः ।
जळौकसो हिमं सर्वं कफजे वातिको विधिः ॥ ४ ॥

१. 'कृष्णोमृदुः' ग. पाठः, २ 'प्रतान्तस्य' ख. ग. पाठः.

तथाप्यपक्वं छित्त्वैनं स्थिते रक्तेऽग्निना दहेत् ।
साऽवशेषं सशेषो हि पुनराप्यायते ध्रुवम् ॥ ५ ॥

(वाहटे)

वातजे ग्रन्थौ विविधाश्च वातव्याधिविहिताः स्नेहस्वेदोपनाहाः । तथानुपशमे सिराव्यधः । पक्वं तु विदार्य निरस्तपूयं कृत्वार्कादिवर्गाम्भसा प्रक्षाल्य तिलकल्केन सचित्रकसैन्धवेन लेपयेत् । कफजमन्तःशुद्धस्य भृशं स्वेदयेत्, विम्लापयेच्च ।

(संग्रहे)

दन्तीचित्रकमूलत्वक्सौधार्कपयसीगुडः ।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ॥ ६ ॥
बहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम् ।
दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ ७ ॥
मांसव्रणोद्भवौ ग्रन्थी *पाचयेदेवमेव च ।
कार्यं मेदोभवेऽप्येतत्तप्तैः फालादिभिश्च तम् ॥ ८ ॥
प्रमृज्यात्तिलदिग्धेन छन्नं द्विगुणवाससा ।
सुतप्तयाथ दर्व्या वा बहुशो जतुलिप्तया ॥ ९ ॥
शस्त्रेण पाटयित्वा वा दहेन्मेदसि सद्धृते ॥

(वाहटे)

सुपक्वं वा विपाट्य मूत्रक्षालितं क्षौद्रसैन्धवसुवर्चिकाकाञ्चनक्षीरिहरितालमिश्रैः [१]क्षीरवल्कप्रगाढैस्तिलैरालेपयेत् । गुञ्जाद्विकरञ्जतापसवृक्षवंशावलेखमूत्रसिद्धं तैलमभ्यङ्गः । सम्यक्च्छिन्नं चैनं रोपयेत् ॥

(संग्रहे)

सिराग्रन्थौ नवे पेयं तैलं साहचरं तथा ।
उपनाहोऽनिलहरैर्बस्तिकर्म सिराव्यधः ॥ १० ॥

(वाहटे)

नागः किंशुकसारेण लेपो नागकृतेन तु ।
चम्पकेनोपनाहः स्याद्रात्रौ मेदःसमुत्थिते ॥ ११ ॥

(सिद्धयोगे)

* पाटयेदिति मुद्रिताष्टाङ्गहृदयपाठः । यापयेदिति संग्रहे तालपत्रात्मके अष्टाङ्गहृदये च ।

१. 'क्षीरवल्क' इति मुद्रितसङ्ग्रहपाठः.

कैडर्यमूलं करवीरमूलं सलाङ्गलीकन्दमहौषधं च ।
वचाभया शिग्रुकमूलमेषां कल्कः स्नुहीजस्वरसेन पिष्टः ॥ १२ ॥
मेदःसमुत्थं विनिहन्ति सद्यो ग्रन्थिं तथा विद्रधिमर्बुदांश्च ।
सश्लीपदान्वालजिगण्डमालां द्वयं त्रयं चापि चतुष्टयं वा ॥ १३ ॥
सुपिष्टमेतत्सकलौषधं वा प्रलेपमात्रेण ससैन्धवं तु ।
... ... .... ... ... ... ...... वहन्ति ॥ १४ ॥

(हारिश्चन्द्रे)

स्नुह्या विदह्य पेशलपत्रमिदं मेदसा ग्रन्थौ ।
संस्वेदयेत बहुशो द्वित्रिदिनैर्द्रावयेत्तमभ्यज्य ॥ १५ ॥

(कुत्रचित्)

कुष्ठं स्तन्येन सम्पिष्टं मेदोग्रन्थिविलायनम् ॥

(काञ्चीपुरवासी)

पुनर्नवार्काभयशिग्रुमूलकरञ्जसिन्धूत्थमहौषधानाम् ।
कल्कः प्रलिप्तः पशुमूत्रपिष्टो ग्रन्थ्यर्बुदं हन्त्यपचीं च सद्यः ॥ १६॥

(योगसारे)

मूलं पूतीकरञ्जस्य चित्रको लवणं सुधा ।
उपनाहः प्रधानोऽयं समस्तग्रन्थिभेदनः ॥ १७ ॥
शङ्खभस्मप्रलेपोऽयं ग्रन्थौ शस्तः सशर्करः ।
क्षीरमौदुम्बरं शस्तं शस्तमास्फोतजं पयः ॥ १८ ॥
प्रलेपने प्रशंसन्ति दुग्धं चोत्तमकर्णिजम् ॥

(हारिश्चन्द्रे)

समस्तमिन्द्रवल्याश्च सोपोदक्यास्तथैव च ।
अनन्तायाश्च निखिलं कन्दं नीलोत्पलस्य च ॥ १९ ॥
एतानि पिष्ट्वा संस्वेद्य कदुष्णं लवणोत्तरम् ।
ग्रन्थिजातिषु सर्वासु विधेयमुपनाहनम् ॥ २० ॥
श[illegible]चूर्णसमायुक्तं तैलं कंसविघट्टितम् ।
ग्रन्थेरालेपनं कार्यं पच्यमानस्य दारणम् ॥ २१ ॥
तिलमेरण्डजं बीजं शालिलाजघृतेन च ।
विशेषमुपनाहाय ग्रन्थौ भृष्टं सुचूर्णितम् ॥ २२ ॥

गोघृतं गोशकृद् भस्म बहुशः कंसमर्दितम् ।
ग्रन्थौ पाकोन्मुखे पक्के तोदहृद् भेदनं भवेत् ॥ २३ ॥

(वृषः)

पूतिकसैन्धवजठरं धुर्धूरफलं विदद्य मूर्छितम् ।
अथ परिपिष्टं पयसा सर्वानुन्मूलयेद् ग्रन्थीन् ॥ २४ ॥

(कुत्रचित्)

गात्रप्रदेशे क्वचिदेव दोषाः सम्मूर्च्छिता मांसमभिप्रदूष्य ।
वृत्तं मृदुं मन्दरुजं महान्तमनल्पमूलं चिरवृद्धिजातम् ॥ २५ ॥
कुर्वन्ति मांसोच्छ्रयमत्यगाढं तदर्बुदं शास्त्रविदो वदन्ति ॥

(सुश्रुते)

महत्तु ग्रन्थितोऽर्बुदम् ।
तल्लक्षणं च मेदोन्तैः षोढा दोषादिभिस्तु तत् ॥ २६ ॥
प्रायो मेदःकफाढ्यत्वात् स्थिरत्वाच्च न पच्यते ।
सिरास्थं शोणितं दोषः सङ्कोच्यानुप्रपीड्य च ॥ २७ ॥
पाचयेत तदानद्धं सास्रावं मांसपिण्डितम् ।
मांसाङ्कुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ॥ २८ ॥
अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ।
तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ॥ २९ ॥
अर्बुदे ग्रन्थिवत्कुर्यात् यथास्वं सुतरां हितम् ॥

(वाहटे)

उपनाहादयः ।

वातार्बुदमेरण्डप्रियालनालिकेरमज्जोर्वारुककर्कारुकबीजोत्कारिकयोपनाहयेत् । आनूपामिषवेशवारैर्वा । नाडीस्वेदं च कुर्यात् । बहुशश्चात्र शृङ्गेण रुधिरमवसेचयेत् । पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनं च प्रयोजयेत् । शाककाकोदुम्बरिकापत्रघृष्टे च प्रियङ्गुपत्तङ्गसर्जरसाञ्जनलोध्रमधुमधुकैर्लेपः । श्लेष्मजे तूर्ध्वमधश्च हतदोषस्य स्रुतरक्तस्य च वमन-

१· 'पूरित' ख. पाठः. २· 'स्थिरं' ३· चिरवृद्ध्यपाकं इति च मुद्रितसुश्रुतपाठः.
४· सङ्कोच्यान्तः प्रपीड्य च मुद्रिताष्टाङ्गहृदयपाठः.
५ 'सर्जरसार्जुन' इति मुद्रितसंग्रहपाठः.

विरेचनद्रव्यैः प्रलेपः। काकादनीशुकबर्हाग्निजिह्वामूलकदक्षकपोतगृध्रपुरीषकाशमूलैर्वा पलाशक्षारपिष्टैः॥

निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमस्तुयुक्तैः।
लेपं विदध्यात् कृमयो यथात्र मूर्च्छन्ति मुञ्चन्त्यथ मक्षिका वा॥३०॥

अल्पावशिष्टे कृमिभिः कृते च
लिखेत्ततोऽग्निं विदधीत पश्चात्।
यदल्पमूलं त्रपुताम्रसीस-
पट्टैः समावेष्ट्य तदायसैर्वा॥ ३१॥

क्षाराग्निशस्त्राण्यसकृद्विदध्यात्
प्राणानहिंसन् भिषगप्रमत्तः॥

(पाठशुद्धौ)

लेपास्वादलोभेन च निलीयमाना मक्षिकाः समुपेक्षेत। तद्विमुक्तैः कृमिभिरितरैर्वा भक्ष्यमाणं च। ततः कृमिभक्षितावशेषं शाकादिपत्रैर्विलिख्याग्निना प्रतिसारयेत्। जात्यास्फोटकरवीरपल्लवांश्च व्रणशोधनाय कल्कादौ। तैलं चात्र पाठाविडङ्गभार्ङ्गीत्रिफलाकषायसिद्धमभ्यञ्जनम्। मेदोऽर्बुदं स्विन्नभिन्नं सुशोधितमेदस्कमुपशान्तरक्तस्रावं सद्यः सीव्येत्। ततो गृहधूमलोध्रमनश्शिलाहरिद्रापत्तङ्गचूर्णैर्मधुमद्भिः प्रतिसारयेत्। करञ्जतैलं चाभ्यञ्जनार्थे प्रयुञ्जीत। सर्वार्बुदानि च यदृच्छया पर्यागतानि सुपरिशोधितानि रोपयेत्।

अपि च।

सशेषदोषाणि च योऽर्बुदानि
करोति तस्याशु पुनर्भवन्ति।
तस्मादशेषोद्धरणं प्रशस्तं
क्षारेण शस्त्रेण तथाग्निना वा॥ ३२॥

(संग्रहे)

चित्रकं चिरिबिल्वं च शृङ्गिवेरं पुनर्नवम्।
लाङ्गलीशिग्रुमूलं च दन्ती लवणपञ्चकम्॥ ३३॥
सकणामरिचं पिष्ट्वा गोमूत्रेण प्रलेपयेत्।
सर्वार्बुदानि नश्यन्ति न रोहन्ति पुनर्नृणाम्॥ ३४॥

दहनकुटचकुष्ठाश्वत्थभल्लातपथ्या
त्रिकटुविषसुधार्कं व्याधिघातं हरिद्रा ।
वरणलवणशुण्ठीनिम्बपुन्नाटबीजं
सुरतरुगृहधूमं भूशिरीषं करञ्जम् ॥ ३५ ॥

कृमिजशिखिवचाभिः शिग्रुमूलेन युक्तं
पशुसलिलनिपिष्टं लेपयेत् लाभतस्तत् ।
अपहरति समस्तान्यर्बुदानि स्थिराणि
द्रुतमपचिविकारं श्लीपदं ग्रन्थिजालम् ॥ ३६ ॥
(तन्त्रान्तरादादाय श्लोकीकृतम्)

उर्वारुपत्राङ्कुलनालिकेर-
प्रियालकोर्वारुकबीजचूर्णैः ।
दुग्धाम्लमूत्राज्ययुतैः प्रयुञ्ज्या-
ल्लेपोपनाहान् सकलार्बुदेषु ॥ ३७ ॥
(सिद्धसारे)

श्लीपदनिदानम् ।

प्रस्थिता वंक्षणोर्वादिमधःकायं कफोल्बणाः ।
दोषा मांसासृगाः पादौ कालेनाश्रित्य कुर्वते ॥ ३८ ॥
शनैः शनैर्घनं[2] तं शोफं श्लीपदं तत्प्रचक्षते ।
परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ॥ ३९ ॥
रूक्षं च वातात्, पित्तात्तु पीतं दाहज्वरान्वितम् ।
कफाद् गुरुस्निग्धमरुक् चितं मांसाङ्कुरैर्बृहत् ॥ ४० ॥
तत्त्यजेद्वत्सरातीतं सुमहत्सुपरिस्रुति ।
पाणिनासौष्ठकर्णेषु वदन्त्येके तु पादवत् ॥ ४१ ॥
श्लीपदं जायते तच्च देशेऽनूपे भृशं भृशम् ।
श्लीपदेऽनिलजे विध्येत् स्निग्धस्विन्नोपनाहिते ॥ ४२ ॥

चिकित्सा ।

सिरामुपरि गुल्फस्य द्व्यङ्गुले पाययेच्च तम् ।
मासमेरण्डजं तैलं गोमूत्रेण समन्वितम् ॥ ४३ ॥

१. 'पुन्नाम' ग. पाठः, २. 'घनं' मुद्रिताष्टाङ्गहृदयपाठः.

जीर्णे जीर्णान्नमश्नीयाच्छुण्ठीशृतपयोऽन्वितम् ।
त्रैवृतं वा पिबेदेवमशान्तावग्निना दहेत् ॥ ४४ ॥

(वाहटे)

वस्तिं च युञ्जीत ।

(सङ्ग्रहे)

गुल्फस्याधस्सिरामोक्षः पैत्ते सर्वं च पित्तजित् ।
सिरामङ्गुष्ठके विध्वा कफजे शीलयेद्यवान् ॥ ४५ ॥

(वाहटे)

सक्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत् । यथाबलं वा पि*प्पलीर्वर्धमानाः । तैलं वा पिबेद्विलंगार्कमरिचचित्रकशुण्ठीदेवदारुवेलावालुकलवणपञ्चकैः सिद्धम् । आलेपयेच्च नागरामृताविलंगकटुकाभद्रदारुभिर्मूत्रपिष्टैरुरुस्तम्भोक्तैश्च भेषजैः ॥

(संग्रहे)

सक्षौद्राणि कषायाणि वर्धमानास्तथाभयाः ।
लिम्पेत्सर्षपवार्ताकीमूलाभ्यां धान्ययाथवा ॥४६ ॥

(वाहटे)

यवामृताकूलकशृङ्गिवेर-
सुरद्रुमारिष्टकमुद्रवारि ।
वरारजोयुक्तमिदं निपीतं
शोफापचीश्लीपदमाशु हन्ति ॥ ४७ ॥

(हारिश्चन्द्र)

शाकोटकीयं मधुना कषाय
पिबन्ति ये क्षीरभुजस्त्यजन्ति ।
ते श्लीपदं विद्रधिशोफमुग्र-
मुन्मादशूलानपि पाण्डुरोगान् ॥ ४८ ॥

(योगामृते)

विश्वौषधं वा क्वथितं गळोची
शृतं सुराह्वाक्वथितं पिबेद्वा ।

---

* हरीतकीर्वर्धमाना इति वाहटे, पिप्पलीतीन्दुः ।

सस्राक्षिकं श्लीपदरोगवान् यः
सिद्धार्थकास्तस्य हिताः प्रलेपे ॥ ४९ ॥

पिबेद्दार्वभयाकल्कं मूत्रेणान्यतमेन वा ।
पिबेत्सर्षपतैलं वा श्लीपदानां निवृत्तये ॥ ५० ॥

सर्षपविजयानागरहिङ्गुवचाशिग्रुरविमूलैः ।
दिनकरपयसा पिष्टैः श्लीपदनाशाय लेपनं कुर्यात् ॥ ५१ ॥

दिनकरमूलं पिष्ट्वा दिनकरपयसा प्रलेपयेदथवा ।
नागरसर्षपकल्कं श्लीपदनाशाय हिङ्गुयुतम् ॥ ५२ ॥

(सिद्धयोगे)

कुठेरकविमिश्रेण मृगशृङ्गान्वितेन च ।
साज्येनालेपितं क्षिप्रं श्लीपदं संप्रणश्यति ॥ ५३ ॥

श्लीपदं संप्रणश्येत पक्षार्धेनाधिकेन वा ।
कटुतैलप्रघृष्टेन मृगशृङ्गेन लेपितम् ॥ ५४ ॥

पिष्टैरेरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ ५५ ॥

शीतं देशं विशरणमन्नपानं च शीतलम् ।
दधि मांसानि शाकानि वर्जयेच्छ्लीपदी नरः ॥ ५६ ॥

(सिद्धसारे)

तुषपयसा गोनासाद्दढतररुपनाहपानलेपाद्यैः ।
जयति तथा निःशेषमुपोदकाश्लीपदस्यार्त्तिम् ॥ ५७ ॥

गोमूत्रेण विपक्वः शाकोटकवृक्षवल्कलक्काथः ।
शमयति श्लीपदविपदं हंसपदी खल इवातिस्तुतिं ॥ ५८ ॥

(काञ्चीपुरवासी)

अपचीनिदानम् ।

मेदःस्थाः कण्ठमन्याक्षकक्षवंक्षणगा मलाः ।
सवर्णान् कठिनान् स्निग्धान् वार्त्ताकामलकाकृतीन् ॥ ५९ ॥

---

१. 'सैन्धवैः' ग. पाठः.

अवगाढान् बहून् गण्डांश्चिरपाकांश्च कुर्वते ।
पच्यन्तेऽल्परुजस्तेऽन्ये स्रवन्त्यन्येऽतिकण्डुराः ॥ ६० ॥

नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः ।
गण्डमालापची चेयं दूर्वेव क्षयवृद्धिभाक् ॥ ६१ ॥

तां त्यजेत् सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम् ॥

(वाग्भटे)

चिकित्सा ।

हंसपाद्यमृतानिम्बपिप्पलीवृक्षकैः शृतम् ।
जलं गळजगण्डं च गण्डमालां च नाशयेत् ॥ ६२ ॥

(हारिश्चन्द्रे)

निम्बत्वक्प्लक्षबृहतीरात्रिवराकूलकामृताविश्वैः ।
क्वाथः प्रगे निपीतः समधु पुरो गण्डमालाघ्नः ॥ ६३ ॥

(योगसुधाकरे)

ऊर्ध्वाधःशोधनं पेयमपच्यां साधितं घृतम् ।
दन्तीद्रवन्तीत्रिवृताजालिनीदेवदारुभिः ॥ ६४ ॥

शीलयेत्कफमेदोघ्नं धूमगण्डूषनावनम् ।
सिरयापहरेद्रक्तं पिबेन्मूत्रेण ताक्ष्यंजम् ॥ ६५ ॥
ग्रन्थीनपक्वानालिंपेत् नाकुलीपटुनागरैः ।
स्विन्नान् लवणपोट्टल्या कठिनाननु मर्दयेत् ॥ ६६ ॥

शमीमूलकशिग्रूणां बीजैः सयवसर्षपैः ।
लेपः पिष्टोऽम्लतक्रेण ग्रन्थिगण्डविलायनः ॥ ६७ ॥

पाकोन्मुखान्स्रुतास्रस्य पित्तश्लेष्महरैर्जयेत् ।
अपक्वानेव चोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥ ६८ ॥

काकादनीलाङ्गलिकानहिकोत्तुण्डकफलैः ।
जीमूतबीजकर्कोटीविशालाकृतवेधनैः ॥ ६९ ॥

---

१. 'जस्त्वन्ये', २. 'दालिभिः', ३. 'विलापनः', ४. 'तुण्डकीफलै' मुद्रिताष्टाङ्गहृदयपाठः,

पाठान्वितैः पलाधांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥ ७० ॥

अनेन माला गण्डानां चिरजा पूयवाहिनी ।
सिध्यत्यसाध्यकल्पापि पानाभ्यञ्जननावनैः ॥ ७१ ॥

तैलं लाङ्गलिकीकन्दकल्कपादे चतुर्गुणे ।
निर्गुण्डीस्वरसे पक्वं नस्याद्यैरपचीप्रणुत् ॥ ७२ ॥

भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्वनैः ।
मनाशिलालनलदविशालाकरवीरकैः ॥ ७३ ॥

गोमूत्रपिष्टैः पलिकैर्विषस्यार्द्धपलेन च ।
ब्रह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ॥ ७४ ॥

प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।
पानाद्यैः शीलितं कुष्ठं दुष्टनाडीव्रणापचीः ॥ ७५ ॥

वचादितैलम् ।

वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः ।
तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥ ७६ ॥

शरपुंखोद्भवं मूलं पिष्टं तण्डुलवारिणा ।
नस्याल्लेपाच्च दुष्टारुपचीविषजन्तुजित् ॥ ७७ ॥

मूलैरुत्तमकारिण्याः[1] पीलुपर्ण्याः[2] सहाचरात् ।
सलोध्राभययष्ट्याह्वशताह्वाद्वीपिदारुभिः ॥ ७८ ॥

तैलं क्षीरसमं सिद्धं नस्येऽभ्यङ्गे च पूजितम् ।
गोऽव्यजाश्वखुरा दग्धाः कटुतैलेन लेपनम् ॥ ७९ ॥

(वाग्भटे)

सौवर्चलादितैलम् ।

सौवर्चलसैन्धवचित्रकदन्तीभल्लातचित्रककल्केन सिद्धं तैलमभ्यङ्गोऽपच्यां तण्डुलीयकस्वरसेन वा । सनिर्गुण्डीस्वरसं वा तैलं साधितमभ्यङ्गपाननावनैः गण्डमालापचीव्रणकुष्ठानिलार्त्तिहरम् । मां-

---

1. 'कारुण्याः' 2. 'पीलुपर्ण्याः' मुद्रिताष्टाङ्गहृदयपाठः।

सीसर्जरसकार्पासमूलसैन्धवैः स्तन्यपिष्टैस्तैलं विपक्वमभ्यङ्गो व्रण-काठिन्यघ्नः ॥

(सङ्ग्रहे)

व्योषं विडङ्गं मरिचं सैन्धवं देवदारु च ।
तैलमेभिः शृतं नस्यात्कण्ठामपचीं जयेत् ॥ ८० ॥

(चाक्षुषे)

गण्डमालापहं तैलं सिद्धं शाकोटकत्वचा ॥

(सिद्धसारे)

तुंबीरसेन कटुकेन चतुर्गुणेन
कल्कीकृतैर्मरिचमागधिकौषधैश्च ।
तैलं शृतं हरति श्लीपदगण्डमाला-
ग्रन्थ्यर्बुदानपि गळे गळगण्डरोगान् ॥ ८१ ॥

(चिकित्साकलिकातः)

कृतमालकपूतीककुटचातिविषाविषैः ।
क्षारैस्त्रिकटुकैः सिद्धं सर्पिः स्यादपचीहरम् ॥ ८२ ॥

(महायाने)

स्नुह्यर्कदुग्धपिष्टनागरपट्वम्लिकाग्निवकुलास्थि ।
अपचीनाशनमुदितं यथा शक्रद्रुमस्य गोऽश्वतैलेन ॥ ८३ ॥

खदिराग्निदग्धदक्षिणगोशृङ्गमषीसमाप्लुतं तैलम् ।
नाशयति द्रागपचीं विधिरिव विमुखो नृणां यत्नम् ॥ ८४ ॥

(काञ्चीपुरवासी)

स्नुह्यर्कदुग्धलवणं प्रदिहेदपच्यां
विश्वाम्लिकाग्निवकुलास्थि तथैव लिंपेत् ।
निर्गुण्डिकादलरसेषु हलेन सिद्ध-
मभ्यंजनं तिलरुहं तु विनाशनं स्यात् ॥ ८५ ॥

(योगामृते)

पूतीकलुङ्गौषधसिन्दुवाररसोनरक्षोघ्नपटूग्रकार्कैः ।
स्नुहीदलाद्भिः सह लेपयेत्तद् द्रुतं निहन्याद्
गळगण्डमालाम् ॥ ८६ ॥

(सिद्धयोगे)

---

१. 'फलः' मुद्रितसंग्रहपाठः. २. 'मधुकं' ग पाठः

वरणार्कगळाम्पण्डवाजिगन्धामरद्रुमैः ।
जीमूतरससंपिष्टैर्लेपोऽयं गण्डमालनुत् ॥ ८७ ॥

(हारिश्चन्द्रे)

क्षुण्णानि निम्बपत्राणि तत्समैर्भल्लातकैः सह ।
शरावसंपुटे दग्ध्वा सह सिद्धार्थकैः समैः ॥ ८८ ॥
पिष्ट्वा तु च्छागमूत्रेण गण्डमालां प्रलेपयेत् ।
सर्षपाः शिग्रुमूलानि शणबीजातसीयवाः ॥ ८९ ॥
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ।
गण्डानि ग्रन्थयश्चैव गण्डमालासमुत्थिताः ॥ ९० ॥
आलेपात्तेन शाम्यन्ति विलयं यान्ति चाशु ते ॥
कुक्कुटविद्फलमग्निसमानं स्नुक्पयसा सह पेष्यमथैतत् ।
एष विलेपविधिः पुरुषाणां द्रागपचीमखिलामपहन्ति ॥ ९१ ॥

(तन्त्रान्तरे)

आरग्वधशिफा क्षिप्रं सम्यक्तण्डुलवारिणा ।
पिष्ट्वा नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥ ९२ ॥
फले द्वे त्रीणि वा प्रातः विनिक्षिप्य दिनत्रयम् ।
पिबेदलंबुषरसं गण्डमालारुजापहम् ॥ ९३ ॥

(चन्द्रटे)

पाययेदभयारिष्टं गण्डीरारिष्टमेव वा ।
पिप्पलीवर्द्धमानं वा गण्डमालासु योजयेत् ॥ ९४ ॥

(भेळात्)

इत्यशान्तौ गदस्यान्यपार्श्वजंघासमाश्रितम् ।
वस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वाग्निना दहेत् ॥ ९५ ॥
पार्ष्णिं प्रति द्वादश चांगुलानि
मुक्त्वेन्द्रबस्तिश्च गदान्यपार्श्वे ।
विदार्य मत्स्याण्डनिभानि मध्या-
ज्जालानि कर्षेदिति सुश्रुतोक्तिः ॥ ९६ ॥
आगुल्फकर्णात् सुमितस्य जन्तो-
स्तस्याष्टभागं खुळकाद्विमुच्य ।

घ्राणार्जवेऽधः सुरराजवस्ते-
भित्त्वाक्षमात्रं त्वपरे वदन्ति ॥ ९७ ॥
(वाहटे)

मणिबन्धोपरिष्टाद्वा कुर्याद्रेखात्रयं भिषक् ।
अङ्गुलान्तरितं सम्यगपचीनान्निवृत्तये ॥ ९८ ॥
(पाठशुद्धौ)

अभेदात्पक्वशोफस्य व्रणे वाऽपथ्यसेविनः ।
अनुप्रविश्य मांसादीन् दूरं पूयोऽभिधावति ॥ ९९ ॥
गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः ।
नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः ॥ १०० ॥
सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पञ्चमी ॥
(वाहटे)

वातादिनाडीनां लक्षणम् ।

तत्र वातजा सरुजा सूक्ष्मास्या फेनिलोद्वमा निश्यधिकस्रावा च । पित्तजा सतृड्ज्वरदाहा पूत्युष्णस्रावा दिवाधिकस्रुतिश्च । कफजा कण्डुला घनपिच्छिलस्रुतिर्निश्यधिकस्रावा । सर्वजा सर्वलिङ्गा । सा त्वसाध्या । अन्तःस्थमनाहृतं शल्यं नाडीं कुर्यात् । सा सास्रफेनरुजं तनुमच्छमुष्णं पूयं स्रवति ॥

चिकित्सा ।

उपनाह्यानिलान्नाडीं पाटितां साधु लेपयेत् ।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः ससैन्धवैः ॥ १०१ ॥
पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशाद्वयैः ।
श्लैष्मिकीं तिलसौराष्ट्रीनिकुंभारिष्टसैन्धवैः ॥ १०२ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।
अशस्त्रकृत्यामेषिण्या भित्त्वान्ते सम्यगेषिताम् ॥ १०३ ॥
क्षारपीतेन सूत्रेण बहुशो दारयेद् गतिम् ।
व्रणेषु दुष्टसूक्ष्मास्यगंभीरादिषु साधनम् ॥ १०४ ॥
या वर्त्यो यानि तैलानि तन्नाडीष्वपि चेष्यते ।
पिष्टं चञ्चुफलं लेपान्नालीव्रणहरं परम् ॥ १०५ ॥
(वाहटे)

---

१. 'भ्रस्यते' इति मुद्रिताष्टाङ्गहृदयपाठः

घोण्टाफलत्वग्लवणं सलाक्षं
पूगस्य पत्रं वनितापयश्च ।
स्नुह्यर्कदुग्धान्वित एष कल्को
वर्तीकृतो हन्त्यचिरेण नाळीम् ॥ १०६ ॥

विभीतकाज्ञास्थिवटप्रवाळ-
हरेणुकाशल्मलिबीजयुक्ता ।
वराहपिष्टा च मषी सुगन्धा
तैलाप्लुता सर्वगतिं निहन्ति ॥ १०७ ॥

धत्तूरकं मदनकोद्रवजं च बीजं
कोशातकी शुकनसा मृगभोजनी च ।
अंकोलजं च कुसुमं परिकल्प्य चूर्णं
लाक्षोदकापहृतदोषगतौ प्रयोज्यम् ॥ १०८ ॥

मिश्रितं तेन तैलं च परमं गतिरोपणम् ।
सौत्रहेषु च कन्देषु कृतं वज्राह्वयेषु च ॥ १०९ ॥

भल्लातकार्कमधुकैर्लवणोत्तमेन
सिद्धं विळंगरजनीद्वयचित्रकश्च ।
तैलं समार्कवरसैर्विनिहन्ति कृच्छ्रां
नाळीं कफानिलकृतामपचीव्रणांश्च ॥ ११० ॥

(सङ्ग्रहे)

त्रिवृत्तेजोवतीदन्तीमञ्जिष्ठारजनीद्वयम् ।
तार्क्ष्यजं निम्बपत्रं च लेपो नाळीव्रणापहः ॥ १११ ॥

कटुकारोहिणीकृष्णाविळंगमरिचानि च ।
अर्कांकुरं वेश्मधूमं नाळीव्रणमपोहति ॥ ११२ ॥

इति योगरत्नसमुच्चये भगन्दरग्रन्थ्यर्बुदश्लीपदा-
पचीनाळीव्रणचिकित्साधिकारः
सप्तविंशतितमः ॥

## अथ क्षुद्ररोगचिकित्साधिकारः ।

वातकफाभ्यां स्निग्धा सवर्णा मुद्गसमा नीरुजा पिटका बाला-नामजगल्लिकाख्या। ताभ्यां यवसमा घना मांसाश्रिता यवप्रख्या नाम। सैवावक्त्रा वृत्ता घना च सती नाम्नाऽलजी। कच्छपाभाः स्वल्पपूयाः पञ्च वा षड् वा ग्रन्थयः नाम्ना कच्छपी। कर्णस्योर्ध्वं परितो वा शालूकाभा कठिनोग्ररुजा पिटका पनसिका। ताभ्यां हनुसन्धिजः स्थिरोऽल्परुजः शोफः पाषाणगर्दभाख्यः। ताभ्यां यूनां मुखे शल्म-लीकण्टकाकारः मेदोगर्भाः सरुजो घनाः पिटका मुखदूषिकाख्याः। त एव नीरुजः सिताः पद्ममिव कण्टकाः शरीरं व्याप्ताः पद्मकण्टकाख्याः। पित्तात्पक्वोदुम्बराभा सदाहज्वरा वृत्ता विवृतास्या विवृता नाम। पित्तैर्गात्रेषु मुखान्तश्च सदाहरुग्ज्वरा मसूरप्रमाणवर्णाः घनाः पिटकाः मसूरिकाख्याः। ततः कष्टतरा स्फोटा विस्फोटाख्या महारुजा। वात-पित्ताभ्यां पद्मकर्णिकाभा पिटकाचिता पिटका विद्धा नाम। ताभ्या-मेव स्याद् गर्दभी मण्डला विपुलोत्सन्ना सरागपिटकाचिता च। ताभ्यां कक्षासन्नेषु प्रायो देशेषु सूक्ष्मा लाजोपमा घनाः पिटका कक्ष्या नाम। तादृशी महत्येका गन्धा नाम। घर्मस्वेदयुतेऽङ्गे राजि-कामानवर्णा सरुजो घना पिटका राजिका नाम। पित्तोल्बणैर्मलै-श्चिरकारिभिरपाकस्तनुस्तोमः सज्वरः शोफो विसर्पवद्विसर्पी जाल-गर्दभाख्यः। दोषैः पित्तोल्बणैः कक्ष्याभागजाः सज्वरमांसदारुणा येऽग्न्याभाः स्फोटाः साग्निरोहिणी पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा जी-वितं हन्ति॥

त्रिलिङ्गा पिटकावृत्ता जत्रूर्ध्वमिरिवेल्लिका[1]।
विदारीकन्दकठिना विदारी कक्षवंक्षणे॥ १॥

मेदोऽनिलकफैः स्नायुमांससिरास्थैर्ग्रन्थिः स्यात्। भिन्नो वसाज्यमध्वाभस्रावी च। तत्र वृद्धो वायुर्मांसं विशोष्य ग्रथितां पूति-क्लिन्नां नानावर्णरक्तस्रावां शर्करां कुर्यात् शर्करार्बुदम्। तद्वत् पाद-

१. 'मिरिवेल्लिका' मुद्रिताष्टाङ्गहृदयपाठः

पाणितले सन्धौ जत्रूर्ध्वे वा वल्मीकवच्छनैर्ग्रन्थिरुपचीयते। सरुग्दाह-कण्डूक्लेदो बह्वणुमुखश्च स वल्मीकाख्यः सन्निपातात्। शर्कराभिहते कण्टकादिक्षते वा(वाते?पादे)कीलवदुत्सन्नो ग्रन्थिः स्यात्। तत्कदरं नाम। वेगधारणकुपितो वायुरपानो गुदमार्गं बाह्याभ्यन्तरणू-करोति। ततो दुःखं शकृन्निर्गच्छति। स रोगो रुद्धगुदाख्यः। पित्तानिलात्सरुग्ज्वरो नखमांसस्य पाकश्चिप्पं नाम। तदक्षतरोगमुपनखाख्यं च। अभिघातात्कृष्णो रूक्षः खरो नखः कुनखाख्यः। दुष्टपङ्कस्पर्शनादङ्गुल्यः सकण्डूक्लेदान्तराः अलसमित्याहुः। त्वक्स्थाः कृष्णा नीरुजस्तिलाभाः तिलकालकाः। त एवोन्नता मशाः। मशेभ्य-स्तून्नततराश्चर्मकीलाः सिता असिता वा। तत्समोऽन्नतिः सहजो लोहितो जतुमणिः।

कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम्।
शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ॥ २ ॥

श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका।
वातात्परुषं श्यावं व्यङ्गम्।

पित्तात् ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात्।
रक्ताद्रक्तान्तमाताम्रं शोषं चिमिचिमायते ॥ ३ ॥

वातेरितः कफस्त्वचं प्राप्य विशुष्यति। ततस्त्वक् पाण्डुरल्प-कण्डूरविक्लेदा क्रमाद् विचेतना च प्रसुप्ताख्या।

असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः।
मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च ॥ ४ ॥
उत्कोठः सोऽनुबद्धस्तु कोठ इत्यभिधीयते।
अजेरिगल्लिका विद्धा जालपाषाणगर्दभौ ॥ ५ ॥
यवप्रख्या पनसिका कच्छपी विवृतालजी।
रोहिणी गन्धविस्फोटौ विदारी पद्मकण्टकः ॥ ६ ॥
गर्दभी राजिका कक्ष्या मसूरी मुखदूषिका।
प्रसुप्त्युत्कोठकोठाख्यवल्मीकमशकालसाः ॥ ७ ॥

लाञ्छनन्यङ्गकदरं कुनखं शर्करार्बुदम् ।
चर्मकीलं जतुमणिः मण्डला चिप्पकालकाः ॥ ८ ॥
सरुद्धगुदमित्युक्ताः क्षुद्राः षट्त्रिंशदामयाः ।
प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ॥ ९ ॥
वल्मीकं हस्तपादे च वर्ज्यं साध्यमतोऽन्यथा ।
मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ॥ १० ॥
अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ।
सहजं लाञ्छनं साध्यं ··· ··· ॥ ११ ॥

(पाठशुद्धादौ)

विस्रावयेज्जलौकाभिरपक्वामजगल्लिकाम् ॥

(वाहटे)

यवक्षारशुक्तिसौराष्ट्रीकल्कैश्च लेपयेत् ।

(संग्रहे)

पद्मपत्रस्वरसे सक्षीरं यष्टीमधुककल्केन तैलं घृतं वा सिद्धमजगल्लिकाहरम् । पुष्पाश्वत्थतैलं च योऽन्धम् ।

(वृद्ध-)

स्वेदयित्वा यवप्रख्यां विलयाय प्रलेपयेत् ।
दारुकुष्ठमनोह्वालैरित्यापाषाणगर्दभात् ॥ १२ ॥
विधींस्तांश्चाचरेत् पक्वान् व्रणवत्साजगल्लिकान् ।
लोध्रकुस्तुम्बुरुवचाप्रलेपो मुखदूषिके ॥ १३ ॥
वटपल्लवयुक्ता वा नालिकेरोत्थशुक्तयः ।
अशान्तौ वमनं नस्यं ललाटे च सिराव्यधः ॥ १४ ॥
निम्बाम्बुवान्तो निम्बाम्बुसाधितं पद्मकण्टके ।
पिबेत्सक्षौद्रान्वितं सर्पिर्निम्बारग्वधलेपनः ॥ १५ ॥
विवृताद्यांस्तु[1] जालान्तांश्चिकित्सेत्सेरिगल्लिकान् ।
पित्तवीसर्पवत्तद्वत् प्रत्याख्याताग्निरोहिणीम् ॥ १६ ॥

(वाहटे)

1. 'विवृतादींस्तु' इति मुद्रिताष्टाङ्गहृदयपाठः

विशेषतो राजिकामपाकशर्करां वा कण्टकशर्कराभिः क्षीरपिष्टाभिर्लेपयेत् । अभीक्ष्णं च मृजाशीलनम् । जालगर्दभे धात्रीफलान्युपयुञ्जीत ॥

(संग्रहे)

मसूरिकायां कफविसर्पकुष्ठहरं प्रलेपनादिक्रियाविधिमुपदिशन्ति ॥

(पाठशुद्धौ)

अग्निरोहिणीं पक्कां तु मधुरवर्गसिद्धेन सर्पिषा रोपयेत् ।

(संग्रहे)

विदारिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।

(वाहटे)

विदारिकान्त्वनुपशाम्यन्तीमभ्यज्य स्वेदयित्वा विम्लापयेत् । पक्कां शस्त्रेण विदार्य निम्बतिलपटोलकल्केन प्रच्छाद्य बध्नीयात् । क्षीरवृक्षकदरखदिरकषायेण प्रक्षाळनम् । शुद्धां मधुरकषायसंस्कृतेन तैलेन रोपयेत् ॥

(सङ्ग्रहे)

मेदोऽर्बुदक्रियां कुर्यात् सुतरां शर्करार्बुदे ।
प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ॥ १७ ॥
वल्मीकं हस्तपादे च वर्जयेदितरत्पुनः ।
शुद्धस्यास्रे हृते लिम्पेत् सपट्वारग्वधामृतैः ॥ १८ ॥
श्यामाकुलत्थिकामूलदन्तीपललसक्तुभिः ।
पक्के तु दुष्टमांसानि गतीः सर्वाश्च शोधयेत् ॥ १९ ॥
शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ।

(वाहटे)

शुद्धे व्रणे भल्लातकमनःशिलैलाकाळानुसार्यगरुचन्दनैर्निम्बतैलं रोपणार्थं साधयेत् ॥

(सङ्ग्रहे)

शस्त्रेणोत्कृत्य निश्शेषं स्नेहेन कदरं दहेत् ।
निरुद्धमणिवत्कार्यं रुद्धपायौ चिकित्सितम् ॥ २० ॥

च्छिल्पं शोणितावसेकसंशोधनैरुपाचरेत् । व्यपगतोष्माणं चैनमुष्णाम्बुना परिषिच्य यथायोगं शस्त्रेण परिकृत्यापनयेत् ॥
(संग्रहे)

चक्रतैलेनाभ्यज्य सर्जरसचूर्णेनावचूर्ण्य व्रणं बन्धेनोपचरेत् । एवमशक्यमग्निना दहेत् । ततो रसाञ्जनरोचनामनःशिलातेजोवती कल्कैरभ्लपिष्टैः संशोध्य कालेयकागरुहरिद्रारसाञ्जनसिद्धेन तैलेन रोपयेत् । मधुरौषधसिद्धेन वा । कुनखेऽप्येष एव क्रियाविधिः ॥
(पाठशुद्धौ)

अन्तर्धूमं सदुग्धस्य हरितालान्वितस्य तु ।
तण्डुलीयकमूलस्य चूर्णं पूतिनखापहम् ॥ २१ ॥
(चन्द्रटे)

गोमूत्रं सैन्धवोपेतं पादांशघृततैलकम् ।
सुखोष्णमवगाहः स्यान्नखरोगविनाशनम् ॥ २२ ॥
तिन्त्रिणीकरसोपेतं तैलं स्यान्नखरोगनुत् ।
वटक्षीरं मधूच्छिष्टं निशा लाक्षा नखामये ॥ २३ ॥
पारावतस्य शकृता शस्यते परिलेपनम् ।
सदा तैलेन वा लेपः प्रशस्तो नखरोगिणाम् ॥ २४ ॥
हरीतकीं च लाक्षां च मधूच्छिष्टं ससैन्धवम् ।
घृततैलसमायुक्तं स्नेहनं नखरोगनुत् ॥ २५ ॥
(तन्त्रान्तरे)

व्रणपूतिपूयजुष्टं नखविवरं संशु रोपयत्यभया ।
नानाविधैः क्रिमैतैरास्फोतारविकुरूटकक्षीरैः ॥ २६ ॥
(काञ्चीपुरवासी)

दुष्टकर्दमसंस्पर्शात् पादेऽङ्गुल्यन्तरव्रणम् ।
कण्डूपाकक्लेदकोथाढ्यं सपित्तं कुरुते कफम् ॥ २७ ॥
तिन्त्रिणीकफलं दग्ध्वा कोष्णमालेपयेद् व्रणम् ।
रजनीतिलकल्कं च शोधनार्थं प्रशस्यते ॥ २८ ॥
नाळिकेरस्य कोष्णेन तैलेन परिषेचयेत् ।
कर्दमव्रणनाशाय धान्याम्लेनाथवा तथा ॥ २९ ॥
(सिद्धयोगे)

... .... ... चरणावलसे पुनः ।
धान्याम्लसिक्तौ कासीसपटोलीरोचनातिलैः ॥ ३० ॥
सनिम्बपत्रैरालिम्पेत् ... .... ।

(वाहट)

निदिग्धिकारससिद्धेन सर्षपतैलेनाभ्यज्य रोचनकासीसमनःशिलाचूर्णैः प्रतिसारयेत् । दहेतु तिलकालकान्मशांश्च सूर्यकान्तेन क्षारेण यदि वाग्निना ॥

(सङ्ग्रहे)

तद्वदुत्कृत्य शस्त्रेण चर्मकीलजतूमणी ।
लान्छनादित्रये कुर्याद्यथासन्नं सिराव्यधम् ॥ ३१ ॥
लेपयेत् क्षीरपिष्टैश्च क्षीरिवृक्षत्वगङ्कुरैः ।
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ॥ ३२ ॥
लेपः सनवनीता वा श्वेताश्वखुरजा मषी ।
रक्तचन्दनमञ्जिष्ठाकुष्ठलोध्रप्रियङ्गवः ॥ ३३ ॥
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ।
द्वे जीरके कृष्णतिलाः सर्षपाः पयसा सह ॥ ३४ ॥
पिष्टाः कुर्वन्ति वक्त्रेन्दुमपास्तव्यङ्गलाञ्छनम् ।
क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः ॥ ३५ ॥
मसूराः क्षीरपिष्टा वा कृष्णाः[1] शल्मलिकण्टकाः ।
सगुळः कोलमज्जा वा शशासृक् क्षौद्रकल्कितः ॥ ३६ ॥
सप्ताहं मातुलुङ्गस्थं कुष्टं वा मधुनान्वितम् ।
पिष्ट्वा वा छागपयसा सक्षौद्रा मौसलीजटाः ॥ ३७ ॥
गोरस्थि मौसलीमूलयुक्तं वा साज्यमाक्षिकम् ।
जम्ब्वाम्रपल्लवामस्तु द्वे हरिद्रे नवो गुडः ॥ ३८ ॥
लेपः सवर्णकृत् पिष्टं स्वरसेन च तिन्दुकम् ।
यवान् सर्जरसं लोध्रमुशीरं मदनं[2] मधु ॥ ३९ ॥

१. 'तीक्ष्णाः', २. 'चन्दनं' मुद्रिताष्टाङ्गहृदयपाठः.

घृतं गुळं च गोमूत्रे पचेदादर्विलेपनात् ।
तदभ्यङ्गान्निहन्त्याशु नीलिकाव्यङ्गदूषिकान् ॥ ४० ॥
मुखं करोति पद्माभं पादौ पद्मदलोपमौ ।

(वाहटे)

मार्कवस्वरसक्षीरतोयनीष्टानि नावने ॥ ४१ ॥

(तन्त्रान्तरात्)

विशेषेण व्यङ्गेषु असृक्स्रावपूर्वमर्जुनपरिपोटैर्लेपः । अजाक्षारेण वार्द्रडाडिमत्वक् । तेनैव वा बालामलकं गोमूत्रे सप्ताहं स्थितम् ॥

(संग्रहे)

उत्पलपत्रं तगरं प्रियङ्गुकालीयकं बदरमज्जा ।
इदमुद्वर्तनमास्यं करोति शतपत्रसङ्काशम् ॥ ४२ ॥
एभिरेवौषधैः पिष्टैः मुखाभ्यङ्गाय साधयेत् ।
यथादोषर्तुकान् स्नेहान् समधुकाथसंयुतैः ॥ ४३ ॥

(वाहटे)

गोमयस्वरसं सर्पिर्मातुलुङ्गं मनश्शिला ।
मुखवर्णकरं श्रेष्ठं तिलकानां विनाशनम् ॥ ४४ ॥

(चन्द्रटे)

पिष्ट्वा जम्बीरबीजं तु क्षौद्रेण च गुळेन च ।
व्यङ्गानां नाशनं श्रेष्ठं सम्यक् च रुचिरं तथा ॥ ४५ ॥

(चाक्षुषीये)

कुङ्कुमोशीरकालीय ...यष्टयाह्वचन्दनम् ।
न्यग्रोधपादांस्त ...न् पद्मकं पद्मकेसरम् ॥ ४६ ॥
नीलोत्पलं समाञ्जिष्ठं पालिकं सलिलाढके ।
पक्त्वा पादावशेषेण तेन पिष्टैश्च कार्षिकैः ॥ ४७ ॥
लाक्षापत्तङ्गमञ्जिष्ठायष्टिमधुककुङ्कुमैः ।
अजाक्षीरद्विगुणितं तैलस्य कुडवं पचेद् ॥ ४८ ॥
नीलिकापलितव्यङ्गवलीतिलकदूषिकान् ।
हन्ति तन्नस्यमभ्यस्तं मुखोपचयवर्णकृत् ॥ ४९ ॥

---

१. 'मधुकक्काथ २. 'सनीलोत्पलमाञ्जिष्ठ' इति मुद्रिताष्टाङ्गहृदयपाठः.

मञ्जिष्ठाशबराङ्ध्रवस्तुबारिकालाक्षाहरिद्राद्वयम्
नेपालीहरितालकुङ्कुमगदागोरोचनागैरिकम् ।
पत्रं पाण्डुवटस्य चन्दनयुगं कालेयकं पारदं
पत्तङ्गं कनकत्वचं कमलजं बीजं तथा केसरम् ॥ ५० ॥

सिक्थं तुत्थं पद्मकाद्यो वसाज्यं
मज्जा क्षीरं क्षीरिवृक्षाम्बु चाग्नौ ।
सिद्धं सिद्धं व्यङ्गनील्यादिनाशे
वक्त्रे च्छायामैन्दवीं चाशु धत्ते ॥ ५१ ॥

प्रसुप्तौ वातकुष्ठोक्तं कुर्यात् दाहं च वह्निना ।
उत्कोठे कफपित्तोक्तं कोठे सर्वं च कौष्ठिकम् ॥ ५२ ॥
(वाग्भटे)

उत्कोठे पित्तश्लेष्महरो विधिः । सक्षारलवणं च तैलमभ्यङ्गः ।
(संग्रहे)

क्षयं गते श्लेष्मणि पादलग्ने
सञ्चारिणां देहभृतामजस्रम् ।
वातः सपित्तोऽङ्घ्रितलेषु दुष्टो
भेदान् करोत्यप्रतिकारनिघ्नान् ॥ ५३ ॥

वटाङ्कुरारुष्करसिक्थचूत-
निर्याससिन्धूद्भवमर्कदुग्धम् ।
एभिर्महिष्यास्तु घृतं विपक्वं
पादप्रभेदं विनिहन्ति सद्यः ॥ ५४ ॥ ॥

अर्काग्निस्नुहिदुग्धं सिक्थं पटुतैलसंयुतं पिष्टम् ।
पादविलिप्तं सद्यः करोति कमलोपमं चरणम् ॥ ५५ ॥

स्नुह्यर्कदुग्धसैन्धवहयखुरचूर्णं सनवनीतम् ।
न्यस्तं तुम्बफले तत्प्रदारिकां पादयोर्हन्यात् ॥ ५६ ॥
(सिद्धयोगे)

पाददार्यां तु सिरां विद्ध्वा पादौ तु स्नेहस्वेदोपपन्नौ मधूच्छिष्टं घृतवसामज्जादिभिर्यवक्षारमिश्रैरालेपयेत् ।
(पाठशुद्धौ)

---

१. 'कालीयकं' मुद्रिताष्टाङ्गहृदयपाठः.

स्नुह्यर्कच्छागपयोलवणमधूच्छिष्टचूतनिर्यासम् ।
माहिषनवनीतयुतं विपादिकां हन्त्यलाबुस्थम् ॥ ५७ ॥

अतिपक्वशुष्ककेतकदलभसितं घृतपट्टूपेतम् ।
कंसनिघृष्टं लेपात् करोति कमलोपमं चरणम् ॥ ५८ ॥

नश्यति तथा विपादी पुष्पलतानीलमूलभृततैलात् ।
कार्पासभुजगवल्लीपद्मुतिलजैर्न*स्यतो यथा शूलम् ॥ ५९ ॥
(काञ्चीपुरवासी)

पलं पलं समं देयं सर्जनिर्याससर्पिषोः ।
तयोस्तुल्यं गुडं दत्वा सम्यग्दृषदि पेषयेत् ॥ ६० ॥
अर्कदुग्धपलार्धं तु क्षिप्त्वा लेपं प्रयोजयेत् ।
तेनैव लेपितः पादो भवत्यब्जदलप्रभः ॥ ६१ ॥

शुक्तिकाभस्मसिन्धूत्थं सर्पिः सर्जरसं पयः ।
पादयोः स्फुटने लेपस्तिक्तालाबुन्यवस्थितः ॥ ६२ ॥

सक्षीरं तु स्नुहीकाण्डं बिडसौवर्चलान्वितम् ।
अन्तर्धूमं निगन्धन्तु छागं सर्पिस्समन्वितम् ॥ ६३ ॥
त्रिदिनं कटुतुम्बस्थं पादलेपं प्रयोजयेत् ।
अनेन स्फुटितौ पादौ भवेज्जिह्वोपमौ नृणाम् ॥ ६४ ॥

पूरितोपरि सिक्थेन वह्निना तापिता भृशम् ।
असाध्यापि व्रजत्यस्तं क्षिप्रमेव विपादिका ॥ ६५ ॥
(चन्द्रटे)

करञ्जबीजं रजनीकटुत्रयं
समानभागं लवणस्य मृत्तिकाम् ।
दग्ध्वा समालोड्य घृतेन लिम्पेत्
पादौ विनश्येत विपादिका ध्रुवम् ॥ ६६ ॥
(तन्त्रान्तरे)

पादयोः कण्टके विद्धे रविदुग्धेन पूरयेत् ।
उद्धृतेऽनुद्धृते चाशु पतति स्वयमेव तत् ॥ ६७ ॥

* 'नैश्यते विशेषेण' इति सङ्ग्रहे इन्दुव्याख्यायाम् ।

सैन्धवं तत्र संस्थाप्य दहेल्लोहशलाकया ।
कुमार्या वा दलं कोष्णं बन्धनं तत्र कारयेत् ॥ ६८ ॥
लवणोदकसेकं वा सन्धा(नो?नौ)दनबन्धनम् ।
तण्डुलीयकमूलाढ्यं लवणं सपुनर्नवम् ॥ ६९ ॥
पुनर्नवं वा सपटु चिञ्चीं वा स्नेहसंयुताम्[1] ।
भृष्टं प्रबन्धनं कुर्यात् पायसं कोरदूषजम् ॥ ७० ॥
व्रणक्रियां च कुर्वीत पक्वे दुष्टं पुनर्दहेत् ।

(सिद्धयोगे)

शतावरीमूलरसात् फेनेन परिलेपितौ ॥ ७१ ॥
परितापाद्विमुच्येते चरणौ क्षिप्रमेव तु ।
मसूरविदलैः पिष्टैः भृशं शीतेन वारिणा ॥ ७२ ॥
चरणौ लेपयेत्सम्यक् पाददाहप्रशान्तये ।
नवनीतेन संलिप्तौ वह्निना परिपाचितौ ॥ ७३ ॥
मुच्येते चरणौ क्षिप्रं परितापात्सुदारुणात् ।
घृताक्तैः सक्तुभिः श्लक्ष्णैरजाक्षीरसमन्वितैः ॥ ७४ ॥
लेपयेच्चरणौ सद्यः परितापविमुक्तये ।

(चन्द्रटे)

लिम्पेत्सेव्यजलारिष्टैः शतधौतघृतेन वा ॥ ७५ ॥
पाददाहेषु चरणौ सेकं काञ्जिकसर्पिषा ।
कुमारीकृतसेको वा जलूकाभिर्हरेदसृक् ॥ ॥ ७६ ॥

(तन्त्रान्तरे)

लिप्ता सर्षपकल्केन स्वेदिता चाश्मना भृशम् ।
पादपार्ष्ण्योर्व्यथा तीव्रा पक्षार्धेन प्रणश्यति ॥ ७७ ॥
अगस्तिपुष्पचूर्णेन माहिषं श्रपयेत्पयः ।
तदुत्थनवनीताक्तो देहस्य स्फुटितं जयेत् ॥ ७८ ॥
हरीतकीं तु सम्पिष्य गात्रमुद्वर्तयेन्नरः ।
पश्चात् स्नानं प्रकुर्वीत देहस्वेदः प्रशाम्यति ॥ ७९ ॥

(चन्द्रटे)

1. 'वायसीं वा पटुयुतां चिञ्चीं वा स्नेहसंयुताम्' इति पाठान्तरम् ।

गोमूत्रेण समालोड्य माहिषं शकृदुत्तमम् ।
तेनैव लेपनं कुर्याद्देहदौर्गन्ध्यनाशनम् ॥ ॥ ८० ॥

शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोहैरथ चन्दनाभ्यां
शरीरदौर्गन्ध्यहरः प्रलेपः ॥ ८१ ॥

तिन्त्रिणीस्वरसे तैलप्रस्थं सम्यक् पचेद्भिषक् ।
अत्र कल्कार्थमेतानि वातघ्नानि च योजयेत् ॥ ८२ ॥
शिग्रुसैन्धवदुर्गन्धा लशुनं च साचित्रकम् ।
एतच्छरीरदौर्गन्ध्यकण्डूतिस्वेदनाशनम् ॥ ८३ ॥
तिन्त्रिणीकदलोद्भूतं स्वरसं लेपयेन्नरः ।
बहुशो देहदौर्गन्ध्यं कण्डूकोठविनाशनम् ॥ ८४ ॥
क्षौद्रेण पौष्करं रेणुमेकविंशतिवासरान् ।
लिहतां देहदौर्गन्ध्यं नश्येन्निःशेषमाङ्गिनाम् ॥ ८५ ॥
द्विनिशातिलरुग्राजीकल्कोद्वर्तितविग्रहः ।
यः स्नाति तस्य देहः स्यात्सुगन्धिर्भास्करच्छविः ॥ ८६ ॥
प्रपीतं जलमत्यर्थं कुक्षिमाध्मातयत्यपि ।
गात्राणां सीदनं चापि ग्रीवास्तम्भं तथैव च ॥ ८७ ॥
कुरुते चित्तसंमोहं मूर्च्छां मरणमेव वा ।
संज्ञावन्तं तथा प्राज्ञ आरभेत चिकित्सितुम् ॥ ८८ ॥
(तन्त्रान्तरात्)

(अप्सु मग्नस्य)

अपां पूर्णं विधुनुयादवाक्छिरसमायतम् ।
वामयेच्चाप्सुखं भस्मराशौ वा निखनेच्च तम् ॥ ८९ ॥
(वाहटे)

(वैद्युताग्निदग्धस्य)

वैद्युताग्निदग्धस्य परिषेकालेपनानि चाम्ललवणप्रायाणि तैलयुक्तानि कुर्वीत । अग्निना च तापयेत् । स्वेददग्धस्य मधुरशीत स्निग्धमाहारं परिषेकं च कुर्वीत ।
(तन्त्रान्तरे)

वैद्युताग्निदग्धस्यानुपगतमनसो विकलेन्द्रियस्य प्रकुर्वीत आग्नेयौपधप्रदेहपरिषेकालेपनानि सर्पिःक्षीरेक्षुरसतण्डुलोदकमिश्राणि। अग्नितापदग्धस्याम्लतैलघृतवसापरिषेकमभीक्ष्णं कुर्वीत ॥

(सारसंक्षेपे)

इति क्षुद्ररोगचिकित्सा ।

---

## अथ गुह्यरोग(निदान)चिकित्सा ।

स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।
दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम् ॥ १ ॥
अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम् ।
दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥ २ ॥
विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।
मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः ॥ ३ ॥
वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः ।
दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥ ४ ॥
जनयन्त्युपदंशादीनुपदंशोऽत्र पञ्चधा ।

(उपदंशः ।)

मेढ्रशोफ उपदंशाख्यः । तत्र वातजे चित्रा रुजः स्तम्भस्त्वक्पोटश्च । पित्तजः पक्वोदुम्बराभः सज्वरश्च । श्लेष्मजः कठिनः स्निग्धशीतः कण्डूयुतश्च । रक्तजः सकृष्णस्फोटास्रस्रुतिर्ज्वरः । सर्वजः सर्वलिङ्गो मुष्कशोफतीव्रव्यथाशुपाकदरणकृमियुतश्च ।

याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ॥ ५ ॥

(योन्यर्शः ।)

गुह्यासृङ्मांसगैर्मलैरन्तर्बहिर्वा मेढ्रस्य मांसांकुराः कण्डूलाः पिच्छिलास्रस्रवा जायन्ते ते अर्शांसि । तान्युपेक्षया पुंस्त्वं घ्नन्ति । तद्वद्योनौ च स्युः । तानि छत्रनिभान्युपेक्षया चार्त्तवं घ्नन्ति ।

(पिटकाः)

गुह्यस्यान्तर्बहिर्वा कफरक्ताभ्यां सर्षपमानसंस्थानाः पिटकाः नाम्ना सर्षपिकाख्या भवन्ति । ताभ्यां बहवो दीर्घाः सरुजा रोमहर्षणाः पिटका मध्यतो दीर्यन्ते च सोऽवमन्थः ।

कुम्भीका रक्तपित्तोत्था जांबवास्थिनिभाशुजाः ।

अलजीं प्रमेहपिटकापरीतालजीवद्विद्यात् । पित्तरक्तान्माषमुद्गाभा पिटका स्यादुत्तमाख्या । पिटकाचिता पुष्करकर्णिकाभा पिटका पुष्करिका नाम ।

पाणिभ्यां भृशसंव्यूढे संव्यूढपिटका भवेत् ॥ ६ ॥

मृदितं सद्वातकोपात्संरब्धं मृदिताख्यम् । वाताद्विषमा कठिना भुग्ना पिटकाष्ठीलिकाख्या । वातान्मर्दनादिदुष्टान्मेढ्रचर्म निवर्तते सरुग्दाहं च । कदाचित्पाकं च याति । तच्चर्म मणेरधः प्रलम्ब पिण्डितं ग्रथितं निवृत्तसंज्ञम् ।

दुरूढं स्फुटितश्चर्म निर्दिष्टमवपाटिका ।

(निरुद्धमणिः)

वातदूषितेन मणिसक्तेन चर्मणा स्रोतोरोधान्मूत्रस्य मन्दनिर्गमनं मणेर्विकासरोधश्च स्यात् । स रोगो निरुद्धमणिर्नाम ।

लिङ्गं शूकैरिवाकीर्णं ग्रथिताख्यं कफोद्भवम् ॥ ७ ॥

शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया ।

वातरक्ताद् बह्वणुमुखच्छिद्राचितं लिङ्गं शतपोनकाख्यम् । पित्तरक्तजः सज्वरदाहस्त्वक्पाकस्तदाख्यः । मांसपाकस्सर्वजः सर्ववेदनो मांसशातनः । रक्तार्बुदे मेहनं कृष्णरक्तस्फोटपिटकाचितमुग्ररुजं स्यात् ।

मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः ॥ ८ ॥

निचयात्पक्वं मेढ्रमांसं कृष्णं विशीर्यते स तिलकालकाख्यः ।

मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान् ।

चतुरो वर्जयेदेषां शेषाञ्छीघ्रमुपाचरेत् ॥ ९ ॥

(उपदंशचिकित्सा)

उपदंशेषूत्पन्नमात्रेषु पाकपरिहारार्थं मेढ्रमध्ये सिरां विध्येत्। जलौकसो वा योजयेत् ॥

(संग्रहे)

शीतां कुर्यात्क्रियां शुद्धिं विरेकेण विशेषतः ।

(वाहटे)

एवं सद्य एव रुक्छोफतोदरागसंरम्भाः निवर्त्तन्ते ।

(संग्रहे)

तिलकल्कघृतक्षौद्रैर्लेपः पक्वे तु पाटिते ॥ १० ॥
जम्बाम्रसुमनोनीपश्वेतकांबोजिकांकुरान् ।
सल्लकीबदरीबिल्वपलाशतिनिशोद्भवाः ॥ ११ ॥
त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले ।
स क्वाथः क्षाळनं तेन पक्वं तैलं च रोपणम् ॥ १२ ॥
तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः ।
हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ॥ १३ ॥
लेपः क्षौद्रयुतैस्सूक्ष्मैरुपदंशव्रणापहः ।
कपाले त्रिफला दग्धा सघृता रोपणं परम् ॥ १४ ॥
सामान्यं साधनमिदं प्रतिदोषं तु शोफवत् ।

(वाहटे)

अपक्वं बृहतीफलेन पलाण्डुना वा स्वेदयेत् ।

(काञ्चीपुरवासी)

श्वेतकांबोजिकाङ्कुरकल्कं विपक्वं तैलं व्रणरोपणम् । काञ्चिके नालिकेरशलाटुवल्कलकल्कविपक्वं तैलं व्रणहितं च ॥

(वृद्ध-)

आदारिपत्रकल्कं स्यादुपदंशप्रशान्तये ॥ १५ ॥

(अष्टव)

महातिक्तं पिबेत्सर्पिरुपदंशनिपीडितः ।
पुण्डरीपत्रजं तोयं सैन्धवं तैलसंयुतम् ॥ १६ ॥
घर्षयेत्ताम्रपात्रस्य पृष्ठे कांस्येन भूरिशः ।

(तन्त्रान्तरे)

उपदंशव्रणानां तु रोपणी या व्रणक्रिया ॥ १७ ॥

त्रिफलायाः कषायेण भृंगराजरसेन वा ।
व्रणप्रक्षालनं कुर्यादुपदंशप्रशान्तये ॥ १८ ॥

सृगाललिण्डस्य मषी घृताक्ता
लिप्ता निहन्याद् ध्वजयोनिरोगम् ॥ १९ ॥

(योगरत्न)

न च याति यथा पाकं प्रयतेत तथा भिषक् ।
पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः ॥ २० ॥

(वाहटे)

करवीरस्य मूलेन परिपिष्टेन वारिणा ।
असाध्यानि व्रजन्त्यूर्ध्वं लिङ्गोत्थानि प्रलेपनात् ॥ २१ ॥

सम्यक् सपत्रमूलेन मार्कवेण प्रयत्नतः ।
लेपितो वारिपिष्टेन लिङ्गव्याधिः प्रशाम्यति ॥ २२ ॥

दार्वीसुरसयष्टयाह्वगृहधूमनिशान्वितम् ।
तैलमभ्यञ्जनात्पक्वं मेढ्ररोगं निवारयेत् ॥ २३ ॥

(वन्दे)

(अर्श आदीनां चिकित्सा)

अर्शसां छिन्नदग्धानां क्रिया कार्योपदंशवत् ।
सर्षपा लिखिताः सूक्ष्मैः कषायैरवचूर्णयेत् ॥ २४ ॥

तैरेवाभ्यंजनं तैलं साधयेद् व्रणरोपणम् ।
क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः ॥ २५ ॥

कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुकत्रिफलालोध्रैः लेपस्तैलं च रोपणम् ॥ २६ ॥

अलज्यां स्रुतरक्तायां अयमेव क्रियाक्रमः ।
उत्तमाख्यां तु पिटकां सञ्छिद्य बडिशोद्धृताम् ॥ २७ ॥

कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ।
क्रमः पित्तविसर्पोक्तः पुष्करव्यूढयोर्हितः ॥ २८ ॥

त्वक्पाके स्पर्शहान्यां च सेचयेन्मृदितं पुनः ।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ २९ ॥

अष्ठीलिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।
निवृत्तं सर्पिषाभ्यज्य स्वेदयित्वोपनाहयेत् ॥ ३० ॥

त्रिरात्रं पञ्चरात्रं वा सुस्निग्धैः साल्वलादिभिः ।
स्वेदयित्वा ततो भूयः स्निग्धं चर्म समानयेत् ॥ ३१ ॥

मणिं प्रपीड्य शनकैः प्रविष्टे चोपनाहनम् ।
मणौ पुनः पुनः स्निग्धं भोजनं चास्य शस्यते ॥ ३२ ॥

अयमेव प्रयोज्यः स्यादवपाट्यामपि क्रमः ।
नालीमुभयतो द्वारां निरुद्धे जतुना कृताम् ॥ ३३ ॥

स्नेहाक्तां स्रोतसि न्यस्य सिञ्चेत्स्नेहैश्चलापहैः ।
त्र्यहात्त्र्यहात्स्थूलतरां न्यस्य नाडीं विवर्द्धयेत् ॥ ३४ ॥

स्रोतोद्वारमसिद्धौ तु विद्वान्छस्त्रेण पाटयेत् ।
सीवनीं वर्जयन्युञ्ज्यात्सद्यःक्षतविधिं ततः ॥ ३५ ॥

ग्रथितं स्वेदितं नाड्या स्निग्धोष्णैरुपनाहयेत् ।
लिम्पेत्कषायैस्सक्षौद्रैर्लिखित्वा शतपोनकम् ॥ ३६ ॥

रक्तविद्रधिवत्कार्या चिकित्सा शोणितार्बुदे ।
व्रणोपचारं सर्वेषु यथावस्थं च योजयेत् ॥ ३७ ॥

(योनिव्यापदां निदानम् )

विंशतिर्व्यापदो योनौ जायन्ते दुष्टभोजनात् ।
विषमस्थांगशयनभृशमैथुनसेवनैः ॥ ३८ ॥

दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः ।

तत्र योनौ क्रुद्धोऽनिलस्तोदायामसुप्तता स्तम्भान् फेनिलाल्पार्त्त-वसुतिवंक्षणाक्षिव्यथां क्रमाद् गुल्मं च कुर्यात् । सा व्यापद्वातिकी नाम । सैवातिव्यवायात् सशोफातिचरणा नाम । अतिबालाया मैथुनाद्वायुर्वंक्षणादिरुजां कुर्वन्योनिं दूषयेत् । सा प्राक्चरणा नाम ॥

वेगरोधेन कुपितानिलपीडिता योनिः फेनिलं आर्तवं कृच्छ्रादुदावर्तं विमुञ्चति । इयं उदावर्ताख्या । दुष्टार्तवोद्भवं जातं सुतं यदानिलो हन्ति सा जातघ्नी । अति भुक्त्वा सुरते विषमं स्थिताया वायुर्योनिमुखं तीव्ररुजं वक्रयेत् सान्तर्मुखी नाम ।

मातुर्वातलाहारसेवनात्कुपितो वायुः योनिमणुद्वारां कुर्यात्सा सूचीमुखी । ऋतौ वेगरोधाद्वायुर्विण्मूत्रग्रहं योनिशोषं अतिरुजं च कुर्यात् सा शुष्काख्या । षडहात्सप्तरात्राद्वा वायुना गर्भाशयाच्छुक्रं वमति सा व्यापद्वामिनी नाम ॥

योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः ॥ ३९ ॥

नृद्वेषिण्यस्तनी च स्यात्षण्डसंज्ञानुपक्रमा ।

दुष्टो वायुर्योनिमुखगर्भाशयौ विष्टभ्य योनिं विवृतां स्रस्तामुत्सन्नमांसां महारुजं कुर्यात् । सा महायोनिः । पित्तं वृद्धं योनिमाश्रित्य तां सदाहपाकपूतिगण्डज्वरामत्युष्णभूरिपीतासितार्तवां कुर्यात्सा पैत्तिकी । सैव रक्तातिस्रुते रक्तयोन्याख्या । कफो वृद्धः कण्डुलां शीतामवेदनां पाण्डुपिच्छिलस्रुतिं योनिं कुर्यात् । सा श्लैष्मिकी । वातपित्ताभ्यां रजःक्षयात्सदाहकार्श्या व्यापल्लोहितक्षयाख्या । पित्तलाया मैथुने क्षवादिरोधात् सपित्तो वायुर्योनिं स्पर्शासहां नीलपीतास्रस्रावां सातिसारारोचककुक्षिगौरवां श्रोण्यादिरुजाज्वरयुतां कुर्यात् । सा परिप्लुता । वातकफाच्छ्वेतपिच्छिलस्रावा उपप्लुताख्या । अधावनाज्जातजन्तुः कण्डुला अत एवातिरतिप्रिया विप्लुताख्या । वेगोदीरणाद्वायुः सकफरक्तो योनौ रजोमार्गनिरोधिनीं कर्णिकां कुर्यात् । सा कर्णिनी । सर्वजा व्यापत् सर्वलिङ्गा ॥

(योनिव्यापच्चिकित्सा)

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ॥ ४० ॥
स्नेहनस्वेदवस्त्यादि वातजासु विशेषतः ।
नहि वातादृते योनिर्वनितानां प्रदुष्यति ॥ ४१ ॥
अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम् ।
पाययेत बलातैलं मिश्रकं सुकुमारकम् ॥ ४२ ॥

(वाहटे)

स्वेदः पायससंघातैः सतैलपिचुधारणम् ।
स्नेहसेकोत्तरोवस्तिर्वातयोन्यां प्रशस्यते ॥ ४३ ॥

(सिद्धसारे)

स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत्समाम् ।
पाणिना नमयेज्जिह्मां संवृतां मेथयेत् पुनः ॥ ४४ ॥

प्रवेशयेन्निस्सृतां च विवृतां परिवर्तयेत् ।
स्थानापवृत्ता योनिर्हि शल्यभूताः स्त्रियो मताः ॥ ४५ ॥

कर्मभिर्वमनाद्यैश्च मृदुभिर्योजयेत्स्त्रियम् ।
सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ॥ ४६ ॥

बस्त्यभ्यंगपरीषेकप्रलेपपिचुधारणम् ।

(वाहटे)

सैरीयत्रिफला भार्ङ्गी रास्ना च्छिन्ना शतावरी ।
निशे पुनर्नवं मेदे कार्षिकं प्रस्थमाज्यतः ॥ ४७ ॥

पक्वं क्षीरेण तत्पीतं योनिवातविकारनुत् ।
गर्भसंस्थापनं मुख्यं पित्तयोन्यां च शस्यते ॥ ४८ ॥

(लिङ्गसारे)

गळूचीमालतीरास्ना बलामधुकचित्रकैः ।
निदिग्धिकादेवदारुयूथिकाभिश्च कार्षिकैः ॥ ४९ ॥

तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत् ।
वातार्तायाः पिचुं दद्यात् सर्वदा प्रणयेच्च तम् ॥ ५० ॥

(सङ्गहे)

वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ।
अजमोजायवक्षारशर्कराचित्रकान्वितम् ॥ ५१ ॥

पिष्ट्वा प्रसन्नयालोडय खादेत्तद् घृतभर्जितम् ।
योनिर्वातार्तहृद्रोगगुल्माशोविनिवृत्तये ॥ ५२ ॥

(वाहटे)

बृहतीनतदारुसिन्धुकुष्ठैः
शृततैलं पिचुना धृतं च योन्याम् ।
वृषगोक्षुररास्नकैः शृतं
श्रितदुग्धं च निहन्ति योनिशूलम् ॥ ५३ ॥

(योगामृते)

---

१. 'पाणिनोन्नमयेत्', २. 'व्यधयेत्', ३. 'भवेत्', ४. 'प्राभ्यां'

इति मुद्रिताष्टाङ्गहृदयपाठः

सौवर्चलोपकुञ्चिकापिप्पलीर्वा मद्येनावन्तिसोमेन वा दन्ती-त्रिफलागुडूचीक्वाथः सुखोष्णो योनेः परिषेकः ॥

(संग्रहे)

पिबेद्वा दर्भनिर्यूहं सिद्धं गोक्षुरकेण वा ।
पयः सशर्करं शीतं योनिशूलनिपीडिता ॥ ५४ ॥

(हारीतः)

बिल्वमर्कस्य मूलं च पिष्ट्वा मद्येन पाययेत् ।
तेन योनिगतं शूलमाशु शाम्यति योषितः ॥ ५५ ॥

(अत्रव-)

एरण्डतैलसम्मिश्रं धान्यमुस्तामहौषधैः ।
सोशीरैः साधितं क्षीरं शर्करापरिमिश्रितम् ॥ ५६ ॥
मधुमात्रासमायुक्तं योनिशूलनिषूदनम् ।

(बिन्दुसारे)

योनिविशोधनीवर्तिः ।

शताह्वाकुष्ठमरिचपिप्पलीमाषसैन्धवैः ।
वर्तिस्तुल्यकराङ्गुष्ठा धार्या योनिविशोधनी ॥ ५७ ॥

(हारिचन्द्रे)

योनिशूलकाथम् ।

वृषोपकुञ्चीवृषकोपकुल्या-
व्योषणग्रन्थिकनागराणाम् ।
कल्कः सुखोष्णेन जलेन पीतः
शूलेषु योनिप्रभवेषु शस्तः ॥ ५८ ॥

(तन्त्रान्तरे)

पित्तयोन्यां स्नेहनादिक्रिया ।

पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ॥ ५९ ॥

शतावरीघृतम् ।

शतावरीमूलतुलाचतुष्कात्क्षुण्णपीडितात् ।
रसेन क्षीरतुल्येन पाचयेत घृताढकम् ॥ ६० ॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।
पिष्टैः प्रियालैश्चाक्षांशैर्द्विबलामधुकान्वितैः ॥ ६१ ॥

सिद्धशीते तु मधुना पिप्पल्याश्च पलाष्टकम् ।
शर्करायाः दशपलं क्षिपेल्लिह्यात्पिचुं ततः ॥ ६२ ॥
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम् ।
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम् ॥ ६३ ॥
कामिलां वातरुधिरं विसर्पं हृच्छिरोग्रहम् ।
अपस्मारार्दितायाममदोन्मादांश्च नाशयेत् ॥ ६४ ॥
एवमेव पयः सर्पिर्जीवनीयोपसाधितम् ।
गर्भदं पित्तजानां च नारीणां परमं हितम् ॥ ६५ ॥

बलाघृतम् ।

बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत् ।
क्षीरे चतुर्गुणे कृष्णाकाकनासासितान्वितैः ॥ ६६ ॥
जीवन्तीक्षीरकाकोलीस्थिरावीरर्द्धिजीवकैः ।
पयस्याश्रावणीमुद्गपीलुमाषाख्यपर्णिभिः ॥ ६७ ॥
वातपित्तामयान् हत्वा पानाद् गर्भं दधाति तत् ।

रक्तयोन्यामौषधम् ।

रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्य च ॥ ६८ ॥
यथादोषोदयं युञ्ज्याद्रक्तस्थापनमौषधम् ।
(वाग्भटे)
चूर्णं पुष्यानुगं योज्यं योनिरोगविनाशनम् ॥ ६९ ॥
(तन्त्रान्तरे)

श्लेष्मदुष्टायां योन्याम् ।

योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ।
यवाभयारिष्टं सीधुं तैलं च योजयेत् ॥ ७० ॥
पिप्पल्ययोरजःपथ्याप्रयोगांश्च समाक्षिकान् ।
आरग्वधादिवर्गस्य कषायः परिषेचने ॥ ७१ ॥
दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा ।
चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणः ॥ ७२ ॥

१. 'रोगाणां', २. 'जीरकैः' इति मुद्रिताष्टाङ्गहृदयपाठः.

स्नेहनस्वेदवस्त्यादि वातलास्वनिलापहः ।
कारयेद्रक्तपित्तघ्नीं शीतां पित्तकृतासु च ॥ ७३ ॥
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्यथाबलम् ।
सन्निपाते विमिश्रं तु संसृष्टासु च कारयेत् ॥ ७४ ॥
(वङ्गदे)

इति योगरत्नसमुच्चये गुदरोगचिकित्साधिकारो
अष्टाविंशतितमः ।

---

## अथ विषचिकित्साधिकारः ।

विषोत्पत्तिमाह ।

मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ।
जातः प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ १ ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरिकेशोऽनलेक्षणः ।
जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥ २ ॥
हुङ्कृतो ब्रह्मणा मूर्ती ततः स्थावरजङ्गमे ।
सोऽप्यतिष्ठन्निजं रूपमुज्झित्वा वञ्चनात्मकम् ॥ ३ ॥
स्थिरमत्युल्बणं वीर्यं यत्कन्देषु प्रतिष्ठितम् ।
सर्पलूतादिदंष्ट्रासु दारुणं जङ्गमं विषम् ॥ ४ ॥
स्थावरं जङ्गमं चेति विषं प्रोक्तमकृत्रिमम् ।
कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ॥ ५ ॥
हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ।
शोफपाण्डूदरोन्माददुर्नामादीन् करोति वा ॥ ६ ॥
तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकरं लघु ।
विकाषि सूक्ष्ममव्यक्तरसं विषमपाकि च ॥ ७ ॥
ओजसो विपरीतं तत्तीक्ष्णाद्यैरन्वितं गुणैः ।
वातपित्तोत्तरं नृणां सद्यो हरति जीवितम् ॥ ८ ॥

विषं हि देहं संप्राप्य प्राग्दूषयति शोणितम् ।
कफपित्तानिलांश्चानु समं दोषान् सहाशयान् ॥ ९ ॥
ततो हृदयमास्थाय देहोच्छेदाय कल्पते ।
स्थावरस्योपयुक्तस्य वेगे पूर्वे प्रजायते ॥ १० ॥
जिह्वायाः श्यावता स्तम्भो मूर्छा त्रासः क्लमो वमिः ।
द्वितीये वेपथुः स्वेदो दाहः कण्ठे च वेदना ॥ ११ ॥
तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ।
चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ १२ ॥
कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे ।
सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ १३ ॥
षष्ठे संज्ञाप्रणाशश्च सुभृशं चातिसार्यते ।
स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे ॥ १४ ॥

विषवेगानुरोधेन चिकित्सा ।

प्रथमे विषवेगे तु वान्तं शीताम्बुसेचितम् ।
सर्पिर्मधुभ्यां संयुक्तमगदं पाययेद् द्रुतम् ॥ १५ ॥
द्वितीये पूर्ववद्वान्तं विरिक्तं चानुपाययेत् ।
तृतीयेऽगदपानं तु हितं नस्यं तथाञ्जनम् ॥ १६ ॥
चतुर्थे स्नेहसंयुक्तमगदं प्रतियोजयेत् ।
पञ्चमे मधुककाथमाक्षिकाभ्यां युतं हितम् ॥ १७ ॥
षष्ठेऽतिसारवत्सिद्धिरवपीडस्तु सप्तमे ।
अञ्जनं तगरं कुष्ठं हरितालं मनश्शिला ॥ १८ ॥
फलिनी त्रिकटुः स्पृक्का नागपुष्पं सकेसरम् ।
हरेणु मधुकं मांसी रोचना काकमालिका ॥ १९ ॥
श्रीवेष्टकं सर्जरसः शताह्वा कुंकुमं बला ।
तमालपत्रतालीसभूर्जोशीरे निशाद्वयम् ॥ २० ॥
कन्योपवासिनी स्नाता शुक्लवासा मधुद्रुतैः ।
द्विजानभ्यर्च्य तैः पुष्ये कल्पयेदगदोत्तमम् ॥ २१ ॥

वैद्यश्चात्र ततो मन्त्रं प्रयतात्मा पठेदिमम् ।

चन्द्रोदयो नामागदः ।

नमः पुरुषसिंहाय नमो नारायणाय च ॥ २२ ॥
यथासौ नाभिजानाति रणे कृष्णपराजयम् ।
एतेन सत्यवाक्येन अगदो मे प्रसिद्ध्यतु ॥ २३ ॥

नमो वैडूर्यमाते हुलुहुलु रक्ष मां सर्वविषेभ्यः । गौरि गान्धारि चण्डालि मातङ्गि स्वाहा । पिष्टे च द्वितीयो मन्त्रः । ओं हरिमायि स्वाहा ।

अक्षेपविषवेतालग्रहकार्मणपाप्मसु ।
मारकव्याधिदुर्भिक्षयुद्धाशनिभयेषु च ॥ २४ ॥
पाननस्याञ्जनालेपमणिबन्धादियोजितः ।
एष चन्द्रोदयो नाम शान्तिः स्वस्त्ययनं परम् ॥ २५ ॥

(वाहटे)

वासवो वृत्रमवधीत् समारब्धोऽमुना किल ।
विषपीतस्य समधु वमनं गोमयाद्रसः ॥ २६ ॥
हृदयावरणं सर्पिरगदांश्च प्रयोजयेत् ।
रजनी सैन्धवक्षौद्रसंयुक्तं घृतमुत्तमम् ॥ २७ ॥
पानं मूलविषार्तस्य दिग्धविद्धस्य चेष्यते ।

(सिद्धसारे)

भौमानां सर्पाणां त्रैविध्यम् ।

दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगाः ॥ २८ ॥
त्रिधा समासतो भौमा भिद्यन्ते ते त्वनेकधा ।
व्यासतो योनिभेदेन नोच्यतेऽनुपयोगतः ॥ २९ ॥
विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् ।

ब्राह्मणादीनां सर्पाणां सञ्चारकालादि ।

पूर्वमध्यापराह्णेषु चरन्ति ब्राह्मणादयः ॥ ३० ॥

---

१. 'तदा' मुद्रिताष्टाङ्गहृदयपाठः

अस्तं गते रवौ शूद्रा, दशन्ति ब्राह्मणाः पुरः ।
संस्थिता दक्षिणे पार्श्वे क्षत्रिया वामतो विशः ॥ ३१ ॥
शूद्रास्तु पृष्ठतो विप्राद्यीनूच्यनिलपूर्वकान् ।
कोपयन्ति क्रमाद्दोषांस्त्रीस्त्रयः क्षत्रियादयः ॥ ३२ ॥

सर्पाणां दंशहेतुः ।

आहारार्थं भयात्पादस्पर्शादतिविषात्क्रुधः ।
पापवृत्ततया वैरादेवर्षियमचोदनात् ॥ ३३ ॥
दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ।

दंशलक्षणम् ।

यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते ॥ ३४ ॥
न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत् ।
एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ॥ ३५ ॥
दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ।
मांसच्छेदादविच्छिन्नरक्तवाहीनि दंष्टकम् ॥ ३६ ॥
दंष्ट्रापदानि चत्वारि तद्वद्ध्मानपातितम् ।
निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् ॥ ३७ ॥

जलाप्लुतादिस्वरूपाः सर्पाः अल्पविषाः ।

जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ।
शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥ ३८ ॥
तूर्णं देशान्तरायाता विमुक्तविषकञ्चुकाः ।
कुशौषधीकण्टकवद्ये चरन्ति च काननम् ॥ ३९ ॥
देशं च दिव्याद्व्युषितं सर्पास्तेऽल्पविषा मताः ।

श्मशानादिषु दष्टं त्यजेदिति ।

श्मशानचितिचैत्यादौ पञ्चमीपक्षसन्धिषु ॥ ४० ॥
अष्टमी नवमी सन्ध्या मध्यरात्रं दिनेषु च ।
याम्याग्नेयमघाश्लेषा विशाखापूर्वनैर्ऋते ॥ ४१ ॥

१. 'दंष्ट्रकं' इति पाठान्तरं दृश्यते ।

नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ।

असाध्यलक्षणम् ।

दष्टमात्रेऽसितास्याक्षः शीर्यमाणतनूरुहः ॥ ४२ ॥
स्तब्धजिह्वो मुहुर्मूर्च्छञ्छीतोच्छ्वासो न जीवति ।
हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः ॥ ४३ ॥
जायन्ते युगपद्यस्य स हृच्छूली न जीवति ।
फेनं वमति निःसंज्ञः श्यावपादकराननः ॥ ४४ ॥
नासावसादो भङ्गोऽङ्गे विड्भेदः श्लथसन्धिता ।
विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ॥ ४५ ॥
भवन्त्येतानि लिङ्गानि सम्प्राप्ते जीवितक्षये ।

नष्टजीवलक्षणम् ।

न नस्यैश्चेतना तीक्ष्णैर्न क्षतात्क्षतजागमः ॥ ४६ ॥
दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम् ।

सविषाविषदंशलक्षणम् ।

तुद्यते सविषो दंशः कण्डूशोफरुजान्वितः ॥ ४७ ॥
दह्यते ग्रथितः किञ्चिद्विपरीतस्तु निर्विषः ।

देहे विषस्य व्याप्तिः ।

मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ ४८ ॥
देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयत् ।

शीघ्रं विषस्य प्रतीकारे हेतुः ।

एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम् ॥ ४९ ॥
कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ।

सद्यः करणीयानि ।

दंशं मण्डलिनां मुक्त्वा पित्तलंत्वादथापरम् ॥ ५० ॥

---

१. 'दष्टमात्रः सि', २. 'शिरोरुहः', ३. 'विक्लेदः', ४. 'रूपाणि' इति मुद्रिताष्टाङ्गहृदयपाठः.

प्रतप्तैर्हेमलोष्टाद्यैर्दहेद्दाशूल्मुकेन वा ।
करोति भस्मसात्सद्यो वह्निः किं नाम न क्षणात् ॥ ५१ ॥

दष्टमात्रो दशेदाशु तमेव पवनाशिनम् ।
लोष्टं महीं वा दशनैश्छित्त्वा चानुत्ससंभ्रमम् ॥ ५२ ॥

निष्ठीवेन समालिम्पेद् दंशं कर्णमलेन वा ।

(वाहटे)

आचूषणछेदनदाहबन्धास्रावांश्च कुर्यादिह दष्टमात्रे ॥ ५३ ॥

सर्वैरेवादितः सर्वे शाखादष्टस्य देहिनः ।
यत्नेनोपरि बध्नीयाद्दंशात्तु चतुरङ्गुले ॥ ५४ ॥

शकृद्रससमं सर्पिः पाययेत्तु गवां बुधः ।
हृदयावरणं नाम जीवरक्षाकरं परम् ॥ ५५ ॥

मरिचं कुडवं पिष्ट्वा घृतस्य कुडवं पिबेत् ।
हृदयावरणं नाम जीवरक्षाकरं परम् ॥ ५६ ॥

(तन्त्रान्तरे)

अण्वपि विषं रक्तं प्राप्य वर्धतेति ।

विषं नाहेयमप्राप्य रक्तं दूषयते वपुः ।
रक्तमण्वपि तु प्राप्तं वर्धते तैलमम्बुवत् ॥ ५७ ॥

विषे स्थानान्तरप्राप्ते सिरामोक्षादयः ।

विषे प्रविसृते विध्येत् सिरां सा परमा क्रिया ।
रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम् ॥ ५८ ॥

सिरास्वदृश्यमानासु योज्या शृङ्गजलौकसः ।
चन्दनोशीरयुक्तेन सलिलेन च सेचनम् ॥ ५९ ॥

(वाहटे)

अदिनादौ करञ्जादित्वचं दष्टपरीक्षणम् ।
फणिनो मधुरे तिक्ते राजिमान्मण्डलीकृतौ? ॥ ६० ॥

सामान्यचिकित्सा ।

सिन्दुवारकमूलानि रसेन स्वेन पेषयेत् ।

मधुयुक्तोऽयमगदः पानं दर्वीकृतां विषे ॥ ६१ ॥

गोक्षीरेणैव संपिष्य वज्रवल्लीमतन्द्रितः ।
तेनैव पाययेत्सर्वं विषं मण्डलिनां हरेत् ॥ ६२ ॥

दधि नवनीतं क्षौद्रं सिन्धूत्थं कटुत्रयान्वितं पीतम् ।
मण्डलिविषेण भवं रक्तोद्गारं च नाशयति ॥ ६३ ॥

करञ्जस्य समाहृत्य मूलं पत्रं फलं त्वचम् ।
विषे मण्डलिनां प्राज्ञो भिषक् सर्वत्र पाययेत् ॥ ६४ ॥

अटवीकारवल्यास्तु कन्दं क्षीरेण पाययेत् ।
शारिबायास्तथा मूत्रैर्नस्याद्यैर्हन्ति राजिलम् ॥ ६५ ॥

विषे सर्वत्र योज्या स्याच्छ्वेता च गिरिकर्णिका ।
अग्रशो वा समूलं वा संपिष्टोत्तरकर्णिकम् ॥ ६६ ॥

पानलेपननस्याद्यैर्हन्तिसर्वाविषाणि तु ।
सर्पादिविषनाशाय टङ्कणस्य रजोऽम्भसा ॥ ६७ ॥

पानालेपननस्याद्यै रहस्यमिदमुत्तमम् ।
...ध्वाङ्क्षमध्ये सुषिरं विधाय
तन्मध्यमापूर्य च रामठेन ।
एतद्रसा .... .... .... .... ....
... ... ... ... ... ... ... ॥ ६८ ॥

.... ... ... ... ... जिघ्रेत् ।
सुखी भवेद्वासुकिनापि दष्टः ॥ ६९ ॥

अवचूर्ण्य वचाहिङ्गुमरिचानविशङ्कितः ।
कारवल्लीरसैः कुर्यान्नस्यं दष्टेऽत्रहीश्वरैः ॥ ७० ॥

दष्टानां नष्टसंज्ञानां कुर्यान्नस्याञ्जने यदि ।
रसोऽभिगृ .... .... .... ... .... ॥ ७१ ॥
(प्रयोग

.... .... .... .... .... .... ... .... ।
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ॥ ७२ ॥

अपि तक्षकदष्टानां पानमेतत्सुखप्रदम् ।
तण्डुलीयकमूलं तु पीतं तण्डुलवारिणा ॥ ७३ ॥

तक्षकेनापि संदष्टं निर्विषं कुरुते नरम् ।
सम्यङ्मधुकसारेण गोमूत्रे भावितेन तु ॥ ७४ ॥

दध्याद्विषापहं नस्यं सिध्मघ्नं च प्रलेपनम् ।
सर्पदष्टप्रदेशे तु स्वयमेव विचक्षणः ॥ ७५ ॥
मूत्रयेत क्षणादेव निर्विषत्वमवाप्नुयात् ।

धूपः ।

शिखिपत्रान्वितैर्धूपः सम्यक् सर्षपचन्दनैः ॥ ७६ ॥
देयः सर्पविनाशाय तद्विषस्य च शान्तये ।

पञ्चशिरीषागदः ।

शिरीषपत्रमूलत्वक्फलपुष्पकृतोऽगदः ॥ ७७ ॥
सिद्धः पञ्चशिरीषोऽयं चरस्थिरविषापहः ।

(चक्रपाणिः)

विषसुप्तप्रबोधनम् ।

सैन्धवं मरिचं तुल्यं निम्बबीजं तयोः समम् ॥ ७८ ॥

घृतमध्वन्वितो हन्ति विषं स्थावरजङ्गमम् ।
नक्तमालफलं व्योषं बिल्वमूलं निशाद्वयम् ॥ ७९ ॥

पुष्पं च सौरसं पिष्टमञ्जनं बस्तवारिणा ।
भोजवैतरणोद्दिष्टं विषसुप्तप्रबोधनम् ॥ ८० ॥

(तन्त्रान्तरे)

विषोपद्रवचिकित्सा ।

बिल्वस्य मूलं सुरसस्य पुष्पं फलं करञ्जस्य नतं सुराह्वम् ।
फलत्रयव्योषनिशाद्वयं च बस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥ ८१ ॥

भुजङ्गलूतोन्दुरुवृश्चिकाद्यैर्विषूचिकाजीर्णगरज्वरैश्च ।
आर्तान्नरान् भूतविधर्षितांश्च स्वस्थीकरोत्यञ्जनपाननस्यैः ॥ ८२

शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां पाननस्याञ्जने हितम् ॥ ८३ ॥

(बाङ्गदे)

सञ्जीवनो नामागदः ।

चन्दनं कुङ्कुमं कुष्ठं कांशिकाक्षाग्नियङ्गवः ।
मुस्तास्थौणेयशैलेयरोचनामदनं प्लवम् ॥ ८४ ॥

श्रीवेष्टकविळङ्गैलाविशालालमनश्शिलाः ।
सुरसप्रसवं स्पृक्का रजनीद्वयबाळकम् ॥ ८५ ॥

हिङ्गुसिद्धार्थकान् पद्मचारिणी पद्मकेसरम् ।
जात्याः पुष्पप्रवाळाश्च पुष्पमर्कशिरीषयोः ॥ ८६ ॥

हिलोध्रबृहतीकौन्तीमधुकागन्धनाकुलीः ।
मुद्गपर्णी कणा श्यामा ध्यामकं नळदं नतम् ॥ ८७ ॥

सिन्दुवारकशम्याकदेवदारुमयूरकम् ।
पुष्ये समाहृतैः पिष्टैः योज्यस्तैरगदोत्तमः ॥ ८८ ॥

सञ्जीवनः प्रागमृताद्विहितोऽयं स्वयम्भुवा ।
पाननस्याञ्जनघ्राणधूमालेपनधारणैः ॥ ८९ ॥

जीवनो विषसुप्तानां राजद्वारे जयावहः[1] ।
धन्यो धान्यधनायुःश्रीक्षेमपुष्टिसुखप्रदः ॥ ९० ॥

गृहे स्थितो विषालक्ष्मीमन्त्रज्वरगरग्रहान् ।
कृत्याकार्मणकाखोर्दव्याळजन्तुसरीसृपान् ॥ ९१ ॥

स्वप्नोपघातदुःस्वप्नतोयाग्निरिपुतस्करान् ।
निहन्त्यकालमरणमारकाशानिनिग्रहान्[2] ॥ ९२ ॥

(सङ्गवे)

कटुत्रिकं च लशुनं वचा हिङ्गु तथैव च ।
बकुळास्थि च कारञ्जं शिरीषं केतकीयुतम् ॥ ९३ ॥

---

१. 'भयापहः', २. 'निविग्रहान्' इति ख. पाठः

अश्वगन्धासमायुक्तं लांगलीकन्दसंयुतम् ।
टंकणं देवताळीं च पारतं गन्धकत्रयम् ॥ ९४ ॥

समभागानि सर्वाणि नरमूत्रेण पेषयेत् ।
गुळिकां कारयेत्तेन लेपनं नस्यमेव च ॥ ९५ ॥

सर्वसर्पहरं श्रेष्ठं मण्डलीनां विशेषतः ।

(तन्त्रान्तरे)

विषदिग्धाविद्धस्य लक्षणम् ।

विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ॥ ९६ ॥
विवर्णभावं भजते विषादं चाशु गच्छति ।
कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ॥ ९७ ॥

श्रोणिपृष्ठशिरःस्कन्धसन्धयः स्युः सवेदनाः ।
कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ॥ ९८ ॥

दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ।
आरक्तपीतपर्यन्तश्यावमध्योऽतिरुग्व्रणः ॥ ९९ ॥

शूयते[1] पच्यते सद्यो गत्वा मांसं च कृष्णताम् ।
प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ॥ १०० ॥
कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ।

विषशल्यविद्धे चिकित्सा ।

शल्यमाकृष्य तप्तेन लोहेनाशु दहेद् व्रणम् ॥ १०१ ॥

व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ।
शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ॥ १०२ ॥

(वाग्भटे)

विषभवे व्रणे तैलम् ।

समूलनालिकल्कयुक्तमम्लकाञ्जिके
क्रमेण मन्दपावके विपाच्य साधु साधितम् ।

---

1. 'सूयते' इति मुद्रिताष्टाङ्गहृदयपाठः

प्रयोजितं भिषग्वरेण तैलमाशु रोपयेद्
व्रणं सपूयवेदनं विशेषतो विषोद्भवम् ॥ १०३ ॥
(कच्छीपुरवासी)

विषार्तानामुपद्रवाः ।

ज्वरकासवमिश्वासहिध्मातृष्णातिमूर्च्छनम् ।
विड्भेदोऽतिकाठिन्यमानाहो वस्तिमूर्धरुक् ॥ १०४ ॥
श्वयथुः पूतिदंशत्वं रक्तस्रावो विषानिलः ।
इति षोडश निर्दिष्टा विषार्तानामुपद्रवाः ॥ १०५ ॥
गच्छन्त्युपेक्षया नाशं यैर्जुष्टा विषरोगिणः ।

विषज्वरे क्वाथः ।

राजवृक्षफलोशीरघनकाश्मर्यपद्मकात् ॥ १०६ ॥
क्वाथस्सशर्करक्षौद्रो विषज्वरहरः परम् ।
पीता तण्डुलतोयेन कटुका ससितोपला ॥ १०७ ॥
विषज्वरहराजाजीजीवकर्षभकोत्पलम् ।
कोलमज्जसिताधान्यं भार्ङ्गीयष्ट्याह्वकेसरम् ॥ १०८ ॥
विषज्वरवमिश्वासकासतृष्णानिबर्हणम् ।
त्रिफलारग्वधव्याघ्रीक्वाथो ज्वरविबन्धनुत् ॥ १०९ ॥
बलाबिल्ववचामुस्ताकषायस्सपुनर्नवः ।
ज्वराग्निसादश्वयथून्निहन्ति विषसम्भवान् ॥ ११० ॥

विषज्वरे वैदेहिकादि ।

वैदेहिकारामठकं कपित्थरससैन्धवम् ।
ससितं माक्षिकं लीढं कासश्वासज्वरापहम् ॥ १११ ॥

विषकासे ।

सद्राक्षानागरं कृष्णामथवा सवराघनाम् ।
लीढ्वाज्यमधुना कासान्मुच्यते विषसम्भवात् ॥ ११२ ॥

विषवम्याम् ।

विषवम्यां पिबेत् क्वाथं बिल्वमूलाद्रजोथवा ।
धात्रीपरूषकद्राक्षामधुकं पयसा द्रुतम् ॥ ११३ ॥

वेल्लाम्ब्यंजनसोशीरयष्ट्येलाकणकेसरम् ।
लिह्यान्मरिचकुम्भीं वा घृतपुष्परसद्रुताम् ॥ ११४ ॥

क्षीरिवृक्षाङ्कुरक्षौद्रसितास्तृड्वमथुच्छिदः ।
जीर्णशाल्योदनं क्षौद्रं क्षीरं चन्दनसाधितम् ॥ ११५ ॥

शीताम्भोऽनु पिबेद् भुक्त्वा विषच्छर्दिमपोहति ।

विषश्वासे ।

तैलगोविड्रसक्षौद्रैर्लिह्यात् कृष्णाग्रियङ्गुके ॥ ११६ ॥

श्वासी क्षौद्रेण वा द्राक्षाभृंगीमागधिकासिताः ।
गुळनागरवैदेहीविजयामलकानि वा ॥ ११७ ॥

विषहिध्मायाम् ।

हिध्मायां शङ्कनककटुकास्वर्णगैरिकम् ।
वेल्लशुण्ठीकणोशीररजनीद्वितयानि वा ॥ ११८ ॥

लिह्याद्वा व्योषमृद्वीकां बीजपूररसेन वा ।
सक्षौद्रं वालकरजः क्वाथं वा सगुळं पिबेत् ॥ ११९ ॥

विश्वभेषजगायत्रीहरिद्रामरदारुजम् ।
दन्तीन्द्रवारुणीद्वीपीकल्कं सौवीरकेण वा ॥ १२० ॥

तृषि मूर्च्छायाञ्च ।

तृण्मूर्छयोराशिरसोर्लेपसेका हिमा हिताः ।
अम्भोजनालकुसुमचन्दनोशीरमौक्तिकैः ॥ १२१ ॥

वैहायससितातोयक्षीराज्येक्षुरसाप्लुतैः ।
वीजनं तालवृन्तेन शीते सिकातिले स्थितिः ॥ १२२ ॥

कमलोत्पलकिञ्जल्कपटलावृतवारिषु ।
विषतृड्दाहमूर्छाघ्नं सरसीष्ववगाहनम् ॥ १२३ ॥

विषवेगसमुत्थायां तृष्णायां लाजतर्पणम् ।
शर्कराडाडिमक्षौद्रसलिलाप्लावितं पिबेत् ॥ १२४ ॥

वटवेतसजम्ब्वाम्रसेव्यतोयं च शीतलम् ।

विषजातिसारे ।

भूनिम्बमुस्तकटुकात्रायन्तीन्द्रयवान्समान् ॥ १२५ ॥

द्वौ भागौ चित्रकादष्टौ कुटजाद्वारिणा पिबेत् ।
विषातिसारोदावर्तकासश्वासज्वरापहम् ॥ १२६ ॥
लोध्रमोचरसाम्बष्ठाधातकीस्तण्डुलाम्बुना ।
समाक्षिकाः पिबेत्सद्गनागरातिविषाभयाः ॥ १२७ ॥
सधातकीस्सकुटजाः साञ्जनाः श्लक्ष्णचूर्णिताः ।
पाठानागरचूर्णं वा दध्ना युक्तं समाक्षिकम् ॥ १२८ ॥

विषजेषु बस्तिरुगादिषु ।

बस्तिरुग्वर्तनाहेषु फलवर्तिं प्रयोजयेत् ।
सारग्वधां सत्रिवृतां सोपकुल्यां हरीतकीम् ॥ १२९ ॥
पिबेद् घृतेन सक्षौद्रां बस्तिशूलादिनाशिनीम् ।
गृहधूमनतश्यामानीलिनीतण्डुलीयकैः ॥ १३० ॥
सिद्धं वाज्यं तथा सिद्धं वराक्वाथत्रिवृघृतम् ।

विषजे मूर्धरुजि ।

काकोलीक्षीरिवृक्षत्वग्द्राक्षायष्ट्याह्वशर्कराः ॥ १३१ ॥
नस्यं विषशिरोरुग्घ्नं संयोज्यं शीतवारिणा ।

विषश्वयथौ ।

श्वयथौ शुद्धकोष्ठस्य पयः पाने हितं शृतम् ॥ १३२ ॥
विश्वभेषजवैदेही कटुका देवदारुभिः ।
सुरसामूलकल्कैर्वा छागं वा पिप्पलीशृतम् ॥ १३३ ॥
त्रिफलायाः कषायेण त्रिवृता भाविता त्र्यहम् ।
आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी ॥ १३४ ॥
मधुव्योषवरावेल्लसुराह्वोशीरपद्मकैः ।
विषश्वयथुजिल्लेपस्तथा स्वादुकषायकैः ॥ १३५ ॥
शिरीषपुष्पाहिशिरोनतकुष्ठैर्घृतान्वितः ।
धूपोऽगदः श्वयथुजित्समस्तविषनाशनः ॥ १३६ ॥
अल्पेनाप्यपचारेण दंशः पूतित्वमश्नुते ।
प्रायो न सहते तीक्ष्णमुष्णं वा भेषजं विषम् ॥ १३७ ॥

विषव्रणे सेकलेपाः ।

मधुरस्निग्धशीतानि युञ्ज्याद्विषभवे व्रणे ।
सेकालेपांश्च सक्षीरैः कषायैः क्षीरिवृक्षजैः ॥ १३८ ॥

न्यग्रोधमृत्क्रममधुकतिलसर्षपसैन्धवम् ।
सामया निम्बपत्राज्यं दंशपूतित्वनाशनम् ॥ १३९ ॥

कर्णिकापातनं श्रेष्ठं विषव्रणविशोधनम् ।

विषव्रणाद्रक्तस्रावे ।

रक्ते स्रवत्यतिभृशं घृतं समरिचं पिबेत् ॥ १४० ॥

तण्डुलीयकमूलेन सितया वा समन्वितम् ।
दंशं प्रलेपयेच्चास्य दार्व्या सुश्लक्ष्णपिष्टया ॥ १४१ ॥

सितोपलाक्षौद्रघृतछागदुग्धानि नावनम् ।
शमीकल्कं पिबेच्छ्लक्ष्णमङ्गं लिम्पेद्विशालया ॥ १४२ ॥

नावने हेमशुक्ला च ततः शाम्यति शोणितम् ।

कृशस्य चेद्वस्तिप्रयोगः ।

कृशस्यातिस्रुते रक्ते रूक्षैरत्यर्थसेवितैः ॥ १४३ ॥
विषस्य च स्वभावेन मातरिश्वा प्रकुप्यति ।
उन्मादाक्षेपगमनो भ्रंशापस्मृतयस्ततः ॥ १४४ ॥

तत्रेष्टं स्नेहनं वस्तिनस्यप्रथमनाञ्जनम् ।

विषवातविकारे ।

नागदन्त्यभयाकुष्ठपिप्पलीयूषकट्फलम् ॥ १४५ ॥

भल्लातकास्थिकटुकाबिल्वप्रतिविषाग्निकाः ।
सक्षीरं तैर्घृतं सिद्धं विषवातविकारजित् ॥ १४६ ॥

पिबेदेरण्डतैलं वा छागमांसरसान्वितम् ।
ऐकध्यं घृततैलं वा मेध्यमांसरसाशनः ॥ १४७ ॥

कार्पासमूलं मरिचं हरिद्रे नलदं नलम् ।
पिप्पलीं त्वचिकां कुष्ठं जलेनालोड्य पाययेत् ॥ १४८ ॥

उन्मत्तं विषवासेन तथापस्मारिणं नरम् ।

सर्वविषे वचादिः ।

वचाहंसपदीभ्योषदधित्थं हस्तिपिप्पलीम् ॥ १४९ ॥
देवदारुबकाबिल्वकृमिजित्कुष्ठहुण्डुकम् ।
कोशातकर्ण्यविषिषाः क्षीरं सर्पिश्च पाययेत् ॥ १५० ॥

निहन्ति पानाभ्यञ्जनाभ्यां घृतं सर्वविषाणि तत् ।
प्रतिकुर्याद्यथास्वं च रोगेष्वेवं परेषु च ॥ १५१ ॥
दोषानुबन्धमालोच्य विषतन्त्राविरोधतः ।

(वाहटे)

यस्माद्रूक्षमुष्णं च तीक्ष्णं च पठितं विषम् ॥ १५२ ॥
अतः सर्वविषेषूक्ताः परिषेकास्तु शीतलाः ।
सर्वेषु सर्वावस्थेषु विषेषु न घृतोपमम् ॥ १५३ ॥

(तन्त्रान्तरे)

विषते भेषजं किञ्चिद्विशेषात्प्रबलेऽनिले ।

(वाहटे)

विषार्तानां वर्ज्यानि ।

दिवास्वप्नं व्यवायं च व्यायामं क्रोधमातपम् ॥ १५४ ॥
सुरातिलकुलत्थांश्च वर्जयेत विषातुरः ।
विदाहीन्यन्नपानानि विषार्त्तानां विवर्जयेत् ॥ १५५ ॥

(भारद्वीये)

शाकं तिलान् कुलत्थांश्च मांसं मत्स्यं दधि स्त्रियः ।
व्यायाममातपं क्रोधं विषार्तः परिवर्जयेत् ॥ १५६ ॥

(महायाने)

विषरोगिणां शीतवीर्यमौषधम् ।

शीतमेव च कुर्वीत विधानं विषरोगिणाम् ।
मुक्त्वा कीटविषं तद्धि शीतेनाभिप्रवर्धते ॥ १५७ ॥

विषार्तानां हितानि ।

शालयः षष्टिका जीर्णाः कोरदूषाः प्रियङ्गवः ।
मुद्गो हरेणुस्तुवरी पटोलं वेत्रपल्लवाः ॥ १५८ ॥
तण्डुलीयकजीवन्तीवार्ताकस्सुनिषण्णकाः ।
जाङ्गलं डाडिमं धात्री कपित्थं सैन्धवं सिता ॥ १५९ ॥
अविदाहि यदन्यच्च विज्ञायान्नस्वरूपतः ।

विषवर्धने हेतुमाह ।

क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः ॥ १६० ॥
अजीर्णवर्चोद्रवता पित्तमारुतवृद्धिभिः ।
तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः ॥ १६१ ॥
हस्तिमूषिकवादित्रनिस्स्वनैर्विषसङ्कटैः ।
पुरोवातोत्पलासोद्मदनैर्वर्धते विषम् ॥ १६२ ॥

सर्पाङ्गाभिहतलक्षणम् ।

भीरोस्तु सर्पसंस्पर्शाद् भयेन कुपितोऽनिलः ।
कदाचित्कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ॥ १६३ ॥

शङ्काविषलक्षणम् ।

दुर्गान्धकारे विद्धस्य केनचिद्दष्टशङ्कया ।
विषोद्वेगो ज्वरच्छर्दिमूर्छादाहोऽपि वा भवेत् ॥ १६४ ॥
ग्लानिर्मोहातिसारो वा तच्छङ्काविषमुच्यते ।

सर्पाङ्गाभिहतशङ्काविषयोश्चिकित्सा ।

सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ॥ १६५ ॥
नावनं मन्त्रपूताम्बुप्रोक्षणं सान्त्वहर्षणम् ।
सर्पाङ्गाभिहते कुर्यात्तथा शङ्काविषार्दिते ॥ १६६ ॥

दूषीविषलक्षणम् ।

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ।
स्वभावतो वा सगुणैर्न युक्तं दूषीविषाख्यां विषमभ्युपैति ॥ १६७ ॥
वीर्याल्पभावादविभाव्यमेतत्कफावृतं वर्षगणानुबन्धि ।

दूषीविषार्तलक्षणम् ।

तेनार्दितो भिन्नपुरीषवर्णो दुष्टास्रगेगी तृडरोचकार्तः ॥ १६८ ॥

मूर्छन् वमन् गद्गदवान्विमुह्यन्
भवेच्च दूष्योदरलिङ्गजुष्टः ।
आमाशयस्थे कफवातरोगी
पक्वाशयस्थेऽनिलपित्तरोगी ॥ १६९ ॥
भवेन्नरो ध्वस्तशिरोरुहाङ्गो विलूनपक्षः स यथा विहङ्गः ।
स्थितं रसादिष्वथवा विचित्रान् करोति धातुप्रभवान्विकारान्
॥ १७० ॥

दूषीविषस्यान्वर्थता ।

प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः ।
दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम् ॥ १७१ ॥

दूषीविषचिकित्सा ।

दूषीविषार्त सुस्विन्नमूर्ध्वं चाधश्च शोधितम् ।
दूषीविषारिमगदं लेहयेन्मधुनाप्लुतम् ॥ १७२ ॥

दूषीविषारिनामागदः ।

पिप्पल्योध्यामकं मांसीलोध्रमेलासुवर्चिका ।
कुटन्नटं नतं कुष्ठं यष्टीचन्दनगैरिकम् ॥ १७३ ॥
दूषीविषारिनाम्नोऽयं न चान्यत्रापि वार्यते ।
सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वाऽरातिचोदिताः ॥ १७४ ॥
नरमाहारसंपृक्तं यच्छन्त्यासन्नवर्तिनः ।

को नाम गर इति ।

नानाप्राण्यङ्गशमलविरुद्धौषधिभस्मनाम् ॥ १७५ ॥
विषाणां चाल्पवीर्याणां योगो गर इति स्मृतः ।

गरोपयुक्तस्य लक्षणम् ।

तेन पाण्डुः कृशोऽल्पाग्निः कासश्वासज्वरार्दितः ॥ १७६ ॥
वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः ।
महोदरयकृत्प्लीही दीनवाग्दुर्बलोऽलसः ॥ १७७ ॥
शोफवान् सततांध्मातः शुष्कपादकरः क्षयी ।

स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ॥ १७८ ॥
प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान् ।
मन्यते कृष्णमात्मानं गौरो गौरं च कालकः ॥ १७९ ॥
विकर्णनासानयनं पश्येत्तद्विहतेन्द्रियः ।
एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः ॥ १८० ॥
गरार्त्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ।

गरार्तस्य चिकित्सा ।

गरार्त्तो वान्तवान् भुक्त्वा तत्पथ्यं पानभोजनम् ॥ १८१ ॥
शुद्धहृच्छीलयेद्धेम सूक्ष्मस्थानविधेः स्मरन् ।
शर्कराक्षौद्रसंयुक्तं चूर्णं ताम्रसुवर्णयोः ॥ १८२ ॥
लेहः प्रशमयत्युग्रं सर्वयोगकृतं विषम् ।
मूर्वामृतानतकणापटोलीचव्यचित्रकान् ॥ १८३ ॥
वचामुस्तविडंगानि तक्रकोष्णाम्बुमस्तुभिः ।
पिबेद्रसेन चाम्लेन गरोपहतपावकः ॥ १८४ ॥
पारावतामिषशठीपुष्कराह्वं शृतं हिमम् ।
गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥ १८५ ॥
मार्ङ्गीनागरनिर्यूहः शिशिरश्च समाक्षिकः ।

गरेण त्वगुपहते लेपः ।

हरेणुचन्दनं श्यामानलदं श्लक्ष्णपेषितम् ॥ १८६ ॥
विलेपनं प्रयोक्तव्यं गरेणोपहतत्वचाम् ।
मञ्जिष्ठा किटिहीनिम्बरजस्यश्वत्थचन्दनैः ॥ १८७ ॥
प्रघर्षणं कृशानां तु गरेण क्षपितौजसाम् ।

गरे क्षीरसर्पिषोः शीलनम् ।

पथ्यं परममुद्दिष्टं शीलनं क्षीरसर्पिषोः ॥ १८८ ॥
विषनिम्बपटोलीनां क्वाथेन विपचेद् घृतम् ।

---

१. 'मर्मा', २. 'माम्लेन' इति पाठान्तरम् ।

अभयागागर्भिणं श्रेष्ठं तद्गरस्य निवर्हणम् ॥ १८९ ॥

हरिद्रां नाकुलीं जातीं पृथक् पिष्ट्वा विपाययेत् ।
भूतत्रयं गरार्त्तानां एतदारोग्यदं परम् ॥ १९० ॥

तण्डुलीयकमूलेन गृहधूमेन चैकतः ।
क्षीरेण च घृतं सिद्धं समस्तविषरोगजित् ॥ १९१ ॥

नागदन्ती त्रिवृद्दन्ती द्रवन्ती स्नुक्पयः पलैः ।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम् ॥ १९२ ॥

सर्पकीटविषार्त्तानां गरार्त्तानां च शान्तये ।

अजेयं सर्पिः ।

मधुकं तगरं कुष्ठं भद्रदारुहरेणवः ॥ १९३ ॥

मञ्जिष्ठैलेलवालूनि नागपुष्पोत्पलं प्लवम् ।
विडङ्गं चन्दनं पत्रं प्रियङ्गुर्ध्यामकं बला ॥ १९४ ॥

अंशुमत्यौ हरिद्रे द्वे बृहत्यौ शारिवाद्वयम् ।
एषां कल्कैर्घृतं सिद्धमजेयं नाम विश्रुतम् ॥ १९५ ॥

विषाणि हन्ति सर्वाणि शीघ्रमेव प्रयोजितम् ।

अमृतं सर्पिः ।

श्वेते कपोते बीजानि प्रत्यक्पुष्पीशिरीषयोः ॥ १९६ ॥

गोमूत्रपिष्टैस्तैः सिद्धं सर्पिर्विषहरं परम् ।
अमृतं नाम विख्यातमपि संजीवयेन्मृतम् ॥ १९७ ॥

शिरीषत्वगादिसर्पिः ।

शिरीषत्वक् त्रिकटुकं विदारीचन्दनोत्पलम् ।
द्वे बले शारिवास्फोतवृहतीनिम्बपल्लवान् ॥ १९८ ॥

बन्धुजीवाढकीमूर्वाबाह्मासुरसवत्सकान् ।
पाठाङ्कोलाश्वगन्धार्कमूलयष्ट्याह्वपद्मकम् ॥ १९९ ॥

विशालावृहतीलाक्षाकोविदारशतावरीः ।
कटभीदन्त्यपामार्गपृश्निपर्णीरसाञ्जनम् ॥ २०० ॥

श्वेतौ बाणाश्वखुरकौ कुष्ठदारुनिमञ्जिकाः ।

सारं मधूकात्रिफलां करञ्जस्य फलं वचाम् ॥ २०१ ॥
रजन्यौ लोध्रमश्वाग्नं पिष्ट्वा साध्यं घृताढकम् ।
तुल्याम्बुच्छागगोमूत्रत्र्याढके तद् विषापहम् ॥ २०२ ॥
अपस्मारक्षयोन्मादभूतग्रहगरोदरान् ।
पाण्डुरोगकृमिप्लीहगुल्मोरुस्तम्भकामिलाः ॥ २०३ ॥
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्ति सञ्जीवयति च विषोद्बन्धहतान्नरान् ॥ २०४ ॥
(संग्रहे)

अङ्कोलमूलं निष्काथ्य फाणितं सघृतं लिहेत् ।
तैलाक्तस्विन्नसर्वाङ्गो गरदोषाद्विमुच्यते ॥ २०५ ॥
(अङ्गव)

सिताचन्दनधात्रीणां चूर्णं मधुसमन्वितम् ।
भक्षयेत्प्रातरुत्थाय गरदोषनिवारणम् ॥ २०६ ॥
शुण्ठ्यङ्कोलशिफाकल्कं तत्क्वाथं वा दिनत्रयम् ।
पिबेत् गरविषार्त्तानां सम्यक् स्वास्थ्यकरं परम् ॥ २०७ ॥
स्नुक्क्षीरदन्तिनलिनीरजनीभिः प्रकल्पिता ।
गुटिका कोलमात्रा च सम्यग्गोमूत्रपेषिता ॥ २०८ ॥
भक्ष्यमाणा प्रतिदिनं चूर्णं कोष्ठप्रभेदिनी ।
गरदूषीविषार्त्तानां हितं स्यादमृतं यथा ॥ २०९ ॥
(बिन्दुसारे)

हरितालभक्षितस्य लक्षणम् ।

भक्षिते हरिताले तु हृदि दाहोरसाग्रहः ।
आनाहोऽम्लस्य वमनं पीतहारिद्रविद्स्रुतिः ॥ २१० ॥
तथा मण्डलिसर्पोक्ता विकारास्तत्र भेषजम् ।

तत्र चिकित्सा ।

विमस्य योजयेदूर्ध्वमधः संशोधितं च तत् ॥ २११ ॥
अङ्कोलशालिनीबीजमुकनासाप्रियङ्गुकाः ।

लोध्रश्यामकतालीसनतपथ्याह्वगुग्गुलु ।। २१२ ।।
ह्रीवेरं भद्रकाष्ठं च लेहयेन्मधुसर्पिषा ।
दद्यान्नकुलगोपित्तयुक्तं नस्येऽञ्जने च तत् ।। २१३ ।।

धुर्धूरकविषार्त्तस्य लक्षणम् ।

धुर्धूरकोपयोगेन सर्वं पश्यति पीतकम् ।
कम्पलालामदच्छर्दिस्मृतिभ्रंशभ्रमान्वितः ।। २१४ ।।

तच्चिकित्सा ।

तं वामयेत मधुरैः पाययेद्वा सितापयः ।
कोरदूषैर्मदनकैः प्रायो धुर्धूरवद्गदाः ।। २१५ ।।
उन्मादोऽक्षिविनाशश्च तत्रापि वमनं हितम् ।
कूश्माण्डकं च सगुडं बहुशस्तत्र भक्षयेत् ।। २१६ ।।

([illegible])

औषधादपि मन्त्रस्य श्रेष्ठत्वम् ।

विषं तेजोमयं मन्त्रैः सत्यब्रह्मतपोमयैः ।
यथा निवार्यते शीघ्रं प्रयुक्तैर्न तथौषधैः ।। २१७ ।।
न च सर्वमनुष्याणां सन्ति भेषजसम्पदः ।
अज्ञातरोगसञ्चारे योग्यता चातिदुर्लभा ।। २१८ ।।
प्रकुप्यति विषं भूयः केवलैश्चौषधैर्जितम् ।
अवाप्तौ सिद्धमन्त्राणां यतेतातश्चिकित्सकः ।। २१९ ।।

कीटाः चतुष्प्रकाराः ।

सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ।
दोषैर्व्यस्तैस्समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ।। २२० ।।

तैर्दष्टानां लक्षणम् ।

दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः ।
आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ।। २२१ ।।
पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथवा ।
कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः ।। २२२ ।।

छायाद्याः सर्वलिङ्गास्तु विवर्ज्यास्सान्निपातिकैः ।
वातपित्तोत्तराः कीटाः श्लैष्मिकाः कणभोन्दुराः ॥ २२३ ॥
प्रायो वातोल्बणविषा वृश्चिका सोग्रधूमकाः ।

वातिकविषलक्षणम् ।

हृत्पीडोर्ध्वानिलस्तम्भः सिरायामोऽस्थिपर्वरुक् ॥ २२४ ॥
घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ।

पैत्तिकविषलक्षणम् ।

संज्ञानाशोष्णनिःश्वासौ हृद्दाहः कटुकास्यता ॥ २२५ ॥
मांसावदरणं शोफो रक्तपीतश्च पैत्तिके ।

कफाधिकविषलक्षणम् ।

छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ॥ २२६ ॥
सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकं विषम् ।

तेषु यथाक्रमं लेपादयः ।

पिण्याकेन प्रणालेपस्तैलाभ्यङ्गश्च वातिके ॥ २२७ ॥
स्वेदो नालीपुलाकाद्यैः बृंहणश्च विधिर्हितः ।
पैत्तिकं स्तम्भयेत्सेकैः प्रदेहैश्चापि शीतलैः ॥ २२८ ॥
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं नयेत् ।
कीटानां त्रिप्रकाराणां त्रैविध्येन प्रतिक्रिया ॥ २२९ ॥
स्वेदलेपनसेकांस्तु कोष्णान् प्रायोऽवचारयेत् ।
अन्यत्र मूर्च्छिताद्दंशपाकतः कोथतोऽपि वा ॥ २३० ॥
विषघ्नं च विधिं कुर्यात् सर्वं संशोधनानि च ।
साधयेत्सर्पवद्दष्टान् विषोग्रैः कीटवृश्चिकैः ॥ २३१ ॥
नृकेशाः सर्षपाः पीता गुलो जीर्णश्च धूपनम् ।
विषदंशस्य सर्वस्य काश्यपः परमब्रवीत् ॥ २३२ ॥
तण्डुलीयकतुल्यांशां वृत्तां सर्पिषा पिबन् ।
याति कीटविषैः कम्पं न कैलास इवानिलैः ॥ २३३ ॥

क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ।
मुक्तालेपो वरः शोफतोददाहव्रणप्रणुत् ॥ २३४ ॥

दशाङ्गमगदम् ।

वचाहिङ्गुविलङ्गानि सैन्धवं गजपिप्पली ।
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ॥ २३५ ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।

(वाहटे)

कीटेषु मन्दं नात्युष्णं बहुवातकफं विषम् ॥ २३६ ॥
अतः कीटविषे चापि स्वेदो न प्रतिषिध्यते ।
क्षारवचानतहिङ्गुव्योषगदासिन्धुवेल्लकाम्बष्ठाः ॥ २३७ ॥
सातिविषा कीटविषं घ्नंति त्रिवृदश्मनादसर्पींषि ।

(प्रयोगा०)

कीटघ्नं तुलसीमूलं पीतं ज्येष्ठाम्बुकल्कितम् ॥ २३८ ॥
रजनीद्वयमाञ्जिष्ठापत्तङ्गगजकेसरैः ।
शीताम्बुपिष्टैरालेपः सर्वकीटविषं हरेत् ॥ २३९ ॥

(अमृतधा-)

त्वक्पत्रपुष्पाणि फलं समूलं क्वाथः शिरीषात्त्रिकटुप्रगाढः ।
क्षौद्रेण युक्तो लवणश्च वर्गो विशेषतः कीटविषं निहन्ति ॥ २४० ॥

(सौश्रुताच्च)

वृश्चिकविषलक्षणम् ।

वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।
ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ २४१ ॥
दंशः सद्योऽतिरुक् श्यावस्तुद्यते स्फुटतीव च ।
ते त्रिविधा मन्दविषा मध्यविषा महाविषा इति । तत्र
मन्दाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥ २४२ ॥
रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ।
मध्याः त्रिपर्वाणो धूम्रोदराः । कपिलारुणाः पिशङ्गाः शबलाः
चित्राः शोणिताभाः । महाविषा

अग्न्याभा श्वेतकपर्वाणः रक्तासितासितोदराः ॥ २४३ ॥

तैर्महाविषैर्दष्टः श्लथजिह्वः सज्वरः खैः शोणितं वमन् स्विद्यन् मूर्च्छन् शुष्कास्यः प्रायो जीवितं विजहाति ।

चिकित्सा ।

सद्यो वृश्चिकदंशं च चक्रतैलेन सेचयेत् ।
विदारिगन्धसिद्धेन कवोष्णेनेतरेण वा ॥ २४४ ॥
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ २४५ ॥
कपनाहो घृते भृष्टः कल्कोऽजाज्यास्ससैन्धवः ।
आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ २४६ ॥
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ।
मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ २४७ ॥
लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽथवा ।
पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ॥ २४८ ॥
पारावतशकृत्पथ्या तगरं विश्वभेषजम् ।
बीजपूररसोन्मिश्रं परमो वृश्चिकागदः ॥ २४९ ॥
ससैन्धवलोध्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् ।
हिङ्गुना हरितालेन मातुलुङ्गरसेन वा ॥ २५० ॥
लेपाञ्जनाभ्यां गुलिका परमं वृश्चिकापहा ।
करञ्जार्जुनशैलूर्यं कटभ्याः कुटजस्य च ॥ २५१ ॥
शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ।
यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ २५२ ॥
तस्य पथ्या निशा कृष्णा मञ्जिष्ठातिविषोषणम् ।
सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपयेत् ॥ २५३ ॥
सर्वत्र चोग्रालिविषे पाययेद्विसर्पिषी ।
विध्येत्सिरां विदध्याच्च वमनाञ्जननावनम् ॥ २५४ ॥
उष्णास्निग्धाम्लमधुरं भोजनं चानिलापहम् ।
नागरं गृहकपोतपुरीषं बीजपूरकरसो हरितालम् ॥ २५५ ॥

सैन्धवं च विनिहन्त्यगदोऽयं लेपतोऽलिकुलजं विषमाशु ।
नागपुरीषच्छत्रं रोहितमूलं च शेकृतोयेन ॥ २५६ ॥

कुर्याद् गुलिकां लेपादियमलिविषनाशिनी श्रेष्ठा ।
अर्कस्य दुग्धेन शिरीषबीजं त्रिर्भावितं पिप्पलिचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीटभुजङ्गलूतोन्दुरवृश्चिकानाम् ॥
(वाहटे)

काकया सह संयुक्तं श्रवणान्तर्मलं बुधः ।
कंसे करेण संघृष्य लिम्पेद् वृश्चिकहानये ॥ २५८ ॥

कराभ्यां नक्तमालस्य दलं पिष्ट्वा विचक्षणः ।
विद्धप्रदेशे बध्नीयात् सद्यो वृश्चिकनाशनम् ॥ २५९ ॥
(अमृतघा)

शिखिकुक्कुटपिच्छानि सैन्धवं तैलमेव च ।
धूपे घ्नन्ति प्रयुक्तानि कीटवृश्चिकजं विषम् ॥ २६० ॥

वृश्चिकेषूच्चिटिङ्गेषु तथा शतपदीषु च ।
उष्णो विधिर्हितः प्रोक्तः शीतस्त्वन्यत्र भूयसा ॥ २६१ ॥

पलाशबीजोऽर्कपयःप्रपिष्टः प्रलेपने कुण्डलिपत्रतीक्ष्णम् ।
तथैव जातीदलहिङ्गुसिन्धुशिलौषधं गोमयवारिपिष्टम् ॥
(सिद्धयोगसमुच्चये)

नागवल्लीदलरसं रामठेन समन्वितम् ।
कंसे करेण संपिष्य लिम्पेद् वृश्चिकहानये ॥ २६३ ॥
स्नुक्क्षीरपिष्टसिक्थेन स्पृष्ट्वा वृश्चिकजं जयेत् ।
(अमृतघा-)

कार्पासस्य दलैः सम्यग् लेपयेच्छ्लक्ष्णपेषितैः ।
दंशं वृश्चिकदष्टस्य शमार्थं घृतमिश्रितैः ॥ २६४ ॥
अर्कक्षीरेण संपिष्टा शिरीषदलमिश्रिता ।
उपकुल्या विषं हन्याद् वृश्चिकस्य प्रलेपनात् ॥ २६५ ॥
नागरं वारिणा घृष्टं नराणां नस्य कर्मणि ।
विषं वृश्चिकदष्टानां हरेदेषप्रभावतः ॥ २६६ ॥
(बिन्दुसारे)

गजमलभूतच्छत्रं रविदुग्धश्लेष्मतरुपलोपेतम् ।
वृश्चिकविषसंक्रामं बदरीतरुदण्डसंयोगात् ॥ २६७ ॥

अपहरति वृश्चिकालीं गोधाजिह्वारजःसिक्थम् ।
रामठभुजगलताया वृश्चिकमिक्ष्वाकुपत्रं वा ॥ २६८ ॥

सक्षौद्रघृतो रजनीनिर्यासः कदरपत्ररसपिष्टः ।
द्वित्रिविलुठनमात्रादलिगरलं मङ्क्षु कवलयति ॥ २६९ ॥

तनुवामभागजातं वृश्चिकविषमक्ष्णि दक्षिणे हन्यात् ।
घृष्टा वितुषा शुण्ठी दक्षिणभागविषमपरेऽक्ष्णि ॥ २७० ॥

शतपदीदष्टलक्षणम् ।

पीतः शतपदीदंशः स्वेदरुग्रागशोफवान् ।
अतसीपुष्पवर्णो वा पिळकावान् भ्रमप्रदः ॥ २७१ ॥

तच्चिकित्सा ।

स्वर्चिकाजशकृत्क्षारसुरसः साक्षपीलुकः ।
मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥ २७२ ॥

गृहगोधिकादष्टलक्षणम् ।

गृहगोधिकया स्वेदतोदश्वयथुदाहवान् ।
क्लेदी च दंशो दष्टस्य हृत्पीडा ग्रन्थिसम्भवः ॥ २७३ ॥

चिकित्सा ।

कपित्थमक्षिपीडार्कबीजं त्रिकटुकान्वितम् ।
करञ्जौ द्वे हरिद्रे च गृहगौली विषापहम् ॥ २७४ ॥

काकाण्डयुक्तः सर्वेषां विषाणां तण्डुलीयकः ।
कण्डूमान्मशकैरीषच्छ्वयथुर्मन्दवेदनः ॥ २७५ ॥

मक्षिकादंशनस्थानादयः ।

प्रायेण मक्षिका नेत्रे दशन्ति श्वयथूल्बणः ।
तद्दंशो दाहकण्डूमान् तासां तु स्थालिकां त्यजेत् ॥ २७६ ॥

तद्दष्टे पिळकाश्यावा स्रावणी भूर्युपद्रवा ।
रुग्वान् पिपीलिकादंशो वह्निनेव च दह्यते ॥ २७७ ॥

मक्षिकादंशे तगरादिप्रयोग:

तगरं नागरं नागकेसरं मरिचानि च ।
प्रयुक्तं पानलेपाभ्यां मक्षिकाविषनाशनम् ॥ २७८ ॥

(संग्रहे)

शतपुष्पासमायुक्तं सैन्धवं परिपेषितम् ।
सघृतं लेपनं दद्यान्माक्षिकाविषनाशनम् ॥ २७९ ॥

स्वक्षीरपरिपिष्टेन बीजेन परिलेपितम् ।
शिरीषस्य प्रयात्यस्तं विषं दर्दुरजं क्षणात् ॥ २८० ॥

(बिन्दुसारे)

सितासिते च लवणे मरिचं च सनागरम् ।
फणिर्जकरसोपेतं वराटीनां विषापहम् ॥ २८१ ॥

मात्स्यो दंशः सरुग्दाहः प्रागेवोक्तो जलूकसाम् ।

(संग्रहे)

सक्तुभिः कटुतैलाक्तैः सकेशैर्धूपनं हितम् ॥ २८२ ॥

अङ्कोलपत्रधूपो वा तस्य दंशोद्भवे विषे ।

(बिन्दुसारे)

जलबिन्दुनिभैः स्फोटैर्दाहकण्डूरुजान्वितैः ॥ २८३ ॥

यद्गु गात्रं दह्यतेऽत्यर्थं तं विद्यादवमूत्रितम् ।

(संग्रहे)

लूतोत्पत्तिप्रकारः ।

विश्वामित्राय रुष्टस्य वसिष्ठस्य ललाटजाः ॥ २८४ ॥
स्वेदलेशाः स्मृता लूता लूने ये पतितास्तृणे ।
खाण्डवे दह्यमानानामसुराणां शरीरतः ॥ २८५ ॥

ये स्फुलिङ्गा विनिश्चेरुस्ते लूता इति केचन ।
तीक्ष्णमध्यावरत्वेन घ्नन्ति ताश्चाचिकित्सिताः ॥ २८६ ॥

सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ।

तद्दंशसामान्यलक्षणम् ।

दंशः सामान्यतस्तासां दद्रुमण्डलसन्निभः ॥ २८७ ॥

१. 'यद् गात्रमाखिलं सोष्म तद्' मुद्रितसंग्रहपाठः

सितोऽसितोऽरुणः पीतः श्यामो वा मृदुरुन्नतः ।
मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः ॥ २८८ ॥

विसर्पवाञ्छोफयुतस्तप्यते बहुवेदनः ।
ज्वराशुपाकविक्लेदकोथावदरणान्वितः ॥ २८९ ॥

क्लेदेन यः स्पृशत्यङ्गं तत्रापि कुरुते व्रणम् ।

विषोद्गमनप्रकारः ।

श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवैः ॥ २९० ॥

अष्टाभिरुद्वमन्त्येता विषं वक्त्राद्विशेषतः ।
लूता नाभेर्दशन्त्यूर्ध्वमूर्ध्वं चाधश्च कीटकाः ॥ २९१ ॥

तद्दूषितं च वस्त्रादिदेहे पृक्तं विकारकृत् ।
दिनार्धं लक्ष्यते नैव दंशो लूताविषोद्भवः ॥ २९२ ॥

स्वल्पव्यथवदाभाति ततोऽसौ प्रथमेऽहनि ।
दिने दिनेऽस्थुग्रतरः सप्तमे हन्ति जीवितम् ॥ २९३ ॥

विषमित्यतितीक्ष्णानामितरे विभजेदतः ।
दंशः पित्तात्मको दाहतृट्स्फोटज्वरदाहवान् ॥ २९४ ॥

सशोफः कठिनः पाण्डुः कण्डूमान् श्लैष्मिकोऽल्परुक् ।
वातिकः परुषः श्यावः पर्वभेदातिरुक्करः ॥ २९५ ॥

त्रिदोषाः प्रायशस्सर्वा लूताः पित्तकफाधिकाः ।
प्राणान्तिकीषु हृन्मोहश्वासहिध्माशिरोग्रहाः ॥ २९६ ॥

श्वेतासिताः पीतरक्ताः पिळकाः श्वयथूद्भवाः ।
वेपथुर्वमथुर्दाहस्तृडान्ध्यं वक्रनासता ॥ २९७ ॥

श्यावोष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभंजनम् ।
पक्वजम्बूसवर्णं च दंशात् स्रवति शोणितम् ॥ २९८ ॥

लूताविषचिकित्सा ।

अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ।
दहेच्च जाम्बवोष्ठाद्यैर्नतु पित्तोत्तरं दहेत् ॥ २९९ ॥

कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसंश्रितम् ।
प्रसृतं सर्वतो दंशं न छिन्दीत दहेन्न च ॥ ३०० ॥

लेपयेद् दग्धमगदैर्मधुसैन्धवसंयुतैः ।
सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ॥ ३०१ ॥

सर्वतोऽपहरेद्रक्तं शृङ्गाद्यैस्सिरयापि वा ।
स्रुते रक्ते परीषेको घृतक्षीरादिभिर्हितः ॥ ३०२ ॥

स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ॥
विषस्य वृद्धये तैलमग्नेरिव तृणोलपम् ॥ ३०३ ॥

(वङ्गसेने)

पद्मकशीतोशीरं नतपाटलसेलुशारिवातोयम् ।
निर्गुण्डीगदयुक्तं लूतविषं हन्ति पानाद्यैः ॥ ३०४ ॥

(सिद्धयोगे)

नागवल्लीदलरसो दूर्वारससमन्वितः ।
प्रलेपात् कीटलूतानां वृश्चिकानां विषापहः ॥ ३०५ ॥

(अमृतधा-)

कपित्थं पाटलीसेलु शिरीषं द्वौ पुनर्नवौ ।
द्वे श्वेते चागदः सर्वलूताविषहरो गणः ॥ ३०६ ॥

(सिद्धसारे)

रामठं हरिगोपश्च मधुगोमूत्रयोजितम् ।
सर्पलूतादिगरलं हन्ति कीटेषु योजयेत् ॥ ३०७ ॥

अङ्कशो वा समूलं वा सम्पिष्योत्तमकार्णिकाम् ।
कांजिकैर्नस्यपानाद्यैर्याल्लूतादिकीटजित् ॥ ३०८ ॥

पुष्पं दलं फलं वल्कं मूलं चैव शिरीषजम् ।
योगोऽयं कीटलूतादिविषध्वान्तस्य भास्करः ॥ ३०९ ॥

(अमृत-)

लोध्रसैन्धवकुष्ठैस्तु जातीमुकुलयोजितैः ।
सक्षौद्रैर्मरिचश्शस्तो लेपो लूताविषापहः ॥ ३१० ॥

(बिन्दुसारे)

चन्दनं पद्मकं कुष्ठं नताम्बूशारिपाटलाः ।
निर्गुण्डीशारिवासेलु लूताविषहरोऽगदः ॥ ३११ ॥
(सिद्धसारे)

काकमाचीदलं मूलं सुरसस्य तथैव च ।
जातीपत्त्रकं चैव नीलं ज्योतिस्तिलं तथा ॥ ३१२ ॥
ईश्वरी शारिबा चेति लूतानां विषनाशनम् ।
(हारीत)

कटभीमूलतगरसमङ्गादेवदारुभिः ॥ ३१३ ॥
बृहतीद्वयगाङ्गेयीरोचनाचन्दनैर्घृतम् ।
सिद्धं चतुर्गुणे क्षीरे पानाभ्यञ्जनयोर्हितम् ॥ ३१४ ॥
लूताकणभकीटानां विषे परमदारुणे ।
(सङ्ग्रहे)

पिटका विविधाकारा मण्डलानि भवन्ति च ॥ ३१५ ॥
शोफा भवन्ति मृदवो रक्ता श्यावाश्चलास्तथा ।
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ॥ ३१६ ॥

मूषिकविषलिङ्गलक्षणम् ।

अष्टादशविधा मूषिकाः लालनाश्चपला इत्यादयः ।

यस्मिन्नङ्गे पतत्येषां शुक्रमङ्गैः स्पृशन्ति वा ।
नखदन्तादिभिस्तत्राङ्गे दूषिते पाण्डुतां गते ॥ ३१७ ॥
ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोऽरुचिः ॥
शीतज्वरोऽतिरुक् सादो वेपथुः पर्वभेदनम् ॥ ३१८ ॥
रोमहर्षः स्रुतिर्मूर्च्छा दीर्घकालानुबन्धनम् ।
श्लेष्मानुविद्धबह्वाखुपोतकच्छर्दनं सकृत् ॥ ३१९ ॥
व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति ।
शूनवस्ति विवर्णोष्ठमाखवाभैर्ग्रन्थिभिश्चितम् ॥ ३२० ॥
चुच्छुन्दरीसगन्धं च वर्जयेदाखुदूषितम् ।
मूर्च्छा सशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ ३२१ ॥

१. 'सकृत्', २. 'चुच्छुन्दरु', ३. 'मूर्च्छाङ्गशोफ' मुद्रितसङ्ग्रहपाठः.

शिरोगुरुत्वं लालासृक्छर्दिश्वासाध्यलक्षणम् ।

(संग्रहे)

मूषिकविषचिकित्सा ।

कपित्थपत्रसंसिद्धः कषायस्तैलसंयुतः ॥ ३२२ ॥
निहन्त्याखुविषं तस्मात्कपित्थः सर्वदा हितः ।
आस्फोतमूलसिद्धं वा पक्वकापित्थमेव वा ॥ ३२३ ॥

(तन्त्रान्तरे)

सिन्दुवारं नतं शिग्रु बिल्वमूलं पुनर्नवम् ।
वचाश्वदंष्ट्राजीमूतमेषां क्वाथं समाक्षिकम् ॥ ३२४ ॥
पिबेच्छाल्योदनं दध्ना भुञ्जानो मूषिकार्दितः ।
आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ॥ ३२५ ॥
दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकान्यथा ।
दग्धं विस्रावयेद्दंशं प्रच्छितञ्च प्रलेपयेत् ॥ ३२६ ॥

(संग्रहे)

शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ।
अगारधूममञ्जिष्ठारजनीलवणोत्तमैः ॥ ३२७ ॥
लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ।
छर्दयेन्नीलिकाक्वाथैः शुकाख्याङ्कोलयोरपि ॥ ३२८ ॥
वचामदनजीमूतकुष्ठं मूत्रेण पाययेत् ।
विरेचनं त्रिवृन्नीलीत्रिफलाकल्क इष्यते ॥ ३२९ ॥
अञ्जनं गोमयरसो व्योषसूक्ष्मरजोऽन्वितः ।
तण्डुलीयकमूलेन सिद्धं पाने घृतं हितम् ॥ ३३० ॥

(वाहटे)

पाने साहचरं मूलं सक्षौद्रं तण्डुलाम्बुना ।
पयसा वाखुदष्टस्य पिष्टा तिलकमञ्जरी ॥ ३३१ ॥
अर्कितं मूषिकविषं जिन्मार्जारसास्थि सकापित्थम् ।
सिद्धं तैलं दशगुणदुग्धे तद्धन्ति नस्याद्यैः ॥ ३३२ ॥

(सिद्धसारे)

---

१. 'वचाश्वदंष्ट्रा' मुद्रितसङ्ग्रहपाठः

कपित्थोत्थितवन्दाकं सौवीरेणैव पाययेत् ।
अष्टादशविधान् घोरान् नाशयेन्मूषिकानिदम् ॥ ३३३ ॥

मूषिकाणां विषक्षेपे बहुभिः किं विकत्थनैः ।
शिरीषरससंयुक्तैर्मत्कुणैर्नस्यमुत्तमम् ॥ ३३४ ॥

फलानि कृष्णरम्भाया मत्कुणैः सह भक्षयेत् ।

(अमृतधा-)

कार्पासपत्रस्य रसस्तैलेन तु समन्वितम् ॥ ३३५ ॥
एष मूषिकदष्टानां पानेन विषनाशनः ।
तण्डुलीयकमूलं तु लिह्यात्तत्र समाक्षिकम् ॥ ३३६ ॥
शिरीषफलकल्कं वा लिह्यादाखुविषापहम् ।

(अमृतान्तरे)

उन्मत्तस्य फलं भृष्टं गोघृतेनैव भक्षयेत् ॥ ३३७ ॥
आखुदंशात्परवशो विषं तेनैव नश्यति ।

(अमृतधा-)

मेघनादस्य मूलं च मूलं पौनर्नवं तथा ॥ ३३८ ॥
नीलीमूलं च गोक्षीरपीतमाखुविषापहम् ।
पथ्याचूर्णं गुल्युतं धूपमाखुविषे हितम् ॥ ३३९ ॥
मूषिकार्तं नरं नित्यं तक्रेणैव तु भोजयेत् ।
करञ्जस्य त्वचं चूर्णं घृतेनाखुविषापहम् ॥ ३४० ॥
सुखोदकेन वा पीतं पथ्यानागरसैन्धवम् ।

(तन्त्रान्तरे)

तगरस्वरसनिघृष्टं बैलालं कीकसं नसा पीतम् ॥ ३४१ ॥
मूषिकविषं द्रवन्तीकन्दविलेपीव नाशयति ।
प्रातः पीतः ककुभक्वाथो हन्त्याशु *वृषगरलम् ॥ ३४२ ॥
नस्यं यथा सतैलैरग्निकरसबिन्दुभिश्छिन्नैः ।
सितगदमधूकवल्कलमागधिकाहरितमञ्जरीमूलैः ॥ ३४३ ॥
पयसा पानाक्षेपो विषमिव विहगाभिहन्ति दवदहनः ।

* वृषस्य—मूषिकस्य ।

एरण्डबीजतिलशुलगुलिकागरलं मूषस्य नाशयति ॥ ३४४ ॥
चिञ्चीनागरखण्डस्वरसो वा आतपयुक्तः ।
कृष्णं तण्डुलमेकं सलिले निष्पीड्य नालिकेरस्य ॥ ३४५ ॥
तक्रेण पिबेज्जरसीमूलं वा मूषिकार्तिघ्नम् ।

(काङ्कायनरसात्)

भूनागचूर्णं पयसा पाययेन्मूषिकापहम् ॥ ३४६ ॥
मत्कुणांश्चतुरो रम्भाफले निक्षिप्य भक्षयेत् ।

(वृन्द-)

तक्रेण शरपुङ्खाया बीजं सञ्चूर्ण्य वा पिबेत् ॥ ३४७ ॥
अङ्कोलमूलकल्को वा बस्तमूत्रेण कल्कितः ।
पानालेपनयोर्युक्तः सर्वाखुविषनाशनः ॥ ३४८ ॥

(चक्रदत्ते)

वचां प्रातः प्रयत्नेन पथ्याशी तण्डुलाम्बुना ।
पिबेदाखुविषार्त्तिघ्नं त्र्यहं सप्ताहमेव वा ॥ ३४९ ॥
कपित्थदलनिर्यासं पथ्याशी मधुमिश्रितम् ।
पिबेदाखुविषार्तस्तु पुरुषः सुखवाञ्छया ॥ ३५० ॥
एवमेव हरेत्तिक्षं मूषिकस्य विषं क्षणात् ।
बिडालमांसलेपेन भक्षणेन च देहिनाम् ॥ ३५१ ॥

(बिन्दुसारे)

तैलम् ।

विश्वालूताखुकीटोद्भवविषविकृतीः सामिनीलीद्विरात्रं
हिङ्गुव्योषाग्निगन्धालशुनपटुवचाटङ्कणक्षारकल्कैः ।
निर्गुण्डीकाकमाचीशुकतरुदिनकृज्जालिनीवारि पञ्च-
प्रस्थे तैलस्य सिद्धं हरति समपयः प्रस्थमभ्यञ्जनेन ॥ ३५२ ॥

(तन्त्रान्तरादादाय श्लोकीकृतम्)

सर्पिः ।

पृश्न्यर्कालर्कगोजीनृपतरुकुटजव्याघ्रिकानक्तमाल-
क्वाथे नीलीकपित्थत्रिकटुकरजनीरोहिणीकल्कसिद्धम् ।
सर्पिर्दुग्धेन दध्ना सममपि च रसे काकमाच्यास्तु काका-
दन्या तन्मूलकल्कं शमयति सहसा मूषिकाणां विषं तत् ॥ ३५३ ॥

कपित्थपञ्चाङ्गम् ।

धात्रीवल्ककषायः कपित्थवल्कोत्थितस्त्वथवा ।
मूषिकविषजित्सर्पिः कपित्थपञ्चाङ्गसंसिद्धम् ॥ ३५४ ॥

(सहस्रयोगे)

शिरीषपञ्चाङ्गम् ।

शिरीषपञ्चाङ्गद्वादशपलं द्वादशपलप्रस्थतोये पादावशेषमुत्क्वाथ्य तत्क्वाथे द्वादशप्रस्थदुग्धनीलीदलकल्कमाम्रफलप्रमाणं नागवल्लीरसोन्मर्दनमूर्च्छितपारदं निष्कपादं चालोड्य तैलप्रस्थं विपक्वं पानाभ्यङ्गादिभिराखुविषं हन्ति ॥

(वृन्द०)

शुना दष्टस्य लक्षणम् ।

शुनः श्लेष्मोल्बणा दोषास्संज्ञां संज्ञावहाश्रिताः ।
मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ॥ ३५५ ॥
लालावानन्धबधिरः सर्वतः सोऽभिधावति ।
स्रस्तपुच्छहनुस्कन्धाशिरो दुःखी नताननः ॥ ३५६ ॥
दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ।
हृच्छिरोरुज्ज्वरस्तम्भतृष्णामूर्च्छोद्भवोऽनु च ॥ ३५७ ॥

व्यालादिदष्टस्य लक्षणम् ।

अनेनान्येऽपि बोद्धव्या व्यालदंष्ट्राप्रहारिणः ।
सृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः ॥ ३५८ ॥
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ।
विदाहरागरुक्पाकशोफग्रन्थिविकुञ्चनम् ॥ ३५९ ॥
दंशावदरणं स्फोटाः कर्णिकामण्डलानि च ।
सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे ॥ ३६० ॥

असाध्यलक्षणम् ।

दष्टो येन तु तच्चेष्टारुतं कुर्वन्विनश्यति ।
पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥ ३६१ ॥
जलदर्शनसंस्पर्शशब्देभ्यो यश्च सन्त्रसेत् ।
अदष्टमपि तं जह्याज्जलसन्त्रासरोगिणम् ॥ ३६२ ॥

अलर्कविषचिकित्सा ।

दंशं त्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ।
प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत् ॥ ३६३ ॥
व्रणस्योपरि निष्पीड्यः मत्यकुष्पीरसोऽथवा ।
तिलगुल्गुलुदूर्वाणां दाडिमस्य गुडस्य च ॥ ३६४ ॥
कल्को मुहुर्मुहुर्लेपः श्वदंशविषजित्परम् ।
मातुलुङ्गच्छदैर्दंशं बध्नीयाद्दन्तचर्वितैः ॥ ३६५ ॥
अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनम् ।
जलवेतसपत्रत्वङ्मूलं क्षुण्णं पचेज्जले ॥ ३६६ ॥
तत्क्वाथः शीतलः पीतः परं श्वविषभेषजम् ।
तत्सिद्धं च घृतं पानं नस्याभ्यञ्जनलेपनम् ॥ ३६७ ॥
जलत्रासे समस्ते च विषे तद्वद्रुदोपमम् ।

(वङ्गसेने)

अर्कक्षीरं तिलात्तैलं पललं च गुडं समम् ॥ ३६८ ॥
पानं जयति दुर्वारं तूर्णं कुक्कुरजं विषम् ।

(सिद्धसारे)

अङ्कोलोत्तरमूलाम्बु त्रिपलं सहपिप्पलम् ॥ ३६९ ॥
पिबेत्सधत्तूरफलां श्वेतां वापि पुनर्नवाम् ।
अङ्कोलोत्तरदिङ्मूलं क्षीरेण सह पाययेत् ॥ ३७० ॥
घोराणामप्यलर्काणां विषं सद्यो विनश्यति ।

(अमृतमाला)

उन्मत्तमूलेन फलेन वापि पयः पिबेत्कुक्कुरजे विषे च ॥३७१॥

मार्जारविषस्य चिकित्सा ।

निम्बं कुटजबीजानि चन्दनाञ्जनमम्बुजम् ।
क्षीरपिष्टं निहन्त्याशु [१]मार्जारविषं क्षणात् ॥ ३७२ ॥
पञ्च जीमूतकाङ्गानि तद्रसेनैव पेषयेत् ।
पुनर्गोमूत्रयुक्तोऽयमगदो बदरोपमः ॥ ३७३ ॥

१. 'नस्याभ्यङ्गैः प्रयोजयेत्', २. 'तन्मार्जार' ख. पाठः.

अलर्के च सृगालेऽपि भुजङ्गे मूषिकेषु च ।
पानाभ्यञ्जननस्येषु दातव्यो विषनाशनः ॥ ३७४ ॥

(अर्थवेतालसिद्धे)

अश्वगन्धादि घृतम् ।

यवमाषकुलत्थानां पञ्चमूलस्य चाम्भसि ।
क्षीरद्विगुणिते सर्पिः साधयेच्छ्लक्ष्णकल्कितैः ॥ ३७५ ॥

अश्वगन्धासहाकुष्ठबृहतीरजनीद्वयैः ।
विदारिनतकट्वङ्गपयस्यासिन्दुवारकैः ॥ ३७६ ॥

सर्पगन्धानखाभीरुशर्करारक्तचन्दनैः ।
श्वदंष्ट्रोपद्रवान् सर्वान् पानाभ्यङ्गैर्निहन्ति तत् ॥ ३७७ ॥

नखदन्तविषापहो लेपः ।

चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम् ।
शूयते पच्यते रागज्वरास्रावरुजान्वितम् ॥ ३७८ ॥

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ ३७९ ॥

(संग्रहे)

मञ्जिष्ठापद्मकोशीरधान्यकैः परिपेषितैः ।
सघृतैर्लेपनं दद्यान्नखदन्तविषापहम् ॥ ३८० ॥

(बिन्दुसारे)

निशादार्वीगैरिकाणां लेपः स्यान्नखदन्तजे ।
विषे गोजिह्विका वा स्यात् पिष्टा क्षौद्रसमन्विता ॥ ३८१ ॥

(चक्रदत्ते)

नील्यादिस्वरसतैलम् ।

नीलीधुर्धूरतुलसीनिर्गुण्डी किंशुकं निशा ।
अश्वगन्धा कारवल्ली स्नुग्द्वयं सर्पगन्धिका ॥ ३८२ ॥

अजानिग्रहल्लतकी खपुरः काकमाचिका ।
करञ्जलशुनागस्तिवरणं वनशिम्बिका ॥ ३८३ ॥

अपामार्गाश्वपृथुकचणकोत्तमकर्णिकाः ।
नागवल्लीं तरूपी चाणारुष्कंतिल्वकम् ॥ ३८४ ॥

देवदाली विषघ्नी च पत्राण्येषां पृथक् पृथक् ।
संक्षुद्य तेषां स्वरसे नरमूत्रेण संयुते ॥ ३८५ ॥

पिष्टैः त्रिगन्धत्रिफलालशुनव्योषहिङ्गुभिः ।
नीलीगुञ्जाफलवचावर्षाभूगिरिकर्णिभिः ॥ ३८६ ॥

महाकालाश्वगन्धार्कमूलैस्तैलं विपाचयेत् ।
तत्पक्वं नस्यपानाद्यैः सर्वसर्पविषापहम् ॥ ३८७ ॥

अष्टादशविषं हन्ति मूषिकाणां विषं क्षणात् ।
कीटलूताविषहरं आत्रेयानुमतं शुभम् ॥ ३८८ ॥

(तन्त्रान्तरे-)

अमृततैलम् ।

नीलीमूलं मधूकस्य फलं चर्म च पाचयेत् ।
तत्क्वाथे कल्कितं युञ्ज्यादजाक्षीरेण भेषजम् ॥ ३८९ ॥

मधूकास्थि करञ्जस्य बकुलस्य तथास्थि च ।
वराव्योषमपामार्गं श्वेतां च गिरिकर्णिकाम् ॥ ३९० ॥

वारुणीमिन्द्रसाह्वां च आरिबालोध्रसर्षपम् ।
किंशुकास्थि वृषदन्तीमुसलीकुष्ठचन्दनम् ॥ ३९१ ॥

कार्पासबीजलशुननिर्गुण्डीमूलधान्यकम् ।
यष्टीमधुकनिम्बत्वगञ्जनं यवसंयुतम् ॥ ३९२ ॥

तैलप्रस्थं पचेत्तत्र शनैर्मृद्वग्निना भिषक् ।
एतत्तैलं महावीर्यं नस्याभ्यञ्जनादिभिर्हरेत् ॥ ३९३ ॥

दर्वीकृतां मण्डलिनां राजिलानां तथा विषम् ।
कीटलूतोन्दुरुविषं विशेषाद्वृश्चिकोद्भवम् ॥ ३९४ ॥

अमृतं नाम विख्यातं मृतसञ्जीवनं परम् ।

शिवोदितममृततैलम् ।

ईश्वरी कदली नागी चन्द्री श्वेती वनस्तनी ॥ ३९५ ॥

निर्गुण्डी नाकुली सर्पगिरिकर्णी च गारुडी ।
शुण्ठीमरिचपाठाग्नी रामठं कटुरोहिणी ॥ ३९६ ॥

कुत्सितार्जुनकी चैव शिग्रोर्मूलं च वल्कलम् ।
एतानि समभागानि कल्कार्थं विनियोजयेत् ॥ ३९७ ॥

ईश्वरी कदली नागी चन्द्री श्वेती घनस्तनी ।
नीलीनिर्गुण्डिका चैषां पुनः शतपलं हरेत् ॥ ३९८ ॥

जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ।
तत्कषायं परिस्राव्य कल्कमत्र प्रदापयेत् ॥ ३९९ ॥

तैलाढकं भिषग्धीमान्नातितीव्रं विपाचयेत् ।
एतत्तैलं महावीर्यममृताख्यमिदं परम् ॥ ४०० ॥

बिन्दुत्रयेण देवेशि! नस्यं कुर्याद्विचक्षणः ।
निर्विषं कुरुते भद्रे! स्थावरं जङ्गमं च यत् ॥ ४०१ ॥

सर्वप्राणिहितार्थाय शिववक्त्राद्विनिस्सृतम् ।
तत्तैलं यत्र भवने नित्यमेव प्रतिष्ठितम् ॥ ४०२ ॥

तत्र नागा न हिंसन्ति विषं नाक्रमते शुभे! ।
तद्गृहाच्छरपातेन सर्पस्तत्र न विद्यते ॥ ४०३ ॥

तत्तैलं लेपयित्वा तु भेरीशंखादि ताडयेत् ।
तच्छब्दश्रवणात्सद्यो निर्विषाः स्युर्विषातुराः ॥ ४०४ ॥
(शिवरत्नचूडामणौ)

अजेयं सर्पिः ।

मधुकं तगरं कुष्ठं भद्रदारुहरेणवः ।
मञ्जिष्ठा तालपत्राणि नागपुष्पोत्पलं स्थिरा ॥ ४०५ ॥

विलङ्गं चन्दनं पत्रं प्रियंगुध्यामकं तथा ।
हरिद्रे द्वे बृहत्यौ च शारिबे सुरभी सह ॥ ४०६ ॥

कल्कैरेषां घृतं सिद्धमजेयमिति विश्रुतम् ।
विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं क्वचित् ॥ ४०७ ॥

अमृतसर्पिः ।

अपामार्गस्य बीजानि शिरीषस्य फलानि च ।
श्वेते द्वे काकमाची च गवां मूत्रेण पेषयेत् ॥ ४०८ ॥

सर्पिरेतेषु संसिद्धं विषसंशमनं परम् ।
अमृतं नामविख्यातमपि संजीवयेन्मृतम् ॥ ४०९ ॥

(सौश्रुते)

प्रशान्तदोषं प्रकृतिस्थधातु-
माहारकामं समसूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं
वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ४१० ॥

इति योगरत्नसमुच्चये विषचिकित्साधिकार
एकोनत्रिंशः ॥

---

## अथ रसायनवाजीकरणाधिकारः ।

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥

वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ॥

पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ ३ ॥

अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजीकरो वा मलिने वस्त्रे राग इवाफलः ॥ ४ ॥

ग्राम्यादीनि वर्ज्यानि ।

सर्वे च दोषा भवन्ति ग्राम्यादाहारादम्ललवणकटुकषायवि-रुद्धासात्म्यरूक्षाभिष्यन्दिक्लिन्नगुरुपूतिपर्युषितनवधान्यशुष्कशाकाम-मांसतिलकुलत्थदधिशुक्तकाञ्जिकापिष्टान्नविरूढकोनेपोवणां दिवास्वप्न-स्त्रीमद्यनित्यानां विषमातिमात्रसंक्षोभितवपुषां क्रोधलोभभयशोकायास-बहुलानां पापकर्मणामसमञ्जसाहारविहारनिर्हारनिरतानाम् ॥

वातातपसहा योगाः ।

कुलत्थदधिशुक्तानि तैलाभ्यंगाग्निसेवनम् ।
वातातपविधानेऽपि विशेषेण विवर्जयेत् ॥ ५ ॥

व्यायामातपमारुतचेतः सन्तापगुरुविदाहादि ।
उपयोगादपि परतो द्विगुणं परिवर्जयेत् कालम् ॥ ६ ॥

कुलत्थान् काकमाचीं च कपोतां च सदा त्यजेत् ।
पिबेन्माहेन्द्रमुदकं कौपं प्रस्रवणाम्बु वा ॥ ७ ॥

कुटीप्रवेशः क्षणिनां[1] परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको[2] विधिः ॥ ८ ॥

वातातपसहा योगाः ।

वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा[3] भ्रंशेऽपि ये न देहस्य बाधकाः ॥ ९ ॥

खदिरादिरसायनम् ।

खदिरासनयूषभाविताया-
स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो
यदि जीवन्त्यजराः किमत्र चित्रम् ॥ १० ॥

शीतोदकादिरसायनम् ।

शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥ ११ ॥
(वाहटे)

अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिबेत् ।
वातपित्तकफाञ्जित्वा जीवेद्वर्षशतं नरः ॥ १२ ॥
(तन्त्रान्तरे)

त्रिफलारसायनम् ।

दर्वीप्रलेपस्त्रिफलाकषाय-
स्सितोपलास्तैलमधुप्रगाढः ।
सपिप्पलीनागरलोहरेणु-
स्तनोः सपत्नीं जरसं निहन्ति ॥ १३ ॥
(संग्रहे)

अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिबेत् ।
मधुकेन तु[4] काश्मर्या पिप्पल्या क्षौद्रसर्पिषा ॥ १४ ॥

---

१. 'क्षमिणां', २. 'सूर्यमारुतिको', ३. 'सुखोपचारात' ख. ब. पाठः.
४. 'तुगाक्षर्या' मुद्रितचरकपाठः.

त्रिफला सितया चैव युक्ता सिद्धं रसायनम्।
विलङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ १५ ॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा।
भवन्त्यायुः प्रदाः पुंसां जरारोगनिवर्हिणी ॥ १६ ॥
(चरके)

त्रिफला कफपित्तघ्नी मेहकुष्ठविनाशिनी।
चक्षुष्या दीपनी चैव विषमज्वरनाशिनी ॥ १७ ॥
नाशयेद्राजयक्ष्माणं अर्शोगुल्मेषु पूजिता।
वमिकण्डूप्रशमनी नाळीव्रणविशोधिनी ॥ १८ ॥
दृष्टिप्रसादजननी मेधास्मृतिविवर्द्धनी।
घृतान्विता वा मधुनान्विता वा
गुळान्विता तैलसमन्विता वा।
एषा हि शश्वन्मनुजैः प्रयोज्या
सर्वामयान्नाशयति प्रकर्षात् ॥ १९ ॥
वातरोगेषु तैलेन पित्तरोगेषु सर्पिषा।
मधुना कफरोगेषु प्रयोज्या त्रिफला नरैः ॥ २० ॥
निष्क्वाथ्य त्रिफला पीता नाशयेत्तिमिरार्मणी।
नेत्रश्वयथुदाहार्तिरागकण्डूपरिस्रवान् ॥ २१ ॥
त्रैफलस्य तु चूर्णस्य कृत्वा पलशतं समम्।
भृङ्गराजरसेनैव कुर्यात्त्रिः सप्तभावितम् ॥ २२ ॥
लिह्यान्मधुघृताभ्यां तु पलार्धं प्रत्यहं पुमान्।
जीर्णे दुग्धोदनाहारो गुणानेतानवाप्नुयात् ॥ २३ ॥
प्रसन्नदृष्टिर्व्याधिर्जीवेद्वर्षशतानि षट्।
नीलाळिकुलसङ्काशकेशराजिर्महाबलः ॥ २४ ॥
मेधावी स्मृतिमान्धीरः स्निग्धश्यामवपुर्युवा।
सुभगश्च सुरूपश्च स्त्रीशतानन्दवर्धनः ॥ २५ ॥
प्रातर्हरीतकीं खादेन्मध्याह्ने द्वे विभीतके।
रात्रौ स्वपंश्च पुरुषश्चत्वार्यामलकानि च ॥ २६ ॥

यथेष्टचेष्टः पुरुषः षण्मासान्यः प्रयोजयेत् ।
व्याधयस्तस्य नश्यन्ति वलयः पलितानि च ॥ २७ ॥
त्रिफलाकल्ककर्षेण लोहपात्रं प्रलेपयेत् ।
तत्संस्थितमहोरात्रं तत उद्धृत्य पाययेत् ॥ २८ ॥
लिह्याद्वा मधुसर्पिर्भ्यां मानवः प्रातरुत्थितः ।
त्रिमासाद्विधिनानेन जीवेद्वर्षशतत्रयम् ॥ २९ ॥
न चैव प्रभवेन्मृत्युर्नालक्ष्मीर्न विषं गरम् ।
न चौपसर्गिकाः केऽपि रोगाश्शारीरमानसाः ॥ ३० ॥

त्रिफलां परिचूर्णयेत् समांशां
सहयष्टीमधुकां पृथक् समांशाम् ।
मधुना सह सर्पिषा दिनान्ते
पुरुषो निष्परिहारमाददीत ॥ ३१ ॥
तिमिरक्षतरक्तराजिकण्डू-
क्षणदान्धार्बुददाहतोदरागाः ।
पटलं सहकाचमर्मबाधां
शमयत्येष निषेवितः प्रयोगः ॥ ३२ ॥

(तन्त्रान्तरादिति चन्द्रटे)

हरीतकीकल्पः ।

आज्येनायसपात्रस्थां सायश्चूर्णां हरीतकीम् ।
खादतः प्रत्यहं जन्तोर्जरारोगो न जायते ॥ ३३ ॥

(बिन्दुसारे)

गुळेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥ ३४ ॥

(सङ्ग्रहे)

हरीतकी मनुष्याणां मातेव हितकारिणी ।
मातापि विक्रियां याति नोदरस्था हरीतकी ॥ ३५ ॥
हरीतकी दरिद्राणां सुखोपायं रसायनम् ।
पथ्यत्वे प्रवरा चोक्ता सर्वामयविनाशिनी ॥ ३६ ॥

तृष्णायां कण्ठशोषे च हनुस्तम्भे गळग्रहे ।
नवज्वरे तथा क्षीणे गर्भिण्यां तु न शस्यते ॥ ३७ ॥

हरीतकी भक्ष्यमाणा नागरेण गुळेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ३८ ॥

हरीतकी तु सगुळा विश्वभेषजसंयुता ।
निहन्त्यामाशये रोगान्वज्रेणेन्द्रो यथासुरान् ॥ ३९ ॥

(आश्विनसंहितायां हरीतकीकल्पे)

हरीतकीं सर्पिषि सम्प्रताप्य समश्नतस्तत् पिबतो घृतं च ।
भवेच्चिरस्थायि बलं शरीरे सकृत्कृतं साधु यथा कृतज्ञे ॥ ४० ॥

(वाहटे)

चित्रकरसायनम् ।

चित्रकः कटुकस्तिक्तः पाके चोष्णः प्रकीर्तितः ।
कटुकत्वात् कफं हन्ति तिक्तत्वात् पित्तनाशनः ॥ ४१ ॥

औष्ण्याद्धन्त्यनिलं चापि चित्रकः सर्वरोगहा ।
तैलसर्पिः पयो यूषमस्तूदश्वित्समन्वितः ॥ ४२ ॥

पेयया वापि पातव्यः कार्यो वा कुम्भचित्रकः ।
पिबेत्पथ्याशनो मासं विलालपदकं ततः ॥ ४३ ॥

तेन पीतेन कोष्ठस्था नश्यन्त्यर्शस्कृता गदाः ।
मेधावर्णस्वरकरः सर्पिषा सह योजितः ॥ ४४ ॥

रसायनविधानेन त्वजराश्च्यवनादयः ।
मेधाकान्तिवपुष्मन्तो जातास्ते देवसन्निभाः ॥ ४५ ॥

(हारीतात्)

विळङ्गादिरसायनम् ।

विळङ्गभल्लातकचित्रकाणां
गुळोत्तराणामभयान्वितानाम् ।
तैलेन चूर्णानि निषेवमाणं
शरीरिणं नोपपतन्ति रोगाः ॥ ४६ ॥

---

१. 'रसायनेनानेनस्युरजरा' ख. पाठः.

विळङ्गभल्लातकनागराणि
ये ऽश्नन्ति सर्पिर्मधुसंयुतानि ।
जरानदीं रोगतरङ्गिणीं ते
लावण्ययुक्ताः पुरुषास्तरन्ति ॥ ४७ ॥

शतावरीघृतरसायनम् ।

शतावरीकल्ककषायसिद्धं
ये सर्पिरश्नन्ति सिताद्वितीयम् ।
तान् जीविताध्वानमभिप्रपन्ना-
न्न विप्रलुम्पन्ति विकारचोराः ॥ ४८ ॥

पुनर्नवरसायनम् ।

पुनर्नवस्यार्धपलं नवस्य
पिष्टं पिबेद्यः पयसार्धमासम् ।
मासद्वयं तत्रिगुणं समां वा
जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥ ४९ ॥

वचारसायनम् ।

मासं वचामप्युपसेवमानाः
क्षीरेण तैलेन घृतेन वापि ।
भवन्ति रक्षोभिरधृष्यरूपा
मेधाविनो निर्मलमृष्टवाक्याः ॥ ५० ॥

अश्वगन्धारसायनम् ।

पीताश्वगन्धा पयसार्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्य सस्यस्य यथा सुवृष्टिः ॥ ५१ ॥

तिलकल्पः ।

दिने दिने कृष्णतिलप्रकुञ्चं
समश्नुतः शीतजलानुपानम् ।

पोषः शरीरस्य भवत्यनल्पो
दृढीभवन्त्यामरणाच्च दन्ताः ॥ ५२ ॥

(वाहटे)

वाराहीरसायनम् ।

वाराहीमूलचूर्णस्य शतं मधुयुतं क्रमात् ।
युवा स्यात् पयसा पीत्वा माषाज्यभुगथादृतः ॥ ५३ ॥

(सिद्धसारे)

वाराही रजसा पिबेत् सह पयः संवत्सरं तद्रजो
लेह्यं वा मधुसर्पिषा मधुयुतान्प्रातस्तिलान्वा भजेत् ।
त्रीण्येतानि रसायनं सितकणाविश्वायसां चूर्णवान्
सर्पिस्तैलयुतः फलत्रयरसो दर्वी प्रक्षेपी तथा ॥ ५४ ॥

(नारायणीयात् ?)

दुग्धे वा मधुनि घृते च शर्करायां
वाराही दहनपुनर्नवान् विचूर्ण्य ।
प्रक्षिप्तान् प्रतिदिनमादरेण सेवे-
त्तेजस्वी सकलगदापनोदलिप्सुः ॥ ५५ ॥

(तन्त्रान्तरे)

वाकुचीरसायनम् ।

वाकुची सतिला भुक्ता वत्सरात् कुष्ठनाशिनी ।

पथ्यादिरसायनम् ।

पथ्या चित्रकशृङ्गिबेरमुसलीच्छिन्नोद्भवानां रजः
तुल्यांशं गुळपङ्क्तिं दिनमुखे लेह्यं जनैर्नित्यशः ।
वृष्यं पुष्टिकरञ्जरापलितहृत्तेजोबलावर्धनं
सर्वव्याधिहरं रसायनमिदं कर्षोपयोगाद्भवेत् ॥ ५७ ॥

अयोभयादिरसायनम् ।

अयोऽभया चित्रकमूलचूर्णान्यरुष्करस्नेहाविमिश्रितानि ।
सितामधुभ्यां लिहतां नराणां न व्याधयो नैव जरा न मृत्युः ॥

(तन्त्रान्तरे)

व्योषादिरसायनम् ।

व्योषं कृष्णतिलं च किट्टमसनं लोहं च सैरीयकं
दोषायुग्मासिता त्रिवृत्क्रिमिहरं भृङ्गाग्निभल्लातकम् ।
श्रेष्ठा वाकुचिका च कान्तमयसस्तत्पात्रके स्थापितं
खादेत्कुष्ठहरं रसायनवरं मध्वाज्यसंयोजितम् ॥ ५९ ॥

गुग्गुलुरसायनम् ।

त्रिदोषशमनो वृष्यः स्निग्धो बृंहणदीपनः ।
गुग्गुलुः कटुकः पाके बलवर्णविवर्धनः ॥ ६० ॥

आयुष्यः श्रीकरः पुण्य स्मृतिमेधाविवर्धनः ।
पापप्रशमनः श्रेष्ठः शुक्रार्त्तवगदप्रणुत् ॥ ६१ ॥

वर्णगन्धरसोपेतो गुग्गुलुर्मात्रया हितः ।
भैषजैः सह निष्क्वाथ्यो यथा व्याधिहरैः पृथक् ॥ ६२ ॥

मात्रावशिष्टं तं ज्ञात्वा गाळयेच्छुद्धवाससा ।
मृण्मये हेमपात्रे वा राजते स्फाटिकेऽथवा ॥ ६३ ॥

दोषं देशं बलं कालं प्रसमीक्ष्य ततः पिबेत् ।
भवेन्मात्रा पलं यावत्कर्षादारभ्य मध्यमा ॥ ६४ ॥

जीर्णेऽश्नीयान्मुद्गयूषै रसैर्वा जाङ्गलैः कृतैः ।
वलीपलितनिर्मुक्तो वृद्धोऽपि तरुणो भवेत् ॥ ६५ ॥

मेधान्वितो गृध्रदृष्टिरास्येनाब्जसुगन्धिना ।
अक्षीणवीर्यो नारीषु भवेद् गच्छन् मुहुर्मुहुः ॥ ६६ ॥

न हीयते वार्धकेऽपि बलरूपवपुर्गुणैः ।
कर्षाभिवृद्ध्या तत्पेयं पलादूर्ध्वं न पययेत् ॥ ६७ ॥

बालवृद्धक्षतक्षीणगर्भिणीनां विवर्जयेत् ।
शाकगोरसवर्जी स्यात् सपरीहारभोजनः ॥ ६८ ॥

पानमैथुनयानानि रोगार्त्तः परिवर्जयेत् ।
स्वस्थश्चाप्युपयुञ्जीत नास्ति तस्य निवारणम् ॥ ६९ ॥

(हारीतात्)

मुण्डिनिकारसायनम् ।

अपत्रमूलां सफलां गृहीत्वा
केदारजां मुण्डिनिकां शुभेऽह्नि ।
प्रक्षाल्य तोयेन सुशीतलेन
छायाविशुष्कां क्रमशो विचूर्ण्य ॥ ७० ॥

तुलाद्वयं तस्य तु वस्त्रपूतं
शुष्कस्य चूर्णस्य नवे तु कुम्भे ।
स्थितं विविक्ते सुविशुद्धकोष्ठः
प्रक्षिप्य तस्माद्वदनावपूरम् ॥ ७१ ॥

निगीर्य जीर्णे प्रथमं घृतस्य
स्तोकं पिबेदग्निबलानुरूपम् ।
साकाम्लवर्ज्यं लवणेन हीनं
भुञ्जीत पश्चान्मधुरोपपन्नम् ॥ ७२ ॥

वत्सरद्वयस्यास्य घृतोपयोगात्
सुजीर्णदेहोऽपि युवा मनुष्यः ।
बलेन नागेन्द्रसमोऽतिवीर्य-
श्चिष्वचयः कुञ्चितनीलकेशः ॥ ७३ ॥

सुगन्धिगन्धः सकृदुक्तवादी
जीवेच्च पश्चाच्छ्दशतानि कान्तः ।

गोक्षुररसायनम् ।

अनिष्टपाषाणपथश्मशान-
जीर्णालयग्रामसमीपजातम् ॥ ७४ ॥

अपोह्य सुक्षेत्रनदीतटाक-
गोष्ठेषु जातं समुपाददीत ।
शरद्व्यपेतानिलमेघपङ्क्तौ
फलोन्मुखं गोक्षुरकं समूलम् ॥ ७५ ॥

१. 'विन्धेत', २. 'मधुनीप', ३. 'विपुलो मनुष्यः' ख. पाठः.

चूर्णीकृतं सान्द्रघटान्तपूतं
सुभावितं स्वेन रसेन शुद्धम् ।
तिथौ प्रशस्ते पयसा लिहेतं
कर्षाभिवृद्धया द्विपलं तु यावत् ॥ ७६ ॥

दिने दिनेऽद्याद् द्विपलं तु नित्यं
जीर्णे पयः षष्टिकभोजनं च ।
ततोऽष्टरात्रात्परतस्तु काले
वृषः ककुद्मानिव गोष्ठकेषु ॥ ७७ ॥

प्रकामकामः प्रमदास्वजस्रं
भवेदुदीर्णेन्द्रियसर्वचेष्टः ।
एवं हि गच्छेत्प्रमदासु वृद्धा
हिमेन्दुशङ्खामलकुन्दकेशी ॥ ७८ ॥

सा चापि कौमारमुपैति भावं
रूपान्विता चाप्सरसेव भाति ।
स चापि वृद्धो जनपूजनीयो
जीवेन्नरो वर्षशतं च साग्रम् ॥ ७९ ॥

अमृतवल्ल्युद्भवः ।

अथ लङ्केश्वरो मानी रावणो राक्षसेश्वरः ।
रामपत्नीं वरां सीतां जहार मदनातुरः ॥ ८० ॥
ततस्तद्बलवान् रामो रिपुं नार्यपहारिणम् ।
धृतो वानरसैन्येन जघान रणमूर्धनि ॥ ८१ ॥
हतेऽस्मिन् देवशत्रौ तु समूलबलवाहने ।
देवराजः सहस्राक्षः परितुष्टोऽथ राघवे ॥ ८२ ॥
तत्र ये वानराः केचिद्राक्षसैर्घातिता रणे ।
तानिन्द्रो जीवयामास रामप्रियचिकीर्षया ॥ ८३ ॥
संसिच्यामृतवर्षेण भगवान् पाकशासनः ।
ततो येषु प्रदेशेषु कपिगात्रपरिस्रुताः ॥ ८४ ॥

हिताय जगतः केचित् पेतुस्तेऽमृतबिन्दवः ।
अथ तेषु प्रदेशेषु तेभ्यो जाता वरौषधी ॥ ८५ ॥

गुडूची छिन्नरोहेति सैवोक्ता छिन्नरोहणात् ।
निर्दिष्टामृतवल्ली च यस्मादमृतसम्भवा ॥ ८६ ॥

कषायतिक्ता मधुरा रोचनी दीपनी हिता ।
उष्णा हृद्या च कण्ठ्या च हन्ति रक्तकफानिलान् ॥ ८७ ॥

उपयोगप्रकारः ।

अङ्गुष्ठपर्वमात्रांश्च गडूच्याः परिकल्पितान् ।
खण्डानन्यः सर्पिषा भृष्टान् खादेत्सप्त नवाथवा ॥ ८८ ॥

नरः प्रतिदिनं मासं यथेष्टाहारचेष्टितः ।
जयेत्तृष्णाभ्रमश्वासकासार्शःशूलवेपथून् ॥ ८९ ॥

पिबेन्नरोऽमृताक्वाथं एरण्डस्नेहयोजितम् ।
जयेद् गृध्रस्युदावर्तान् वातरक्तमशेषतः ॥ ९० ॥

कषायः च्छिन्नरोहाया निहन्याद्विषमज्वरान् ।
रात्रिज्वरज्वराजीर्णतृतीयकचतुर्थकान् ॥ ९१ ॥

निष्क्वाथोऽमृतवल्यास्तु शुण्ठीचूर्णसमन्वितः ।
पीतो हन्ति कटीपृष्ठपादजङ्घोरुजां रुजम् ॥ ९२ ॥

अमृतायाः पलशतं चूर्णीकृत्य तुला घृतम् ।
घृतक्षौद्रगुडानां तु प्रस्थमेकैकशः क्षिपेत् ॥ ९३ ॥

तद्यथाग्निबलं खादेन्नरो हितमिताशनः ।
नास्य कश्चिद् भवेद् व्याधिर्न जरा पलितं न च ॥ ९४ ॥

न गृध्रसी न वातास्रं न चैव विषमज्वरः ।
न च नेत्रगता रोगा वरं चैतद्रसायनम् ॥ ९५ ॥

मेधाकरं त्रिदोषघ्नं प्रयोगोऽयं विशेषतः ।

लशुनोत्पत्तिमाह ।

यतोऽमृतं वैनतेयो जहार सुरसत्तमः ॥ ९६ ॥
तस्माद् बिन्दुः पपातोर्व्यां लशुनं तत्र चाभवत् ।
रसायनाख्यं तेजस्वि बलपुष्टिविवर्धनम् ॥ ९७ ॥

सन्धानं दोषशमनं वलीपलितनाशनम् ।

कल्कं ततो व्यञ्जनसंस्कृतं वा
सिद्धं तथामं रसमिक्षुकाण्डे ।
रसोनकन्दं परिपीडितं वा
यथा तथा वाप्युपयुज्यमानम् ॥ ९९ ॥

रसायनं नैकरुजापहं स्यात्
स्त्रीणां प्रहर्षं प्रथमं करोति ।
अजास्तु वृद्धिं विरुजं च देहं
क्रमेण कुर्याद् बलवर्णयुक्तम् ॥ १०० ॥

विशोध्य देहं प्रथमं प्रयोज्यं
देवद्विजस्वस्त्ययनादि कृत्वा ।
व्यायामवातातपमैथुनानि
क्रोधं त्वजीर्णं परिवर्जयेच्च ॥ १०१ ॥

वर्जयेच्चाप्यतीसारी मेही पाण्डुगदार्शसः ।
अरोचकी गर्भिणी च मूर्च्छामदनपीडिता ।
रक्तपित्ती च शोषी च यश्च च्छर्दर्दितो नरः ॥ १०२ ॥

(तन्त्रान्तरादिति कल्पद्रुमे)

लशुनकल्पः ।

राहोरमृतचौर्येण लूनाथे पतिता गळात् ।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ १०३ ॥

द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतेर्ग्रामणीस्स रसायनम् ।
शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्बणः ॥ १०४ ॥

घनोदयेऽपि वातार्त्तः सदा वा ग्रीष्मलीलया ।
कुडुबोऽस्य परा मात्रा तदर्द्धं केवलस्य तु ॥ १०५ ॥

पलं पिष्टस्य तन्मज्जः स भक्तं प्राक् च शीलयेत् ।
प्रततं स्वेदनं चात्र वेदनायां प्रशस्यते ॥ १०६ ॥

शीताम्बुसेकः सहसा वमिमूर्च्छार्ययोर्मुखे ।
विदाहपरिहाराय परं शीतानुलेपनम् ॥ १०७ ॥

अयाम्बुगुळदुग्धस्य मांसमद्याम्लविद्विषः ।
अतितीक्ष्णैरजीर्णैश्च रसोनो व्यापदेद् ध्रुवम् ॥ १०८ ॥

पित्तकोपभयादन्ते युञ्ज्यान्मृदुविरेचनम् ।

(वाग्भटे)

पिप्पलीवर्धनम् ।

पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ॥ १०९ ॥
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ।
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्तितः ॥ ११० ॥
प्रयोगोऽयं त्रिपर्यन्तः स कनीयान्स चाबलैः ।

(चरके)

त्रिप्रस्तिवृत्तस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ॥ १११ ॥
क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ।

(संग्रहे)

वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ॥ ११२ ॥
जीर्णेऽषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥ ११३ ॥
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।
चूर्णं च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ॥ ११४ ॥
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ।
यक्ष्मामेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ॥
घ्नन्ति शोफं वमिं हिक्कां[1] प्लीहानं वातशोणितम् ॥ ११५ ॥

(वाग्भटे)

शतावरीरसायनम् ।

शतावर्या रजःप्रस्थं प्रस्थं गोक्षुरकस्य च ।
वाराह्या विंशति पलं गुडूच्याः पलविंशतिः ॥ ११६ ॥
भल्लातकस्य द्वात्रिंशच्चित्रकस्य दशैव तु ।
त्रिफलानां तु शुद्धानां प्रस्थं दद्यात्सुचूर्णितम् ॥ ११७ ॥

---

१. 'हिध्मां' मुद्रिताष्टाङ्गहृदये ख. पाठे च ।

